॥ ॐ ॥

## उपोद्घातः ।

चोदनालक्षणार्थानां श्रेयःसाधनता यया ।
उपास्महे देवतां तामेकां नानात्मना स्थिताम् ॥

यत्संस्कृतावर्थकामौ पुरुषार्थत्वमश्नुतः ।
प्रथमः पुरुषार्थेषु स धर्मः श्रेयसेऽस्तु नः ॥

इह जगति जातमात्रस्य प्राणिनः सुखे रागो दुःखे द्वेषश्च नैसर्गिको नाम । ततश्च तत्साधनेषु प्रवृत्तिनिवृत्ती च । साधनावगतिश्च तत्तद्वस्तुप्रकाशनसमर्थैस्तैस्तैरिन्द्रियैः, तदेकोपजीव्यया च सम्भावनया । साधारणमेतत्तिरश्चां तत्तद्धर्मणां मानुषाणां च । त इव तेऽपि हि दृष्टं दृष्टमुपधावन्तीदं नः प्रियमिदं नः प्रियमिति । यदेषामहंग्रहो विशरणस्वभावात् प्राणैर्ध्रियमाणात् शिरःपाणिपादलक्षणाद् भूतसङ्घातान्नान्यं तस्याप्यान्तरमुपसर्पति । आत्मानमविजानतामहमनर्थे भ्राम्यतां नैसर्गिकरागद्वेषाभ्यामभिभूतानामेषां न जातु श्रेयसेऽवसरः ।

ये पुनरधिकारमासेन शास्त्रविलोचनेन शरीरेन्द्रियमनःप्राणेभ्यो व्यतिरिक्तमात्मानमहमर्थमवबुध्य, अवबुध्य च पुनर्भवं, स्पृहयन्तः श्रेयसे, चोदनालक्षणार्थेषु प्रवर्तन्ते, न तेषां आत्मनर्थोपनिपातस्यावसरः । श्रेयसि तत्साधने तदधिकारिणि पुरुषे च शास्त्रमेव प्रमाणम् । तच्च शास्त्रमनादिनिधनमपौरुषेयं वेदाख्यं शब्दतत्त्वम् । तदङ्गतया चान्येष्वपि शिक्षादिषु शास्त्रशब्दप्रवृत्तिः । पुंसा वेदितव्यं श्रेयः श्रेयस्साधनं चानेन वेद्यत इति वेद उच्यते । अर्थलुब्धैरिन्द्रियैरितस्ततः समाकृष्यमाणमपथे प्रसर्पन्तं पुरुषमिदं कुरु, इदं मा कुर्विति शास्तीत्यतः शास्त्रमित्यप्युच्यते । श्रेयश्च भवति द्वेधा, परमपरं चेति । तत्र परमात्यन्तिकदुःखोपरमलक्षणं यन्निःश्रेयसमुच्यते । अपरं तु संसरतोऽस्य पुरुषस्य भवे भवे इहामुत्र चाभ्युदयः—समुद्गतिः । तदिदमपरं परं च श्रेयः क्रमात् ससाधनं वेदवेदान्तयोः प्रतिपाद्यते ।

तत्र च श्रेयसे विधीयन्ते विविधानि साधनानि यथाधिकारं यथाप्रयोजनम् । विधीयमानश्चायं धर्म उच्यते । खगमृगतरुगुल्मसुरनरादिनानायोनिभेदान्निम्नोन्नतेऽस्मिन् वासनापङ्किले भवपथे संसरता पुरुषेणाधरच्युतिभयाद्

अभ्युद्गतिकामनया च यो ध्रियते येन वानुष्ठितेन पुरुषोऽयं ध्रियते विधृतो नावःपतति अभ्युदेति च सोऽयं धर्म इति तु योगरूढितो धर्मशब्दप्रवृत्तिः। परे तु प्रीतिसाधनतामवयवार्थं व्याचक्षते। (काशिका—चोदनासूत्रव्याख्या, १५९ पु.) ।

अधीतवेदेनापि दुरधिगमो वेदार्थः । अतिगहनो ह्येष वेदमार्गः । आपाततश्चार्थोऽवगतः संशयविपर्ययौ नातिवर्तितुं प्रभवति, विप्रतिपत्तेश्च । अतो भगवान् जैमिनिर्महर्षिर्धर्मतत्त्वं तदधिकारिणः समवधारयन् संशयविपर्ययापनोदकन्यायनिबन्धनलक्षणं धर्मविचारात्मकं द्वादशलक्षणं शास्त्रं सूत्ररूपेण व्यरचयत् । आह चारम्भसूत्रविवरणे वार्त्तिककारः—

मतिर्बहुविदां पुंसां संशयाच्चोपजायते ।
केचिदाहुरसावर्थः केचिच्चासावयं त्विति ॥
तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रवर्तते ।

इति । तदिदं प्रथते मीमांसाशास्त्रमिति । उक्तं च तन्त्ररहस्ये — वेदवाक्यार्थसंशये सति तन्निर्णयौपयिकन्यायनिबन्धनं हि शास्त्रं मीमांसा, सा च द्वादशाध्यायी । सा च करणीभूतस्य वेदस्येतिकर्त्तव्यता, यथा चक्षुष आलोकः । तदुक्तम् —

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

इति । उक्तं च वाचस्पतिमिश्रैस्तात्पर्यटीकायाम् —
'निश्चयाय तु प्रवर्तमानं प्रमाणं तद्विषयविवेकेनानुगृह्णन् इतिकर्तव्यतात्वेनोपयुज्यते इति । यथोक्तम् —

मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः ।
सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत् ॥

पूजितविचारवचनो हि मीमांसाशब्दः, अयुक्तप्रतिषेधेन युक्ताभ्यनुज्ञानं तर्कः, प्रमाणेतिकर्तव्यतात्वेन च प्रमाणाद् वेदाद् भेद उक्तः । "सोऽतो वेदः" इत्यङ्गाङ्गिनोरभेदविवक्षया' इति ॥ (न्यायवार्तिकतात्पर्यटीका — तर्कनिरूपणम् ).

व्यरचयच्च स एव भगवान् जैमिनिरस्याः शेषभूतं चतुर्लक्षणं सङ्कर्षकाण्डम् । इतस्ततो विप्रकीर्णा वेदवाक्यार्थाः संकृष्य यस्मिन् विचार्यन्ते, सोऽयं सङ्कर्षकाण्ड उच्यते ।



तस्यास्य मीमांसाशास्त्रस्य पूर्वमीमांसेति यो व्यवहारः स शारीरकमीमांसामपेक्ष्य भवति केषाञ्चित् ।

अनयोरेकशास्त्रत्वं पूर्वैः कैश्चित्समर्थ्यते ।
निरस्यते परैरेतत् कथमप्यस्तु किं ततः ॥
पूर्वोत्तरविभागोऽयं शास्त्रयोरनयोर्द्वयोः ।
असत्यपि च शास्त्रैक्ये स्यादेवान्यनिमित्तकः ॥
कर्तृकर्मक्रियाभेदवासनावासितात्मनाम् ।
श्रेयसे चोद्यते योऽर्थः स पूर्वस्मिन् विचार्यते ॥
धर्मादन्यदधर्माद्यदन्यदस्मात्कृताकृतात् ।
अन्यद् भूताच्च भव्याद्यदुत्तरस्मिन् विचार्यते ॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
इति भावयतां पुंसां कर्म ज्ञाने समाप्यते ॥

अपसरामः प्रासङ्गिकादस्मात् । अस्या द्वादशलक्षण्या मीमांसायाः शबरस्वामिना विरचितं भाष्यमध्ययनाध्यापनादिना सर्वतो लब्धप्रचारमतिगभीरमर्थतः शब्दतश्च सकलसुमनःसेव्यं वरीवर्त्ति । उभयोरप्यनयोर्मीमांसयोर्भगवतोपवर्षेण विरचिता वृत्तिरद्य नास्त्येव केवलं विख्यायते । यस्यास्य वृत्तिकारस्य मतमनूद्यते भाष्येऽस्मिन् । द्वावस्य व्याख्यातारौ भट्टकुमारिलः प्रभाकरमिश्रश्चेति । विशेषतः प्रशंसापदं भवति भट्टकुमारिलः ।

ताथागताभिर्गाथाभिः प्रजामात्रे विमुह्यति ।
क्षणभङ्गाद्यसद्वादैस्तत्त्ववादे विदूषिते ॥
धर्माभासे जृम्भमाणे विलुप्ते वैदिके विधौ ।
श्रुतेर्जीवातुरेकोऽयमभूत् भट्टकुमारिलः ॥
निरस्य येन दिङ्नागकीर्त्यादीनां कुतर्कितम् ।
रक्षिता धर्ममीमांसा सेयं निःश्रेयसावहा ॥

इति । द्वयोरनयोर्गुरुशिष्यभावप्रथा च महती प्रवर्तते । व्याख्याग्रन्थेषु च तत्र तत्र 'आचार्या भट्टाचार्याः' इति गौरवितो निर्देशः कुमारिले प्रवर्तते । गुरव इति च प्रभाकरमिश्रे ।

बृहती लघ्वीति टीकाद्वयं प्रभाकरमिश्रेण व्यरच्यत, तयोष्टीकयोः ऋजुविमला, दीपशिखेति क्रमात् व्याख्ये शालिकनाथेन व्यरच्येताम् ।

तथान्यां शालिकानाथो नानाप्रकरणान्विताम् ।
मानमेयविवेकार्थं चक्रे यत्नेन पञ्चिकाम् ॥

टीकाद्वयं पञ्चिकां च भवनाथस्तु संक्षिपन् ।
चक्रे नयविवेकाख्यं प्रबन्धं सर्वसम्मतम् ॥

भट्टकुमारिलेन वार्त्तिकरूपा व्याख्या, बृहट्टीका चापरा व्यरच्यत । बहवः श्लोकास्तैस्तैर्व्याख्यातृभिः, परमतानुयायिभिश्च (तत्त्वसङ्ग्रहकारादिभिः सौगतैः) बृहट्टीकातः समुद्धृता इति बहूनां भवत्यभ्यूहः । तत्र तत्र व्याख्यातृभेदैर्नवो-र्भवति भूयान् मतभेदः । उक्तं च तन्त्ररहस्यारम्भे —

भिन्नं क्वचित्कुत्रचिदप्यभिन्नं
विरुद्धमेकत्र तथाऽविरुद्धम् ।
तन्त्रद्वयं चापि

इति । तं च भेदमवसरे दर्शयिष्यामः, येनास्याः काशिकाया विशेषोऽप्यव-गम्येत । तत्र प्राभाकरमतानुयायिनः शालिकनाथप्रभृतयो निबन्धकाराः । भाट्टमतानुयायिनो भट्टोम्बेकसुचरितमिश्रपार्थसारथिमिश्रप्रभृतयो बहवः । येषां कृतयोऽद्याप्यध्ययनाध्यापनसरणौ प्रकाशन्ते ।

तेनानेनाचार्येण भट्टकुमारिलेन विरचिता सेयं भाष्यव्याख्या वार्त्तिक-मिति प्रथते । इदं च वार्त्तिकलक्षणं स्मर्यते —

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥

इति । वार्त्तिकं चेदमंशतः श्लोकवार्त्तिकमित्यंशतस्तन्त्रवार्त्तिकमित्यंशतः टुप्टीकेति च संज्ञायते । तत्र प्रथमाध्यायप्रथमपादव्याख्यायाः श्लोक-वार्त्तिकमिति, प्रथमाध्यायद्वितीयपादव्याख्यातः तृतीयाध्यायव्याख्यां यावत् तन्त्रवार्त्तिकमिति, तदुपरितनव्याख्यायाः टुप्टीकेति प्रवर्तते व्यपदेशभेदः ।

तस्यास्य श्लोकवार्त्तिकस्यैका उम्बेकविरचिता तात्पर्यटीकानाम्नी व्याख्या, अपरा च सुचरितमिश्रविरचिता काशिकाख्या, इतरा च पार्थ-सारथिमिश्रविरचिता न्यायरत्नाकराख्या । निर्देशक्रमाच्चासां पौर्वापर्यम् । सौगतदर्शनप्रतिष्ठापनैकपरस्य तत्त्वसङ्ग्रहाख्यस्य वादग्रन्थस्य व्याख्याता क-मलशीलस्तस्यामेव व्याख्यायां स्वतःप्रामाण्यपरीक्षायाम् — 'उम्बेकस्त्वाह'



इत्यादिना उम्बेकमतमनूद्य निरस्यति । निरस्यमानश्चायं पक्षः श्लोक-वार्त्तिकटीकायामुम्बेककृतौ समुपलभ्यते । तस्मात् तात्पर्यटीका तत्त्वसङ्ग्रह-पञ्जिकातः प्राक्तनीति निष्पन्नम् । [3]समयश्च कमलशीलस्य कैस्ताष्टमशतकस्य पूर्वो भागः, भट्टकुमारिलस्य समयः कैस्तसप्तमशतकस्य पूर्वो भागः । ततश्च विज्ञायते तात्पर्यटीकायाः उम्बेककृतेः समयः कैस्तसप्तमशतकस्योत्तरो विभाग इति । उम्बेकश्चायं भट्टकुमारिलशिष्यः । अयमेव च भवभूति-रिति विमर्शकैर्निर्णीतचरम् । इत्थं च तिसृषु व्याख्यासु तात्पर्यटीकैव प्राथमिकीति व्यक्तमेतत् । किञ्च, काशिकायामनुमानपरिच्छेदे—

साधनं यद्यपीष्टोऽत्र व्यतिरेकोऽनुमां प्रति ।
तावता न ह्यनङ्गत्वं युक्तिः शाब्देऽभिधास्यते ॥

इत्येतच्छ्लोकव्याख्यानावसरे "तावता न ह्यनङ्गत्वमन्वयस्येत्यध्याहृत्य अत्रैवार्थे युक्तिः शाब्दे वक्ष्यते" इति व्याचक्षते, तेषामश्रुतान्वयाध्याहार एवोपालम्भः । 'न चान्वयस्य युक्तिः शाब्देऽभिधास्यते' इति यत् परव्याख्यानं निरस्तम्, तेन व्याख्यानेन उम्बेकाचार्यस्य वा पार्थसारथिमिश्राणां वा व्याख्यानेन भाव्यम् । व्याख्यातं च तथैव ताभ्याम् —

उम्बेकाचार्याणामियं व्याख्या — 'यद्यपि विपक्षव्यतिरेकस्याङ्गत्वं तथापि नान्वयनिरपेक्षस्य, असाधारणेऽपि भावादित्यर्थः' इति । (तात्पर्यटीका, ३२७) ।

पार्थसारथिमिश्राणामियं व्याख्या — 'यद्यप्येवं व्यतिरेक एवानुमानाङ्ग शाक्यानामिष्टम्, तथाप्यन्वयोऽनुमानेऽङ्गमेव, न तस्यानङ्गत्वं शक्यते वक्तुम् । अत्र च युक्तिरपोहनिराकरणपर्वणि वक्ष्यते' इति (न्यायरत्नाकरे २८८, चौखाम्बासीरीस्) ॥

व्याख्याद्वयेऽपि 'तावता न ह्यनङ्गत्वमन्वयस्य' इत्येव वाक्ययोजना अभिप्रेता भवति ।

तदेव व्याख्यानं सुचरितमिश्रैरर्थतोऽनूद्य निरस्यते । तत्र पार्थसारथि-मिश्राणां सुचरितमिश्रेभ्योऽर्वाचीनत्वं शास्त्रदीपिकाव्याख्यायां मयूख-मालिकायां समुपलभ्यमानेन 'सुचरितमिश्रमतं वार्त्तिककारासम्मतत्वात् न

१. तत्त्वसङ्ग्रहे १२ पत्रे । २. तात्पर्यटीकायां ५४ पत्रे । ३. तत्त्वसंग्रहप्रस्तावनायाम् ।

युक्तमित्याह — तदनेनेति' इत्यनेन वाक्येनावगम्यते । तस्मात् काशिकायां निरस्यमानं व्याख्यानान्तरं, उम्बेकाचार्याणामेवेति तिसृषु व्याख्यासु प्राथम्यं तात्पर्यटीकायाः, ततः पश्चात्तनत्वं काशिकायाः, ततोऽपि पश्चात्तनत्वं न्यायरत्नाकरस्येति सुनिश्चितोऽयं पौर्वापर्यक्रमः ।

प्रसङ्गादिह किञ्चिदुच्यते — परव्याख्याने योऽयमाक्षेपः सुचरितमिश्राणाम्— "नचान्वयस्यानुमानाङ्गत्वे युक्तिः शाब्दे वक्ष्यते" इति, स च 'युक्तिः शाब्दे हि वक्ष्यते इति वचनं अत्र च युक्तिरपोहनिराकरणपर्वणि वक्ष्यते' इति व्याचक्षाणैः पार्थसारथिमिश्रैर्दूरीकृतः । तथा चापोहनिराकरणपर्वणि वार्त्तिकम् —

'नचान्वयविनिर्मुक्तो प्रवृत्तिर्लिङ्गशब्दयोः ।
ताभ्यां च न विनापोहो न चासाधारणेऽन्वयः ॥
न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।'

इति । व्याख्यातं चैतत्पार्थसारथिमिश्रैः— 'शब्दलिङ्गयोश्चान्वयाधीना प्रवृत्तिः, नचान्वयग्रहणमसाधारणेन सम्भवति । तस्यातद्विषयत्वात् । अदृष्टे ह्यन्वये विपक्षवत् सपक्षेऽप्यदृष्टौ लिङ्गशब्दौ कथमिव साध्यं प्रतिपादयेताम्' । इति । अनेन चान्वयस्यानुमानाङ्गत्वं समर्थितं भवति । उम्बेकाचार्यैस्तु 'युक्तिः शाब्देऽभिधास्यते' इति प्रतीकग्रहणपूर्वकं न व्याख्यातम् । परन्तु असाधारणेऽपि भावादिति भाववर्णनमुखतो व्याख्यातम् । अपोहवादस्य शब्दप्रमाणनिरूपणतः उपमानप्रमाणादिनिरूपणैः सुदूरं व्यवहितस्यापि शब्दार्थविचारप्रकरणान्तर्गततया शाब्दत्वमक्षतमेवेति अपोहनिराकरणपर्वणीति व्याख्यानं युक्तं नाम ।

सुचरितमिश्रास्तु — शाब्दे इत्यस्य प्रमाणविभागनिरूपणान्तर्गतशब्दपरिच्छेदपरतामभिप्रेत्य 'न चान्वयस्य शाब्दे युक्तिर्वक्ष्यते' इति परव्याख्याने दोषमुद्भावयन्ति । सहन्ते च स्वयं युक्तिशब्दस्य प्रसिद्धार्थपरित्यागक्लेशम् । तेषां चेयं व्याख्या — 'युक्तिः योगः सम्बन्धः अन्वयः इत्यनर्थान्तरम् । नान्वयोऽङ्गमिति यावत्' इति । योजितश्च युक्तिशब्दः पूर्वेण, आहृतश्च एतावता नह्यनङ्गमिति पाठः । अभ्युपगम्य च तावता नह्यनङ्गत्वमिति पाठं विवक्षितार्थं क्लेशेन निर्वहन्ति । नह्यन्वयस्यानङ्गत्वमित्यध्याहृत्य



योजनातो युक्तिशब्दस्य प्रसिद्धार्थपरित्यागो नातिक्षतये इति ते मन्यन्ते । व्याचक्षते च 'शाब्दे हि वक्ष्यते' इति वार्त्तिकशेषम् — शाब्दे ह्यनुमानाद् भिन्ने प्रतीत्युत्तरकालभाविनी युक्तिरनङ्गमिति वक्ष्यते । यथा वक्ष्यति —

नाङ्गमर्थधियामेषा भवेदन्वयकल्पना । (श्लो० १३ पु० १२३)

इति । अनुमाने तु सर्वत्रैवान्वयः प्रतीत्यङ्गमितीत्यन्तेन । अत्र किञ्चित् पर्यालोचनीयम् । अयं तु श्लोको यः शब्दस्यानुमानेऽन्तर्भाववादस्तन्निरसनप्रकरणे वर्तते । तत्र प्रतिपाद्यमानार्थसारस्त्वयम् — अनुमानाङ्गतया इष्यमाणस्य अन्वयस्य व्यतिरेकस्य चासम्भवेन शब्दस्य नानुमानेऽन्तर्भावो घटते इति । तत्र प्रथममन्वयो निरस्यते, धूमवह्न्योरिव शब्दार्थयोर्न घटतेऽन्वयः, तौ हि भिन्नदेशस्थौ । गवादिशब्दस्य तदर्थभूतगोत्वादिजातेश्च विभुत्वपक्षे गवादिशब्दैर्लिङ्गैरश्वादीनामप्यर्थानां प्रत्यायनं स्यात्, न च शब्दधियः अर्थधियश्चान्वयः सम्भवति, व्यभिचारात् । अव्युत्पन्नस्य शब्दं शृण्वतोऽपि हि नार्थधीः । तथा अर्थं पश्यतोऽपि न शब्दधीः । अथ व्युत्पन्नमपेक्ष्य भवत्यनयोरन्वय इति चेत्, तर्ह्यन्य एव शब्दार्थयोः सम्बन्धोऽभ्युपगन्तव्यः, तत एव चार्थप्रत्ययात् ॥

'नाङ्गमर्थधियामेषा भवेदन्वयकल्पना ।'

एषा — सम्बन्धग्रहणसमनन्तरं सम्भाव्यमानान्वयकल्पना अर्थप्रतीतावस्यां नाङ्गं भवितुमर्हति । सम्बन्धग्रहादेवार्थप्रत्ययसिद्धेः । तस्मादन्वयनिरपेक्षं जायमानेयमर्थधीर्नानुमानम् । अथ व्यतिरेकाङ्गकतया (व्यतिरेकव्याप्त्यङ्गकतया) अर्थधीरियमनुमानं भवेदित्यपि न । न ह्यनवगतेऽर्थे तज्ज्ञानेन विना शब्दज्ञानं न भवतीति व्यतिरेकः शक्यतेऽवगन्तुम् । अवगतश्चेदर्थः, किं व्यतिरेकाश्रयणेनेति । तदेवं प्रकरणार्थे स्थिते 'नाङ्गमर्थधियामेषा भवेदन्वयकल्पना' इत्यतः अनुमाने तु सर्वत्रैवान्वयः प्रतीत्यङ्गमित्ययमर्थः कथमिव लभ्यते । अस्तु वा कथमप्यस्मिन्नर्थेऽस्याशयः 'साधनं यद्यपीष्टोऽत्र व्यतिरेकोऽनुमां प्रति तावतान्वयस्य नानङ्गत्वम्' इत्यस्मिन् व्यतिरेकमात्रस्यानुमानाङ्गत्ववादनिरसनपरे श्लोके कोऽयमनेनार्थेन लाभः । व्यतिरेकमात्रेण साध्ये सिध्यति किमन्वयकल्पनेति तु शङ्का सपदि समुन्मिषति । परेषां चेयमेव । सा हि निरसनीया ।

तामनिरस्य शङ्कान्तरसमुद्भावनं वार्त्तिकशेषस्य तत्परिहरणपरतया व्याख्यानं चेत्याद्यतिक्लिष्टम् । तस्मादिह पार्थसारथिमिश्राणां व्याख्यैव स्वरसगतिरिति ॥

अवगम्यते चास्याः काशिकायाः कुमारिलभट्टशिष्यभट्टोम्बेकविरचितवार्त्तिकव्याख्यानत इव प्रभाकरशिष्यशालिकनाथविरचितटीकाव्याख्यानतोऽप्यनन्तरकालिकत्वम् । दृश्यते हि काशिकायामनुमानव्याख्याने द्वितीयश्लोकव्याख्यानावसरे शालिकनाथोक्तेर्निरसनम् — 'पूर्वपक्षस्थितेन वार्त्तिककृता 'गम्यमानं न विशेष्यते' इति यदुक्तं तदेव दुर्लभलब्धमिव मन्वानैः कैश्चित् वल्गितमित्युपेक्षणीयमेव । सिद्धान्ते हि गम्यमानाया एव व्यक्तेर्गावो गावः शुक्ला गौरिति च विभक्त्या शब्दान्तरेण च विशेषणं भविष्यति । मञ्चाः क्रोशन्तीति च । आह च—

जातेरस्तित्वनास्तित्वे नहि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥ इति ।

(काशिका. अनु. पु. ७)

अत्र कैश्चिद्वल्गितमिति हि शालिकनाथमभिप्रेत्योच्यते । यदिदमाह शालिकनाथो ऋजुविमलानाम्न्यां टीकाव्याख्यायां अनुमानलक्षणविचारे — 'मा भूदेकदेशस्य ज्ञातसम्बन्धशब्देन निर्देशः, ज्ञातः सम्बन्धो येन पुरुषेणेति पुरुषो विशेष्यताम् । अत्रैवं सम्बन्धो भवति । ज्ञातसम्बन्धस्य पुरुषस्य बुद्धिरिति । न चानुपात्तान्यपदार्थता दोषः । बुद्धिसम्बन्धेनैव बोद्धुरुपस्थापनात् । तदपि न सम्भवति । गम्यमानार्थस्य विशेषणादर्शनात् । यदाहुर्वार्त्तिककारमिश्राः ।

गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।
शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत् ॥ इतीति ।

बृहती पञ्चिकासमेता [अ० १ पा० १ अ० ५ पृ० ११]

इदमेव तु तद्वचनम्, यत् पूर्वपक्षस्थितेन वार्त्तिककृता 'गम्यमानं न विशेष्यते' इति यदुक्तमित्यर्थतोऽनूदितम् ।

निरूपितमेतावता तिसृणां व्याख्यानां पौर्वापर्यं तत्तद्वाक्यपर्यालोचनयैव, येन व्याख्यातॄणां समयविशेषो गम्येत । व्याख्यास्वेतासु तिसृषु काशिका



प्रौढा विस्तृता गभीरशब्दसन्दर्भा गहनानेकार्थसम्भृता तत्र तत्र विपक्षनिरसने विशेषतो व्यापृता शास्त्रेऽस्मिन् निष्णातानां हृदयङ्गमा विशिष्यते व्याख्यान्तरतः । पार्थसारथिमिश्रैर्विरचिता न्यायरत्नाकराख्या व्याख्या नातिविस्तृता नातिसंक्षिप्ता शब्दतोऽर्थतश्च सरलगम्भीरा निगूढानर्थान् सुखेनावगमयन्ती विदुषामाह्लादाय कल्पते । शास्त्रदीपिकायां न्यायरत्नमालायां भाट्टनयप्रतिष्ठानैकान्तायां प्राभाकरमतनिरसनं कौमारिलनयसमर्थनं च विशेषतः कृतम् । असदृशं सर्वशास्त्रवैदुष्यमेषां तत्र प्रकाशते । न्यायरत्नाकरेऽपि तत्र तत्र विशेषस्ततोऽवगन्तव्य इति ज्ञाप्यते । तात्पर्यटीका, नातिकठिना नातिसरला अनतिविस्तृता । तिसृष्वप्यासु क्वचित् क्वचित् व्याख्यान्तरेऽनुक्तविषया निरूप्यन्ते । योजनाभेदाश्च सन्ति ॥

एकमेव भाष्यं व्याचक्षाणयोर्भट्टकुमारिलप्रभाकरयोर्मतभेदस्तत्र तत्र भूयान् वर्तते । दिङ्मात्रेण दर्शयामः — आरम्भ एवानयोरयं भावभेदः, स यथा वार्त्तिककारो मन्यते, 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिर्न केवलं वेदाध्ययनमात्रे विश्राम्यति, अर्थज्ञानार्थत्वादध्ययनस्य, अधीतेन स्वाध्यायेनार्थं भावयेदिति हि वाक्यार्थः । इदमेवाध्ययनविधिवाक्यमवलम्ब्य भगवान् जैमिनिः 'अथातो धर्मजिज्ञासा' इति सूत्रं व्यरचयत् । प्रतिक्षिप्यते चानेन सूत्रेण विश्वजिन्न्यायेनाध्ययनस्य स्वर्गार्थत्वसिद्ध्या वेदाध्ययनमात्रेण तन्निष्पत्तेस्तदर्थविचारलक्षणा धर्मजिज्ञासा अनारम्भणीयेति पूर्वपक्षः । दृष्टार्थो ह्यध्ययनविधिरयम्, प्रयोजनवदर्थावबोधी ह्ययं स्वाध्यायः । अनेन चाद्यसूत्रेण शास्त्रस्य विषयप्रयोजने दर्शिते भवत इति । तथा च वार्त्तिकम्—

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ इति ।

अथ भाष्यं व्याचक्षाणश्चेदमाह —

लोक इत्यादिभाष्यस्य षडर्थान् सम्प्रचक्ष्महे ।
भाष्यकारानुसारेण प्रयुक्तस्यादितः पृथक् ॥

सर्वव्याख्यानुपालम्भं प्रत्याख्यानं तथापरे ।
परिसङ्ख्यास्तुती केचिदथशब्दस्य दूषणम् ॥ इति ।

एषु षट्स्वर्थभेदेष्वन्तिमे पक्षे व्याख्यातुरादर इति तात्पर्यटीकातः काशिकातश्च विज्ञायते ।

प्रभाकरस्तु मन्यते— अध्यापनविधिप्रयोज्योऽयमध्ययनविधिः । अध्यापनविधिस्तु — अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत ;

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

इति च । उपनीयाध्यापनेनाचार्यकं भावयेदिति तु विध्यर्थः । अध्ययनमुपकारकमाचार्यकनियोगस्य । उपनीयाध्यापनात् हि आचार्यो भवति । अध्ययनमन्तरा च नाध्यापनं सम्भवति । तस्मादध्ययनमध्यापनार्थमिति स्थितम् । अध्यापनार्थस्याध्ययनस्य नार्थज्ञानार्थता घटेत । अन्यार्थस्यान्यार्थता हि नोपपद्यते । तस्मादविवक्षितार्थतया अध्ययनस्यानारम्भणीयो धर्मविचार इति शङ्कायां सूत्रमिदं प्रवर्तते—अथातो धर्मजिज्ञासेति । आचार्यकरणविधिप्रयोज्यत्वेऽप्यध्ययनविधेः न तन्निष्पत्तिमात्रमस्य प्रयोजनम् , बहिरङ्गत्वात् । कर्तृगामित्वादन्तरङ्गतयाऽर्थज्ञानमेवास्य मुख्यं प्रयोजनमनपोह्यम् । न चैकस्योभयार्थतानुपपत्तिः । एकः शब्दः अपरश्चार्थ इत्यविरोधात् । अधीयमानस्य स्वाध्यायस्य नैसर्गिकमर्थावबोधनसामर्थ्यं तु न विहन्यते । अतश्च मन्यते—माणवको मदर्थमिदमध्ययनमिति । तस्माद् वेदाध्ययनानन्तरम् अत एव हेतोर्धर्मविचारः कार्य इति सौत्रः सिद्धान्त इति । भाष्यं व्याचक्षाणः 'लोके' इत्यादिभाष्यं सौत्रयोरथातःशब्दयोरलौकिकार्थशङ्कानिवर्तनपरतया व्याचष्टे । तथा च टीका— लोके इत्यादिभाष्यस्याथात इत्यस्मिन् पदद्वयेऽलौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम् । कुत एतत् ? स्वाध्यायाध्ययनविधेरविवक्षितार्थत्वानिराकरणात् । कथं पुनरविवक्षाशङ्का ? स्वाध्यायाध्ययनविधेरधिकाराश्रवणात् , आचार्यकरणविधिप्रयोज्यत्वाच्च इत्यादि ॥

तदिदं गुरुमतं भट्टोम्बेकः 'अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्' इति वार्त्तिकमवतारयन् निरस्यति 'नाप्यध्ययनविधिप्रयुक्तत्वेन' इत्यादिना ग्रन्थेन । (तात्पर्यटीका. पु. ४.) सुचरितमिश्रैरपि प्रतिज्ञासूत्रे 'विरोधो युगपत्प्राप्ते'रिति वार्त्तिकं व्याचक्षाणैर्विस्तरशो निरस्तम् ।

(काशिका Vol. I. Page. ३९–४४)



चोदनासूत्रे इदमाक्षेपभाष्यम् — 'नन्वतथाभूतमप्यर्थं ब्रूयाचोदना यथा लौकिकं वचनम्— 'नद्यास्तीरे पञ्चफलानि सन्तीति, तत् तथ्यमपि भवति वितथमपि भवतीति' । इदं परिहारभाष्यम् — 'उच्यते । विप्रतिषिद्धमिदमभिधीयते । ब्रवीति च वितथं चेति' इत्यादि । वार्त्तिककारस्तदिदमुभयं 'नित्यत्वादेरसिद्धत्वात् ' इत्यादिना व्याचष्टे । टीकाकारस्तु अनेन सूत्रेण कार्य एवार्थे वेदस्य प्रामाण्यं प्रसाधयन् इमे आक्षेपपरिहारभाष्ये प्रकारान्तरेण व्याचष्टे — 'नन्वतथाभूतमर्थं ब्रूयाचोदना' इति शब्दस्यार्थसंस्पर्शितां वदन् प्रतिज्ञादोषमाह इत्यादिना ।

अत्र काशिकाकारः, तदेतत 'नित्यत्वादे'रिति वार्त्तिकमवतारयन् टीकाकारवर्णितावाक्षेपपरिहारभाष्याशयौ विस्तरेणानूद्य निरस्यति ।

तदेतच्चोदनासूत्रभाष्यं प्रकारान्तरेण व्याचक्षाणेन प्रभाकरेण कार्यविधिप्रत्ययार्थः, लौकिकस्य वैदिकस्य वा वाक्यस्य कार्येऽर्थे एव प्रामाण्यम् , तदन्वित एव च पदानां व्युत्पत्तिः, अन्वितमेवाभिधत्ते पदं, नानन्वितम् ; वेदे विध्यर्थः कार्यमपूर्वम् । स एव वेदार्थः । तस्मिन्नेव कार्ये वेदानां प्रामाण्यम् , न सिद्धेऽर्थे । इत्येष विशेषः कौमारिलात् ज्ञाप्यते । मण्डनमिश्रैर्ब्रह्मसिद्धौ सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्यं समर्थयद्भिः कार्येऽर्थे एव वेदस्य प्रामाण्यमित्येतन्निरस्तम् । शालिकनाथस्तु मण्डनमिश्रोक्तमपि निरस्यन् प्रयस्यति टीकाव्याख्यायाम् । पार्थसारथिमिश्रैः शास्त्रदीपिकायां न्यायरत्नमालायां च पराभिमतं कार्यमन्विताभिधानं च विस्तरतो निरस्तम् । कार्यस्यापूर्वस्यैव धर्मत्ववादश्च न भाष्यस्वारस्यमन्वेति । तथा च भाष्यम्—उच्यते । य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । कथमवगम्यते ? यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । यश्च यस्य कर्ता स तेन व्यपदिश्यते— यथा पाचको लावक इति, तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते । न केवलं लोके वेदेऽपि । 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन् ' इति यजतिशब्दवाच्यमेव धर्मं समामनन्तीति । उक्तं च वार्त्तिके—

धर्म इत्युपसंहार्ये यत् श्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥

अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥ इति ।

(श्लो. वा. Vol. 1. Page १५७)

अन्यच्च— अपूर्वं धर्म इति वदता धर्माख्यः कश्चनात्मगतो गुणविशेषो नैयायिकेनेवाभ्युपगतो भवति । यागादिना धर्मेण स्वर्गे जननीये द्वारतया अपूर्वं श्रुतार्थापत्तिगम्यमभ्युपगच्छतोऽपि तं शक्तिविशेषादनतिरिक्तं वदतो भट्टकुमारिलस्य मते शक्त्याख्ये गुणेऽन्तर्भावः स्वीकृतो भवति । अभ्युपगम्यते च सर्वस्मिन्नेव कारणे शक्तिरस्माभिरपि, सा पदार्थान्तरमिति प्राभाकराः, गुणविशेष इति तु कौमारिलाः । प्रतिपाद्यते चापूर्वस्य शक्तिरूपता तन्त्रवार्त्तिके—

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते ॥
श्रुतार्थापत्तिरेवैका प्रमाणं तस्य चेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेष्वागम एव नः ॥
शक्तिभिः सर्वभावानां व्यवहारानुपातिता ।
तेनान्यदेशकालेऽपि रूपे ताभिः स सिध्यति ॥
लौकिकं चापि यत् कर्म फले कालान्तरोद्भवे ।
तत्रापि शक्तिरेवास्ते न त्वपूर्वमिहेष्यते ॥ इति ।

(तन्त्रवा० अ० २ पा० १ अ० २)

वेदस्य प्रामाण्यं समर्थयद्भिर्वेदे कलङ्कसम्भावना परिहरणीया, सा चानाप्तोच्चरितत्वलक्षणा, अनाप्तानुच्चरितत्वेन तां परिहरन्तो मीमांसकाः अपौरुषेयतां प्रसाधयन्ति वेदानाम् । तत्र—वेदानामपौरुषेयत्वे निमित्तं भवति कार्यपरत्वमिति प्राभाकराः । न, पूर्वापरकोटिराहित्यं निमित्तमिति भाट्टाः । प्राभाकराणामयमाशयः —

अदृष्टपूर्वापूर्वाख्यकार्यान्वय्यर्थबोधिनः ।
वेदस्य पुरुषः कोऽपि प्रणेता नोपपद्यते ॥



न हीष्टे पुरुषः कोऽपि द्रष्टुमर्थमतीन्द्रियम् ।
तादृक्कार्यपरं वेदं को नु निर्मातुमर्हति ॥

सूत्रिता चोदनासूत्रे कार्यार्थपरता श्रुतेः । इति ।

भाट्टानां तु —

ग्रन्थानां पौरुषेयाणां स्यातां पूर्वापरावधी ।
न च वेदस्य तौ स्यातां तस्मात्कालत्रयानुगः ॥

तेन शून्यो न समयः कालयोर्भूतभाविनोः ।
तस्मादपौरुषेयत्वं वेदानां ननु सुस्थितम् ॥

यत्पूर्वापरयोः कोट्योः परैः साधनमुच्यते ।
तन्निराकरणं कृत्वा कृतार्था वेदवादिनः ॥

न सर्वस्यैकदा सर्गः न सर्वस्यैकदा लयः ।
एतेन वेदशून्योऽपि कालोऽस्तीति निराकृतम् ।

अयं भाट्टपक्षः प्राभाकरपक्षनिरसनपूर्वकं काशिकायां समर्थितः ।

(श्लो. वा. Vol. 1 Page ७१)

किञ्चिदिह विवेचयामः — वेदप्रामाण्यमसहमानान् सौगतान् प्रतिवक्तुं प्रवृत्ताः केचित् आप्ततमपरमेश्वरप्रणीतत्वात् वेदमाप्तवचनकोटावन्तर्भाव्य वेदप्रामाण्यं समर्थयन्ति । अनुमानेन परमेश्वरसमर्थनस्य दुर्घटतां पश्यन्तः, विवादग्रस्ते वेदप्रामाण्ये वेदेनेश्वरसमर्थनस्य सुतरां दौर्घट्यं पश्यन्तो मीमांसकाः प्राहुः —— वाक्यदोषो हि वक्तृदोषायत्तः ; नास्ति कश्चिदस्य वेदस्य वक्ता, न हि भारतादाविवेह कमपि वक्तारं स्मरामः, यस्य पुनरप्रामाण्यसमर्थनेऽभिनिवेशस्तेन तु समर्थनीयम् — अनेन वेदो विरचितः, स चानाप्त इति । अनाप्तोक्तत्वं नेति वदद्भिरस्माभिः प्रमाणं किमपि नान्वेष्टव्यम्, अनुपलम्भेनैव तु अनाप्तानुक्ततां वदामः, यतोऽस्य वक्ता अनाप्तो न सिद्धः, ततः सिद्धं वेदानां स्वतः प्रामाण्यमिति ॥

ननु वेदो वाक्यसमुदायविशेषलक्षणः, वाक्यस्वाभाव्यात्तेन वक्तृसापेक्षेण भाव्यम् । सत्यम् । आदिवक्ता नेत्येव ब्रूमः, येन तस्यानाप्तत्वाशङ्कया अप्रामाण्याशङ्का प्रसजेत्, भारतादौ कर्तुः स्मरणात् कर्तुरुपलब्धिरिति विशेषः ।

ननु सर्गादावादिवक्ता अभ्युपगन्तव्यः, स एवास्य कर्ता, तत्कथमकर्तृकता; हन्त भोः सर्गादिं वयं नाभ्युपगच्छामः, यथैवेदानीमध्ययनपरम्परा गुर्वध्ययनपूर्विका, सदैव तथा प्रचलति । नास्य प्रवाहस्योपरमः । इयमेव प्रवाहतो नित्यता, पदक्रमनियमे चास्वातन्त्र्यादपौरुषेयता । इति ।

वेदप्रामाण्यसमर्थने प्ररूढोऽयमेषामभिनिवेशः सुदूरमेनानपकर्षति । यदेते श्रूयमाणावपि सर्गप्रलयौ प्रतिषिध्य वेदप्रामाण्यं संरक्षितुं प्रयतन्ते ।

मा नाम जगतः सर्गो मा नाम प्रलयस्तथा ।
नित्यं च वेदाध्ययनप्रवाहः प्रचलत्वपि ॥
मिथ्यार्थवेदाध्ययनप्रवाहः स्यादयं न किम् ।
अनाप्तानुक्तता वेदे पर्यवस्यत्यनुक्तता ।
तथा च वेदे प्रामाण्यं निश्चेतुं नैव शक्यते ॥

सर्गस्थितिप्रलयकर्तुः सर्वज्ञस्य परमेश्वरस्यावधीरणेन वेदस्यापौरुषेयत्वसमर्थने संरम्भः प्रमाणसंरक्षणश्रद्धातिरेककृत इति ईश्वरवादिभिः सोढव्यं नाम । यस्त्वयमपौरुषेयत्वनिर्वहणप्रकारो वेदान्तिनाम् — सर्गाद्यकाले परमेश्वरः पूर्वपूर्वसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदम् । सजातीयोच्चारणनिरपेक्षो(स्वतन्त्रो)च्चारणविषयत्वं पौरुषेयत्वं भारतादीनाम् । वेदस्य तु पूर्वपूर्वसजातीयोच्चारणसापेक्षोच्चारणविषयत्वादपौरुषेयत्वम्, इति ।

ईश्वरं श्रद्दधानेभ्यः पक्षस्त्वेष तु रोचते ।
यस्तर्कशरमादत्ते वेदवादिजिगीषया ॥
तं प्रति प्रत्यवस्थाने युक्तो युक्तिशरग्रहः ।
कुतार्किकशराघातात् सेयं संरक्षिता त्रयी ॥
कामधेनुरिवास्माकं कांक्षितार्थाय कल्पते ।

अपरं चेदमस्मिन् सूत्रे विचारपदम्—

प्रमाणं चोदना धर्मे स्वतस्तस्याः प्रमाणता ।
प्रमाणानां च सर्वेषां प्रामाण्यं स्वत एव तु ॥
अस्यामनाप्तानुक्तायां नाप्रामाण्यस्य कारणम् ।



किञ्च—

स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते ॥
आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥
यद्यथा वर्तते वस्तु तत्तथैवावगच्छताम् ।
अवबुद्धं तदैवार्थतथात्वं स्वत एव हि ॥
बोधात्मनः प्रमाणस्य स्वभावोऽर्थावधारणम् ।
तस्मादर्थतथात्वं तु स्वत एवावगम्यते ॥
तदेव हि प्रमाणानां प्रामाण्यं किं ततोऽधिकम् ।
अन्यमर्थं सन्निकृष्टमन्यथैवावगृह्णता ॥
अर्थान्यथात्वं न तदा बुध्यते यत् प्रवर्तते ।
पश्चाद्दोषपरिस्फूर्त्या शङ्क्यते त्वप्रमाणता ॥
तस्मादेवान्यतो ग्राह्यमप्रामाण्यमिति स्थितम् ।

उक्तं च वार्तिके —

तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
(चोदनासूत्रे ५३ श्लोकः)

अनूदितं च तन्त्ररहस्ये —

आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता ।
अर्थस्य च तथाभावः प्रामाण्यमिति गीयते ॥
तस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वज्ञानाभ्यां तदपोद्यते ॥ इति
आहुः प्रामाण्यवादेऽस्मिन् सौगताः परिपन्थिनः ।
अप्रामाण्यं स्वतो भाति प्रामाण्यं परतस्त्विति ॥
केचित् स्वतस्तदुभयं परतस्त्विति केचन ।
भिक्षुपक्षप्रतिक्षेपे भूयान् वार्तिकविस्तरः ॥
व्याख्यातश्च विशेषेण वादोऽयं व्याख्ययोर्द्वयोः ।
पार्थसारथिमिश्रैस्तु परत्रापि प्रपञ्चितः ॥

अथ प्राभाकराः प्राहुः — सर्वमेव ज्ञानं यथार्थम् । यत्तु शुक्तिं पश्यत इदं रजतमिति भ्रमो भवति, तत्तु नैकं विशिष्टं ज्ञानम् । इदमिति तु संनिकृष्टशुक्तिमात्रदर्शनमगृहीतविशेषम्, रजतमिति तु स्मरणं दोषवशात् शुक्त्यंशविधुरम्, दृश्यमानस्मर्यमाणयोश्च भेदाग्रहाद् भवति रजतार्थी प्रवृत्तिः । एवं ज्ञानमात्रस्य याथार्थ्ये प्रामाण्याप्रामाण्यव्यवस्था तु अनुभूतिस्मृतिभेदव्यवस्थानिबन्धना, अनुभूतिः प्रमाणम्, स्मृतिरप्रमाणमिति । न पुनरर्थतथात्वातथात्वाभ्याम् । ज्ञानमात्रस्य याथार्थ्यं शालिकनाथेन प्रकरणपञ्चिकायां नयवीथ्यां समर्थितम् । तस्मादर्थतथात्वातथात्वलक्षणं प्रामाण्याप्रामाण्यभेदमवलम्ब्य स्वतस्त्वपरतस्त्वविचारोऽयं नोपपद्यत इति । मतमिदं तन्त्ररहस्ये विस्तरेणोपपादितम् । पार्थसारथिमिश्रैः शास्त्रदीपिकायां तन्निरस्तम् ।

प्रमाणलक्षणे चानयोर्मतभेदः, स यथा — आचार्यैस्तु — इदमविसंवादि अगृहीतग्राहि विज्ञानं प्रमाणमिति प्रमाणसामान्यलक्षणमुक्तम् । तत्र इदमिति संशयो व्युदस्यते । अविसंवादीति विपर्ययः । अगृहीतग्राहीति स्मृतिरनुवादश्च । स्मृतिरिवानुवादोऽप्यनधिकार्थतया अप्रमाणमेव । औत्पत्तिकसूत्रे— 'तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे' इत्यव्यतिरेकशब्दग्रहणात् अनुपलब्धे चार्थ इति निर्देशाच्च प्रमाणेनाविसंवादिना अगृहीतग्राहिणा च भाव्य मित्ययमर्थो गम्यते । शास्त्रदीपिकायां चेदमुक्तम् — 'न च साक्षाद् बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते, अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति 'अर्थेऽनुपलब्धे' इत्यनेनोक्तम् । एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितमगृहीतग्राहि ज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितमिति' । (शास्त्रदी. पु. ४४)। अनधिगततत्त्वार्थग्राहकं प्रमाणमिति तु निर्गलितं प्रमाणसामान्यलक्षणम् । भ्रमसंशययोरयथार्थतया तत्त्वग्राहिता नास्तीति तयोर्व्युदासः ।

इन्द्रियस्य प्रमाकरणत्वेन प्रामाण्ये स्वीक्रियमाणे तथाविधं ज्ञानं प्रमा तत्करणं प्रमाणमिति प्रमाणसामान्यलक्षणं बोध्यम् । विवक्षाधीना हि कारकप्रवृत्तिः । इन्द्रियस्य प्रमाणत्वेऽर्थसाक्षात्कारः फलम् । अर्थधियः प्रमाणत्वे हानोपादानादिः फलमिति फलफलिभावे भेदः ।

प्राभाकरास्तु ज्ञानसामान्यस्य यथार्थतया अनुभूतिः प्रमाणमित्येव प्रमाणलक्षणं वर्णयन्ति । अनुभूतिश्च स्मृतिभिन्नं ज्ञानम् । स्मृतिश्च संस्कारमात्रजन्या, संस्कारमात्राजन्यं ज्ञानं प्रमाणमिति तु प्रमाणसामान्यलक्षणं पर्यवसन्नम् ।



अथ धारावाहिकस्याप्यनुभवस्य प्रामाण्यमापतेत्, को नेति ब्रूते, ननु गृहीतग्राहिणोऽपि प्रामाण्ये स्मृतेः प्रामाण्ये कः प्रद्वेषः । संस्कारजन्यत्वादिति चेत्, संस्कारेण वा जायतामन्येन वा, पूर्वगृहीताधिकं गृह्यते नैवम् । अनुभूतित्वादेवानधिकार्थग्राहिणोऽपि प्रामाण्यम् । यत्तु धारावाहिकेऽस्य प्रामाण्यसंरक्षणाय कालकलाभेदैरधिकार्थतावर्णनम्, तत्त्वनैन्द्रियकस्यैन्द्रियकत्वकल्पनादोषकलुषितमिति । उक्तं च शालिकनाथेन — 'एतेन ये कालातिरेकेण प्रामाण्यं धारावाहिकेष्वाहुः, ते निरस्ताः' इति (ऋजु. पु. १०२) तदिदं प्राभाकरमतं (औत्पत्तिकसूत्रव्याख्याने) प्रमाणसामान्यलक्षणामित्युक्तकम् —

औत्पत्तिकगिरा दोषः कारणस्य निरस्यते ।
अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥
सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।

(श्लो. वा. Vol. २. पृ. ४)

इत्येतद्वार्तिकं व्याचक्षाणैः सुचरितमिश्रैः विस्तरेण निरस्तम् । निरस्तं च शास्त्रदीपिकायां पार्थसारथिमिश्रैः ॥

एवं धर्मलक्षणेऽर्थपदग्रहणस्य प्रयोजनं श्येनादेर्वारणमिति प्रभाकरः । ब्रह्महत्यादेरधर्मस्य वारणमिति भट्टकुमारिलः । अत्र प्राभाकरो मन्यते — 'श्येनेनाभिचरन् यजेत' इति श्येनस्य चोदिततया चोदनालक्षणत्वेऽपि तस्य शत्रुवधहेतुतया न हिंस्यादिति निषेधसंस्पर्शस्य फलतः सम्भवात् तस्य धर्मता मा प्रसजत्वित्यर्थपदग्रहणम् । भाष्यं चास्मिन्नेवार्थे स्वरसगतिकमिति ।

वार्तिककारस्तु भाष्यत आपाततः प्रतीयमानमिममर्थमाक्षिप्य सूत्रस्थचोदनाशब्दस्य प्रवर्तनानिवर्तनोभयपरतामाश्रित्य ब्रह्महत्यादावतिप्रसङ्गवारणमर्थपदप्रयोजनमाचष्टे । उभयमिह चोदनयेत्यादिभाष्यं चानुकूलतया योजयति —

प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ।
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ॥

(चोदनासू. श्लो. २१०)

इत्यादिना । आपाततो गृह्यमाणात् पक्षाद् विचार्यावधार्यमाण एव पक्षः श्रेयान् । नहि वाक्यगतिः स्वरसवाहिनीत्येतावतानुपपन्नोऽर्थ उपादेयो भवेत् । काशिकायां व्याख्यातं चैतद् विस्तरशः । उम्बेकस्त्वाह — अत्र भाष्यं स्वरसतः श्येनादिवारणमर्थपदप्रयोजनमवबोधयद् विचारयतामौदासीन्यस्य पात्रमिति । तथाहि तात्पर्यटीकायाम् — "तस्यानर्थत्वप्रतिपादनपरं 'श्येनो वज्र इषुः, इत्येवमादिभाष्यमुपेक्षणीयम् । तदुक्तम् —

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥" इति ।

(श्लो. वा. तात्पर्यटीका. पु. १०८)

ज्ञानं स्वयंप्रकाशमिति गुरुः प्रभाकरः, नेत्याचार्यः । तत्र प्राभाकराणामयमाशयः — अर्थानवभासयत् ज्ञानं स्वात्मानमपि स्वयमेवावभासयति, यथा दीपो घटादीन् प्रकाशयन् स्वात्मानं स्वयं प्रकाशयति । अवभासश्च व्यवहारयोग्यतालक्षणः, जातोऽपि घटो यावन्न ज्ञानपथमुपयाति तावन्न व्यवहारगोचरो भवति, ज्ञानं तु जातमात्रं व्यवहारपथमुपैत्येव, अत एव ज्ञानं स्वात्मानं स्वाश्रयं चाहमर्थमर्थं च घटादिकं गोचरयदेव जायते । अत एव ज्ञातमात्रे घटे घटमहं जानामीति त्रितयावगाह्युल्लेखो भवति इति ।

भाट्टानां तु ज्ञानम्, अर्थमवभासयतीत्येतावता स्वात्मानमपि स्वयमवभासयतीति न साम्प्रतम् ।

अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥

किन्तु ज्ञानेन भवति योऽर्थस्य घटादेः प्रकाशः स प्राकट्यापरनामा ज्ञानेन घटेऽर्थे जायमानः कश्चिद् गुणविशेषः, तस्य कार्यस्यान्यथानुपपत्तितः अर्थापत्तिप्रमाणेन ज्ञानं गृह्यते । न चान्यप्रकाशकेन स्वप्रकाशे स्वसजातीयसापेक्षेण न भाव्यमिति नियमः, परप्रकाशकं लिङ्गं स्वसिद्धौ भवति लिङ्गान्तरसापेक्षमिति । परैः सौगतैरभ्युपगतं सयूथ्यैः स्वीकृतं संनिहितैर्वेदान्तिभिरपि स्वीकृतं न सहते भट्टाचार्यः ॥

साक्षात्प्रतीतिः प्रत्यक्षमिति प्राभाकराः । इन्द्रियार्थसन्निकर्षजं प्रमाणं प्रत्यक्षमिति भाट्टाः । तत्र प्राभाकरा मन्यन्ते; सर्वसंवित्तीनामिवात्मस्यात्मांशयोः



प्रत्यक्षतैव, तदा तयोः स्फुटावभासात् । ऐन्द्रियकज्ञानेषु च वेद्यांशेऽपि । वित्तिमात्रं वित्तिवेत्तृवेद्यांशत्रयावगाह्येव । इत्थं च स्मृत्यादेरपि वित्तिवेत्त्रंशयोः प्रत्यक्षत्वमिन्द्रियार्थसंनिकर्षजन्यत्वस्य प्रत्यक्षलक्षणत्वे नोपपद्येत । साक्षात्प्रतीतिः प्रत्यक्षमित्येव प्रत्यक्षलक्षणं वाच्यम् । साक्षात्त्वं च विशदावभासलक्षणम्, यः परोक्षो न तस्य विशदावभासः, यस्त्वपरोक्षस्तस्य भवति विशदावभासः । ज्ञानस्य स्वयंप्रकाशस्वाभाव्यात् ज्ञानं जायमानं विशदमेवावभासते । निराश्रयस्य तस्य प्रकाशो न भवतीत्यात्मापि तथैव विशदमेव भासते । स चाहं जानामीति ज्ञाने कर्तृतयोल्लिख्यमानः यस्तु वेद्यांशः, स यदा इदमा उल्लिख्यते तदा तदंशे ज्ञानस्यापरोक्ष्यम्; यदा तु स इत्युल्लिख्यते (स्मृत्यादौ) तदा तदंशे पारोक्ष्यम् । तथा च सिद्धं ज्ञानमात्रस्यात्मांशे स्वात्मांशे च साक्षात्त्वमिति । भाट्टास्तु— इन्द्रियार्थसंनिकर्षजन्यत्वस्यैव प्रत्यक्षलक्षणता सूत्रकृदभिमता । यद्यपि 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति सूत्रं धर्मे प्रत्यक्षस्य निमित्तताप्रतिषेधाय प्रवृत्तम्, न तु प्रत्यक्षलक्षणनिरूपणाय, अथापि तेन गम्यत एवेदमस्य लक्षणम् इति प्राहुः । व्याचष्टे च वार्तिककारः —

"सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते ॥
दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ।
एवं सत्यनुवादत्वं लक्षणस्यापि सम्भवेत्" ॥

इति । (श्लो. वा. प्रत्यक्षसूत्रम् .३८)

व्याख्यातं च काशिकायां 'एवं चावयवव्याख्यायामाश्रीयमाणायां लोकसिद्धलक्षणानुवादेनाप्यनिमित्तत्वविधिर्न दुष्यतीति (श्लो. वा. Vol. I Page २२२) पार्थसारथिमिश्रैस्तु शास्त्रदीपिकायां 'किं पुनराभासासङ्कीर्णं प्रत्यक्षलक्षणम्'इत्यादिना सूत्रारूढमिदमेव लक्षणं निरूप्यते । निरस्तश्च प्राभाकरः पक्षस्तत्र तत्र ।

प्रसङ्गादिन्द्रियार्थसंनिकर्षे मतभेदमनयोर्निरूपयामः — रूपग्रहणे चक्षुःसंयुक्तसमवायः सन्निकर्षः, तथा रसग्रहणे रसनेन्द्रियसंयुक्तसमवायः, गन्धग्रहणे घ्राणेन्द्रियसंयुक्तसमवायः, एवं द्रव्यगतजातिग्रहणेऽपि । इति प्राभकराः । इष्यते चैतैः समवायो नाम पदार्थः । भाट्टास्तु मन्यन्ते —

संयुक्ततादात्म्यं तत्र सन्निकर्षः, जातिगुणौ हि स्वाश्रयतो भिन्नाभिन्नस्वभावा-विति । शब्दस्याकाशगुणतया श्रोत्रस्य च कर्णविवरवर्त्याकाशरूपतया समवाय एव संनिकर्षः इति प्राभाकराः, भाट्टास्तु—शब्दस्य द्रव्यत्वात् संयोग एव संनिकर्षः, नित्यत्वं विभुत्वं च स्वीकुर्वद्भिरेतैर्विभुद्वयसंयोगोऽपीष्यते । अभावो नाम पदार्थ एव प्राभाकरैर्नेष्यते । इष्यमाणोऽपि भाट्टैरनुपलब्धिस्तत्र प्रमाणान्तरमिति न विशेषणविशेष्यभावः संनिकर्षः । इति ।

तत्र तत्रैवमनयोर्मिथो विवदमानयोः ।
सौगतानां प्रतिक्षेपे त्वैकहार्दं प्रतिष्ठितम् ॥

वेदानामर्थतथात्वं द्रढयता शबरस्वामिना वेदविरोधिनां सौगतानां क्षणिकविज्ञानवादशून्यवादौ निरस्तौ नाम । वार्त्तिककृता तद्विवरणावसरे स सौगतः पक्षो विशेषतो निरस्तः । भूयानभिनिवेशः सौगतमतनिरासे भट्टाचार्याणाम्, महान् ग्रन्थविस्तरश्चात्र । उद्योतकरप्रभृतिभिर्नैयायिकैः, विशेषतो भट्टाचार्येण च निरस्तं स्वमतं समुद्दिधीर्षुः शान्तरक्षितो नाम ताथागतपथप्रतिष्ठापकः तत्त्वसंग्रहाख्यं वादग्रन्थं कारिकात्मकं व्यरचयत्, यत्र नैरात्म्यवादस्थापनाय सर्व एव तत्तद्दर्शनकारसमादृतात्मवादस्थापनाप्रकाराः निरस्ताः, निरस्तश्चोद्योतकरप्रभृतीनां क्षणभङ्गादिप्रतिक्षेपका वादाः । भूयसा च ग्रन्थेन कुमारिलभट्टनिदर्शितान् स्वपक्षदोषान्निरस्य तदीयः पक्षोऽपि च निरस्तः । सर्वज्ञपरीक्षायां स्वतःप्रामाण्यपरीक्षायां वेदानामपौरुषेयत्वपरीक्षायां वार्त्तिकतो बृहट्टीकातश्च बहवः श्लोका अनूद्य निरस्ताः । तस्माद्यथा मीमांसकेषु स्वसमयप्रतिष्ठापको भट्टाचार्यः समभवत् तथा तत्कालतः पश्चात् शान्तरक्षितः स्वसमयप्रतिष्ठापकः समभवत् ।

श्लोकवार्त्तिकव्याख्यासु तिसृषु काशिकाव्याख्यायां सौगतमतानुवादतन्निरसनांशास्तत्र तत्र विस्तृताः ॥

अथ अनुमाने भूयोदर्शनस्य व्याप्तिग्राहकत्वे प्रसारयामो दृष्टिमुपरिष्टात् । 'अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः' इति भाष्यं व्याचक्षाणेन भट्टकुमारिलेन साध्येन हेतोः सम्बन्धो व्याप्तिलक्षणः, सा च व्याप्तिर्भूयोदर्शनेन गृह्यत इत्युक्तम् । तथा च वार्त्तिकम् —



"सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना ।
भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः ॥"

(अनु. श्लोक. ४—१२.)

इति । प्राभाकरास्तु वदन्ति — महानसादौ वह्निधूमौ सहचरितौ पश्यतः प्रथमदर्शन एव धूमस्य वह्निना सम्बन्धो गृहीतो भवति । भूयोदर्शनस्योपयोगः सोपाधिकत्वशङ्कानिवारणमात्रमिति । उक्तं चेदं तन्त्ररहस्ये —

'अतः प्राथमिकं प्रत्यक्षमेव धूमाग्न्योः सम्बन्धनियमे प्रमाणम् । भूयोदर्शनेन पश्चात्तस्य निरुपाधिकत्वनिश्चयः' इति ।

भूयोदर्शनस्य व्याप्तिग्राहकतां व्याचक्षाणैः सुचरितमिश्रैः — 'कथं पुनर्भूयोदर्शनगम्या व्याप्तिः, किं हि तत्र प्रत्येकमेव भूयांसि दर्शनानि प्रमाणम्, आहोस्वित् दर्शनसङ्घातः, पूर्वदर्शनाहितसंस्कारसचिवमन्तिमं प्रमान्तरं वा' इत्यादिना विकल्प्य निरस्य तदन्ततं प्राचीनानेकदर्शनजनितसंस्कारसहाये चरमे दर्शने चेतसि चकास्ति धूमस्य वह्निनियतस्वभावत्वं रत्नतत्त्वमिव परीक्षमाणस्य' इति व्याख्यातम् । (श्लो. वा. Vol. III page 12, 16).प्रसङ्गेऽस्मिन् 'यस्तु वदति साहित्यमग्निधूमयोः संबन्धः । स च प्रथमसमधिगमसमय एव संविदितः, अनवच्छिन्नदेशकालश्चाग्निधूमयोः संबन्धो भासते' इत्यादिना 'अनौपाधिकस्य न व्यभिचाराशङ्का' इत्यन्तेन ग्रन्थेन काशिकायां प्राभाकरः पक्षोऽनूद्य 'स वक्तव्यः' इत्यादिना 'सिध्यती'त्यन्तेन निरस्तः (श्लो. वा. Vol. III, page 14, 15) । अयं च निरस्यमानः पक्षः शालिकनाथकृतायां प्रकरणपञ्चिकायां पञ्चमप्रकरणे 'किं पुनः संबन्धनियमावगमे प्रमाणम् ... ... अत्रोच्यते' इत्यादिग्रन्थेनोपपादितः । तथा ऋजुविमलायां 'अत्र प्रमाणमालापरिमलविमलमतयः प्रतीकारमारभन्ते' इत्यादिनोपपादितः ।

अयमपरोऽत्र विशेषः, प्राभाकरा अनुमानस्य व्याप्तिग्रहादनधिकार्थतया गृहीतग्राहित्वेऽपि अनुभवत्वाद्धारावाहिज्ञानस्येव प्रामाण्यं मन्यन्ते । भाट्टाः पुनरधिकार्थविषयतयैव प्रामाण्यमाचक्षते । अयमाशयः प्राभाकराणाम् — यो यो धूमवान् स वह्निमानिति व्याप्तौ गृह्यमाणायां धूमवत्सामान्ये वह्निसंबन्धस्य ग्रहणात् पर्वतस्यापि सामान्यान्तर्गततया तत्रापि वह्निसंबन्धो गृहीत एवेति नाधिकमनुमानेन ग्राह्यमस्तीत्यनुमानं गृहीतग्राह्येव ।

अत्राप्यनुभवत्वात् प्रामाण्यमव्याहतमिति । आह च टीकाकारः — "अहो अनुभवाविवेकिनो महान् प्रमादः, किं पूर्वदृष्टस्यानुभवो न भवति । अनुभूतिश्च नः प्रमाणम् । अन्या च स्मृतिरन्योऽनुभवः । ... सिद्धं चानुमानादिषु प्रमाणत्वमनुभूतेः" इति (बृहती. पु. १०२) । भाट्टानां पुनरयमाशयः — व्याप्तिज्ञानेन न धूमवत्सामान्ये वह्निसंबन्धोऽवगम्यते, अपि तु महानसादि कतिपयस्थलेष्वेव धूमवत्सु न पर्वते, क्वचिदप्यनग्नौ धूमो नोपलब्ध इत्यतश्च भवत्यनुमानं प्रमाणम् । तथा च वार्तिकम् —

"साहित्ये मितदेशत्वात् प्रसिद्धे चाग्निधूमयोः ।
व्यतिरेकस्य चासिद्धेर्गमकत्वं प्रकल्प्यते ॥"

(श्लो. वा. Vol. III. page 178)

इति । धूमवत्सामान्यात्मना पर्वतस्य व्याप्तिज्ञानविषयत्वाभ्युपगमेऽपि न पर्वतत्वेन विशेषावधारणम् । काशिकायाम् —

"असंनिकृष्टवाचा च द्वयमत्र जिहासितम् ।"

इति श्लोकव्याख्यानावसरे प्राभाकरं मतमनूद्य निरस्तम् । (श्लो. वा. Vol. III. page 40). —

"तत्तु द्विविधं प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च । तत्र प्रत्यक्षतो दृष्टसम्बन्धं यथा — धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतो दृष्टसम्बन्धं यथा — देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम्" इति भाष्यं व्याचक्षाणेन भट्टकुमारिलेन प्रथमम् —

"द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः सम्बन्धो गतिप्राप्त्योस्तथैव हि ॥"

(अनुमान श्लो० ११८)

इति भाष्यमाक्षिप्यते । कर्मणः प्रत्यक्षता चास्याभिमता भवति । प्रभाकरस्तु कर्मणोऽनुमेयतामेव मन्यते, तथा चोक्तम् — "अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु, कथं पुनरदृष्टस्वलक्षणे सम्बन्धिदर्शनम् ?, उत्पत्तिमतः फलस्य दर्शनात्' इति । (बृहती Page 98). अनेन हि क्रियामात्रं स्वफलेन संयोगेनानुमीयत इति गम्यते । व्याख्याता शालिकनाथोऽपि कर्मणो नित्यानुमेयतां प्रभाकरमिश्राभिमतां समर्थयन् पराभिमतं प्रत्यक्षत्वं 'अत्रापरः परोत्कर्षव्यलीककलुषितान्तःकरणः कर्मणः प्रत्यक्षता-



साकांक्षत्वेवमाह' इत्यादिनानूद्य निरस्यति (ऋजु. Page 98) । काशिकाकारः पुनः सर्वमिदं निरस्य कर्मणः प्रत्यक्षतां द्रढयति । (अनु० ११८ श्लो. व्या) 'तत्तु द्विविधम्' इत्यादि भाष्यग्रन्थस्याशयं त्वेवं वर्णयति भट्टकुमारिलः । तथा च वार्तिकम् —

"... ... ... तस्मादेवं प्रचक्षते ॥
प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥
तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।
यदाऽग्निर्बुध्यते तस्य पूर्वबोधात्पुनः पुनः ॥
सन्दिह्यमानसद्भाववस्तुबोधात्प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥"

(अनुमा० १४०—१४३)

इति । अस्मिन्नेव प्रकरणे — ननु सामान्यं नाम नास्ति वस्तु, अथ कोऽयं विशेषतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धमित्यनुमानविभागः, इतीमां सौगताशङ्कां परिहरन्नाह भट्टाचार्यः —

"प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।
वस्तुत्वं चात्र हेतुर्वा द्वयस्याप्यभिधीयते ॥"

(अनु. १४६)

इति । आकृतिः सामान्यं जातिरिति च पर्यायः । इष्यते चाचार्येण जातेर्व्यक्तितो भेदोऽभेदश्च, गुरुणा तु भेद एव ।

"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम् ।"

इति भाष्यम् ।

"प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।
तदतिव्यतिरेकेनेह किं शास्त्रादभिधीयते ॥"

(शब्द० श्लो० १.)

इत्यादिनाक्षिप्य समाधीयते —

"अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
न स्वतन्त्रोपयोगित्वानिरपेक्षाणि जल्पति ॥

तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् ।
वेदं व्याख्यातुकामस्य तज्जातीवोपयुज्यते ॥

यत्तु गामानयेत्यादिवाक्यस्थं शाब्दलक्षणम् ।
तस्य नेहोपयोगोऽस्ति तस्माच्छास्त्रगतं कृतम् ॥

विशेषश्च न सामान्यमन्तरेणास्ति कश्चन ।
तस्मात्तमप्युदाहृत्य सामान्यं लक्षयेत्सुखम् ॥"

(शब्द. ७, ८, २०, ११)

इति । अयमाशयः — सत्यं लौकिकवैदिकवाक्योभयसाधारणं शब्दप्रमाणलक्षणं प्रमाणप्रकरणे वक्तव्यम् । इह तु वेदप्रामाण्यसमर्थनप्रकरणे लौकिकवाक्यसाधारणेन लक्षणेन नोपयोग इति तदनुक्तिरिति । अनेन भट्टाचार्याणां लौकिकवाक्यानां शाब्दप्रामाण्यमभिमतमिति सिद्धम् ।

प्रभाकरमिश्रस्तु मन्यते — लौकिकानामाप्तवाक्यानामनुमानप्रमाणेऽन्तर्भावान्न तत्साधारणं लक्षणं भाष्यकारैरुक्तं, किन्तु वैदिकानामेव वाक्यानां प्रमाणान्तरापरिच्छिन्नकार्यार्थावबोधकत्वात्तदसाधारणमेव शास्त्रलक्षणमुक्तमिति । उक्तं च बृहत्यां—'अत एव तच्चेत्प्रत्ययितादित्युक्तम्, प्रत्ययितस्य हि वचनमव्यभिचारि प्रमाणान्तरपूर्वकम्' इति । तथा ऋजुविमलायाम् — 'यत एव लिङ्गभूतं पौरुषेयं वाक्यं, अत एव प्रत्ययितस्य नियमेन प्रमाणान्तरपूर्वकार्थाभिधायिनो वचनं सत्यम्' इति । चोदना. २६ – २७) तथा — "अयमर्थः—पौरुषेयं वाक्यं लिङ्गभूतं प्रमाणान्तरोपस्थापनमुखेनार्थं प्रतिपादयति । ततश्च लिङ्गाभासोत्थमेतत् ।" इति । (बृहती. शब्दप. १०६—१०७) । तथा प्रकरणपञ्चिकायां पञ्चमे प्रकरणे चोक्तम्—'तदेवं लौकिकाद्वचसो लिङ्गभूतात् वक्तृज्ञानमनुमीयते, ततोऽर्थं निश्चित्य व्यवहारः प्रवर्तते । एवं च निश्चितेऽन्वये निवृत्तानन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते, किं तु तस्यां दशायामनुवादकमेव । अत एव लौकिके वचने न शाब्दं प्रमाणम् ।' इति ।

समर्थ्यते तु लौकिकवाक्येष्वपि शाब्दप्रामाण्यं वार्त्तिककृता ॥



इदमुपमानप्रमाणलक्षणम् — पूर्वदृष्टे स्मर्यमाणार्थे दृश्यमानार्थसादृश्यज्ञानमुपमानम् । दृष्टगोव्यक्तेर्वने तत्सदृशाकृतिकं गवयं पश्यतो यद् भवति ज्ञानम् अनेन सदृशी सा गौरिति, तदिदमुपमानम् । प्रतीयमानं सादृश्यं किमिति विचारे सौगताभिमतमवस्तुत्वं तस्य निरस्यन्नाचार्य आह —

"सादृश्यस्यापि वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोवयवसामान्ययोगो जात्यन्तरस्य तत् ॥"

(उपमान. श्लो० १८)

इति । व्याख्यातं चैतत् सुचरितमिश्रैः — 'भूयोभिरवयवसामान्यैः यो जात्यन्तरस्य योगः, तत् सादृश्यम् । जात्यन्तरावयवसामान्यग्रहणमुपलक्षणार्थम् । व्यक्तिसादृश्यमपि यमादिषु दृष्टमेव । एवमवयवसामान्यैर्विनापि गुणकर्मादिसामान्ययोगेनापि सादृश्यं दृष्टमेव, यथा चित्रादिषु । ....... अतः सिद्धं जातिव्यक्त्यन्तरावच्छिन्नानि गुणावयवादिसामान्यानि सादृश्यम्' इति (पु. १४५, १४६) ।

गुरुः पुनराह—'सादृश्यमिति हि सादृश्यम्' इति ।(बृहती पु. १०७) व्याचष्टे च शालिकनाथः — 'अस्यार्थः — सादृश्यमिति यत्र ज्ञानम्, तत्सादृश्यम् । अस्ति चेदं ज्ञानम्, तन्निबन्धना च विषयव्यवस्था, तेन ज्ञानबलेन गुणादिव्यतिरिक्तं तदन्तर्निवेशि वा सादृश्यमभ्युपगमनीयम्' इति (पु. १०७) । इत्थं च सादृश्यस्यार्थान्तरत्वमभिमतमिति सिद्धम् । सादृश्याख्यः कोऽपि गुणविशेषो वेति च ।

निरस्यति च परमतं गुरुरनुपदम् — 'अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम्, न तत् सादृश्यम्, किं तर्हि ? तदेव तत्, गोत्वादेरेकत्वात्' (बृहती. पु० १०९) । व्याख्यातं चैतत् शालिकनाथेन — परमतमुपन्यस्यति — अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम्, सामान्यमेव गुणावयवकर्मत्वादिकं धर्म्यन्तरगतं ज्ञायमानं सादृश्यमुक्तम् —

'सामान्यानि च भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते ॥'

इति । तत्राह — न तत् सादृश्यम्, सादृश्यं भिन्नम्, अन्यदेव हि गवि

गवयसादृश्यम्, अन्यच्च गवये गोसादृश्यम्, गुणत्वादिकं तु तदेव तत् धर्म्यन्तरे । गोत्वादेरेकत्वात् कर्णत्वादेरपि तदविशेषादेकत्वमेव' इति (ऋजुवि. पु. १०९) ।

अत्रैव परमतं निरस्यता काशिकाकारेणेदमुच्यते — 'तत्त्वान्तरवादिना चेदमाश्रयपारतन्त्र्यात् गुणान्तर्गतमेवास्थेयम्, न पञ्चमम्, अलौकिकत्वात् । जातिद्रव्यगुणक्रियाः पदार्था इति लोकसिद्धम् । अतोऽस्य गुणस्य सतो गुणकर्मणोरनुपपन्न एव समवायः' (पु. १०५) इति । अत्रेदमाशङ्क्यते, प्राकट्यं गुणविशेषमभ्युपगच्छता रूपादिषु गुणेषु तस्य समवायः कथमिष्यते इति ।

'अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ।' इति भाष्यम् । नन्वनुमानमेवेदम्, अन्यथा नोपपद्यते इति शब्दान्तरेणोक्तमित्याशङ्कां परिहरन् भाष्यमिदं व्याचष्टे टीकाकारः— 'केयमन्यथानुपपत्तिर्नाम यदि तावदस्यानेन विना सद्भावो नोपपद्यते इति, तदेवं कार्यतः कारणानुमानमुपन्यस्तम्, न प्रमाणान्तरम् ··· । अतः प्रमाणान्तरं मृगतृष्णिकैव । सत्यम्, यदि यथेन विना नोपपद्यते तदेवावगमकं स्यात्, इह तु यन्नोपपद्यते तदेवावगम्यते । किं चात्र नोपपद्यते?, जीवतो गृहाभावदर्शनादन्यत्राभावो नोपपद्यते । ततः किं? नात्राभावस्य गम्यता, कस्य तर्हि?, भावस्य । ननु ··· ··· दर्शयति । अग्रन्थज्ञो देवानां प्रियः ... .... ........ प्रमाणमित्यर्थः" (बृहती. पु. ११०—११३) इति ।

व्याख्यातं चैतच्छालिकनाथेन — 'अत्रेदमाकूतम् — नात्र गृहाभावदर्शनेन विना' इत्यादिना (ऋजुवि. पु. ११२) ।

अयमाशयः प्रभाकरमिश्राणाम् —बहुशो गृह एव दृष्टचरस्य गृहाभावे दृष्टे तस्यासति बहिर्भावकल्पने दृष्टोऽयं गृहाभावो जीवनस्यानुपपत्तिमापादयन् तस्य बहिर्भावं कल्पयति । अनुपपत्तिश्चात्र सन्देहः । सततं गृह एव स्थितं देवदत्तं दृष्टवतो यदा गृहाभावदर्शनं भवति, तदा पूर्वावगतेऽपि तस्य जीवने शून्यगृहदर्शनाद् भवत्येव संशयः, स च संशयो बहिर्भावकल्पनयापनोद्यते । सेयं कल्पना अर्थापत्तिरिति । उक्तं च शालिकनाथेन ऋजुविमलायाम् । "अत्र श्लोका भवन्ति —



"विना कल्पनयार्थेन यदतानुपपन्नताम् ।
अर्थान्तरं कल्प्यते यत्तदर्थापत्तिगोचरः ॥
अभावेन गृहे भावो बहिः कल्पनया विना ।
यदतानुपपन्नत्वं कल्प्यमानो बहिर्यथा ॥
गम्यस्यानुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम् ॥
देशेन हि विनाभावो न कदाचन दृश्यते ।
गृहाभावेन सिद्धोऽपि तेन सन्देहमृच्छति ॥
तत्सन्देहव्युदासाय कल्पना या प्रवर्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता ॥" (पु. ११४)

इति । तदिदं टीकाकारमतं सुचरितमिश्रः काशिकायां 'प्रमाणषट्के'त्यादिवार्तिकमवतारयन्नक्षरशोऽनूद्य निरस्यति । समर्थयति च तत्रैवार्थापत्तेरनुमानाद् भेदं वार्तिककारमतेन ।

अत्रैवार्थापत्तिलक्षणे 'दृष्टः श्रुतो वे'ति दर्शनश्रवणग्रहणयोरर्थभेदं भट्टाचार्यो मन्यते । गुरुस्त्वेकार्थताम् । तथा च टीका — 'दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय? नेति वदामः, उपलब्धोऽर्थ इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम्? दृष्ट इत्येव वक्तव्यम्, उच्यते — अभिधानान्तरमेवेदम् । 'दृष्टः श्रुतो वा' इत्युपलब्धेर्वाचकम्' (बृहती. पु. ११५) । इति । अयमस्याशयः — दृष्टात् श्रुताच्च योऽन्यः अनुमानादिप्रमाणान्तरपरिच्छिन्नोऽर्थः सोऽनुपपत्त्यार्थकल्पको भवतीति तस्य सङ्ग्रहो न स्यात् । यदि दृष्टशब्द उपलब्धिमात्रवाचकः, तदा श्रुतग्रहणं व्यर्थम् । उच्यते । दृष्टः श्रुत इत्युभयं मिलितमुपलब्धिमात्रबोधकम्, लोके हि 'न च दृष्टं न च श्रुतम्' उपलब्धिमात्रनिषेधे प्रयुज्यते इति ।

भट्टाचार्यस्य त्वयमाशयः — भाष्यवचनस्य लौकिकवचनसाधर्म्याश्रयणेनार्थवचनमनुचितम्, अस्ति च दृष्टार्थापत्तेः श्रुतार्थापत्तौ विशेषः । प्रमाणान्तरमूलकार्थापत्तयो भवन्ति प्रमेयग्राहिण्यः (अर्थान्तरकल्पिकाः) । श्रुतार्थापत्तिस्तु प्रमाणग्राहिणी । (वाक्यान्तरकल्पिका) पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्ये प्रयुक्ते इदं वाक्यं स्वार्थावबोधनेऽसमर्थं सत् रात्रौ

भुङ्क्ते इति वाक्यान्तरमाकाङ्क्षते, तद् भवति वाक्यान्तरकल्पनमिति सेयमर्थापत्तिः प्रमाणान्तरग्राहिणी । यथा अध्याहारस्थले 'पिधेहि' इति प्रयुक्ते द्वितीयान्तं कर्मपदमाकाङ्क्षितमिति द्वारमिति द्वितीयान्तस्याध्याहारः, एवमिहापि । शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यते इति न्यायात् । श्रुतार्थापत्तेः दृष्टार्थापत्तितो विशेषमिमं विद्यमानमभिप्रेत्य श्रुतग्रहणम् । दृष्ट इति च श्रुतातिरिक्तोपलब्धिमात्रवाची, तथा च वार्त्तिकम् —

"दृष्टः पञ्चभिरप्यस्माद् भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा ॥" इति ।

(अर्थापत्ति. श्लो. २)

गुरुस्तु श्रुतार्थापत्तावपि अर्थकल्पनामेव मन्यते, अर्थावगतये हि शब्दकल्पना, तत् लाघवात् अर्थकल्पनैव समुचिता । अध्याहारस्थलेऽपि अर्थाध्याहार एव समुचित इति ।

तदस्मिन् प्रसङ्गे अध्याहारेऽपि मतभेदो भवति विचारपदम् । शालिकनाथः ऋजुविमलायां 'तदेतट्टीकाकारो भगवान् न मृष्यति' (पु० ११६) इत्यादिना भट्टाचार्यमतं निरस्य गुरुमतं समर्थयति । पार्थसारथिमिश्रैः शास्त्रदीपिकायां श्रुतार्थापत्तेः प्रमाणग्राहकत्वेन श्रुतादत्यन्तोपयोगो निरूप्यते ।

अस्त्यभावो नाम पदार्थः, तत्र च प्रमाणमनुपलब्धिः, षष्ठं प्रमाणमिति भाट्टाः । नास्त्यभावो नामातिरिक्तः पदार्थः, न चानुपलब्धिरिति प्रमाणान्तरम् , इति प्राभाकराः । तत्र प्राभाकराणां पक्षं प्रथमतो निरूपयामः । 'अभावोऽपि प्रमाणाभावः, नास्तीत्यस्यार्थस्यासन्निकृष्टस्य' इति भाष्यम् । अयमस्यार्थः—अभावोऽपि प्रमाणाभाव इति न प्रमाणलक्षणम्, प्रमेयाभावात् । ननु भूतले घटो नास्तीति प्रमीयते भूतलाधिकरणको घटाभावः । न चेयं प्रतीतिर्भूतलमात्रालम्बना, सत्यपि घटे तत्प्रसङ्गात् । न च निरालम्बना प्रतीतिरपीति व्याहतम् , प्रतीतिर्ह्यनालम्बना नोपपद्यते । चरणन्यासादिलक्षणो व्यवहारोऽपि भवति कण्टकाद्यभावपरिच्छेदात् । नन्वयं परिच्छेदः केवलभूतलपरिच्छेदान्नातिरिच्यते । भूतले कैवल्यमभावानभ्युपगमे दुर्घटम्, तस्मादस्ति भूतलातिरिक्तस्तदधिकरणकः अभावाख्यः प्रमेयः । प्रमेयविशेषलाभाच्च भवत्यभावाख्यं षष्ठं प्रमाणम् । उच्यते । न कोऽप्यत्र प्रमेयविशेषः, नूक्तं नास्तीत्ययमर्थ इति, अयमत्र न प्रमीयते इत्येव तु तदर्थः । अप्रमितेः



का वा प्रमाणापेक्षा । तस्माद् अप्रमितेः प्रमाणमिदमिति लोकबहिर्भूतं वचनम् । अप्रमीयमाणत्वमेव नास्तित्वम् , नार्थान्तरम् । यद्येवं प्रमेयाभावान्न प्रमाणलक्षणमिदम् , कथमस्य भाष्यस्य सङ्गमनम् । केचित् किलाभावं नाम षष्ठं प्रमाणमातिष्ठन्ते, तन्निराकरणार्थ एवायं भाष्यकारस्यारम्भः । कथमनेन निराकरणम्? श्रूयताम् । यदेके वदन्ति नास्तीत्यस्यार्थस्यासन्निकृष्टस्य (प्रत्यक्षाविषयस्य) अभावः प्रमाणमिति, तन्न, प्रमाणाभावो ह्यसौ, प्रमाणं न भवतीत्यर्थ इति ॥

भाट्टास्तु— अस्त्यभावो नाम पदार्थान्तरम् , इह घटो नास्ति , घटशून्योऽयं प्रदेशः इति प्रतीतेर्विशिष्टविषयतया भूतलादिप्रदेशस्य विशेषणीभूतेन ह्यभावेन भाव्यम् , न चाभावोऽवस्तु, प्रागभावादिभेदेन चातुर्विध्यात् , वस्तुन एव हि विधा भेदः । प्रमेयभेदाच्च प्रमाणभेदः । भाष्यं चाभावाख्यषष्ठप्रमाणनिरूपण एव स्वरसगतिकम् । तथा च चित्राक्षेपपरिहारे भाष्यम् — 'स्यादेवं यदि पञ्चैव प्रमाणान्यभविष्यन् ' इति । अनेन हि षष्ठं प्रमाणमभ्युपगतं भाष्यकारेणेति स्पष्टम् । अयमस्य भाष्यवाक्यस्यार्थः — अभावोऽपीति लक्ष्यनिर्देशः, अपिस्त्वर्थः । प्रमाणाभाव इति लक्षणम् । प्रमाणशब्दोऽयं भावप्रमाणपरः, सामान्यशब्दस्य विशेषपरता च प्रकरणानुरोधाद् दृष्टा । तच्च प्रत्यक्षादिप्रमाणपञ्चकम् । तद्विरहो यथाविषयमनुत्पत्तिरभावाख्यप्रमाणम् । तस्य प्रमेयस्य नास्तीत्यस्यार्थस्यासन्निकृष्टस्य घटस्य नास्तिता (घटविविक्तता) भूतलस्य धर्मः । सा च न भूतलमेव, अतश्चायमसन्निकृष्टः । अस्मिन्नर्थेऽभावः प्रमाणपञ्चकानुत्पत्तिलक्षणोऽभावः प्रमाणं भवति । इदमभिहितं भवति — यदा दृश्यमानेऽपि भूतले दृश्योऽपि घटादिर्यो न दृश्यते, तस्य घटादेर्नास्तिता (तदभावः) भूतलाधिकरणा प्रत्यक्षाद्यनुत्पत्तिलक्षणेन प्रमाणेन गृह्यते इति ।

नन्वभावोऽधिकरणमिव भूतलादि कुतश्चक्षुषा न गृह्येत । सत्यं चक्षुषा संयुक्तं भूतलम्, न त्वभावः । ननु यच्चक्षुस्संयुक्तं भूतलं तेनायमभावः संबद्धः । कः संबन्धोऽस्य भूतलेन, न संयोगः, अद्रव्यत्वात् । न च समवायः अगुणत्वात् । न चैष गुणेषु गण्यते । ननु संयुक्तविशेषणता संनिकर्ष इति चेत्, चक्षुःसंयुक्तफलविशेषणत्वाद् रसादेरपि चक्षुषा ग्रहणमापद्येत । न रसे चक्षुषो योग्यतेति चेत्, अभावेनेन्द्रियस्येत्युपशाम्यतु भवान् । तस्मान्नास्ती-

स्वस्यार्थस्यासंनिकृष्टस्य अभावाख्यः प्रमाणाभावः प्रमाणपञ्चकाभावः प्रमाणमिति युक्तमुक्तं भाष्यकृता । तथा च वार्त्तिकम् —

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥
न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥"

इति । (श्लो. वा. अभाव० १-१८) । केयं प्रमाणपञ्चकानुत्पत्तिः या अभावे प्रमाणमुच्यते ?

सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ।
(श्लो० वा० अभाव० ११)

अयमाशयः — यदा चेतनोऽयमात्मा घटादि पश्यति, तदा तस्य तत्तद्दर्शनरूपा परिणतिर्भवति, न चैतावतानित्यताप्रसङ्गः, चैतन्यस्वरूपानुच्छेदात् । विकृतिरपीयं न स्वरूपोच्छेदमावहति स्वर्णस्येव कुण्डलात्मना परिणतस्य । इदमात्मवादे व्यक्तीभविष्यति । यदा पुनर्दृश्यमपि घटादि दृश्यमाने भूतले न दृश्यते तदा तथाविधपरिणत्यभावः आत्मनः स्वेन रूपेण स्थितिः, अन्यवस्तुनः — नास्तिताज्ञवस्तुनो वा ज्ञानं भवति, तयोरेकं यथाविवक्षमभावे प्रमाणं भवतीति । तयोः प्रथमस्य प्रामाण्यविवक्षायां नास्तिताज्ञानं फलम्, द्वितीये हानादिबुद्धिः फलम् ।

ये पुनः शाक्याः अभावस्यावस्तुतां मन्यन्ते ते वस्तुस्वभावानभिज्ञाः । सर्वमेव वस्तु सदसदात्मना भवति द्विरूपम् । स्वेन रूपेण सदात्मकं पररूपेण चासदात्मकम् । यथा गौः स्वेन रूपेणास्तीति प्रतीत्यर्हम्, भवति स्वेन रूपेण सत्ताधर्मकम्, नाश्वोऽयमिति प्रतिषिध्यमानतया अश्वात्मना त्वसत्ताधर्मकम् । एवं दधि स्वेन रूपेण सदपि क्षीरात्मना तु नास्ति, क्षीरप्रध्वंसाभावलक्षणासत्ताधर्मकत्वात् । एवं विचार्यमाणे कथंचिद्वस्तुनः कश्चिदभावो धर्मभूतः कथमवस्तुतां यायात् । तथा च वार्त्तिकम् —

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किंचिद्रूपं किंचित् कदाचन ॥ इति ।
(अभाव. श्लो० १२)



यद्येवं रूपद्वयमपि कुतो नैकदैव गृह्यते ? —

"यस्य यत्र यदोद्भूतिर्जिघृक्षा चोपजायते ।
वेद्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते ॥" इति । (अभाव० श्लो. १३)

अन्वाक्षवादेनेदमुक्तं — द्वयोरेकमुद्भूतं रूपं प्रतीयते, अपरं तु हीनं तत्रैवावतिष्ठते इति । अस्त्येव तु भावाभावप्रतीतावन्यतरानुगमः ॥

"अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥
नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमादृते ।
ज्ञानं न जायते किंचिदुपष्टम्भनवर्जितम् ॥" इति ।
(श्लो. वा. अभाव. श्लो. १५–१६)

अयमेवेति भावनिर्णये इदमंशो वस्तुनः सद्रूपं प्रतीयते । एवेत्यवधारणेनेतरव्यावर्तनादसद्रूपमपि प्रतीयते । इदमिह नास्तीत्यभावप्रतीतौ अधिष्ठानतया वस्तुनः सद्रूपं प्रतीयते, नास्तीति चासद्रूपमिति ।

तस्मादभावो वस्तु । पदार्थान्तरं च । तत्र भवत्यभावः प्रमाणमिति सुस्थितम् ॥

धर्मस्य लक्षणं चोदनैव, चोदना लक्षणमेवेत्ययमर्थश्चोदनासूत्रे उक्तः । तावेतावन्ययोगव्यवच्छेदायोगव्यवच्छेदौ परीक्ष्यौ नाम । इदं हि मीमांसाशास्त्रं नोपदेशमात्रेण कृतकृत्यतामर्हति । परीक्षाप्रसङ्गेन प्रत्यक्षादीन्यभावान्तानि प्रमाणानि निरूपितान्येतावता । अथाक्षेपपरिहारमुखेनायोगव्यवच्छेदः समर्थ्यते । तत्र पश्वादिदृष्टफलकानां चित्रादिचोदनानां यागाद्यनुष्ठानसमनन्तरं पश्वादिफलादर्शनान्मृषार्थता चित्रादिचोदनाया इत्ययमाक्षेपः प्रथमं प्रवर्तते । तथा दृष्टविरुद्धमपि किंचिद् वैदिकं वचनम् — 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति । यजमानो यज्ञायुधी न शरीरादन्यः, शरीरस्यैव हि यज्ञायुधसम्बन्धः, तच्च दह्यते, भस्मीभूतस्य कथं स्वर्गयानम् । एवं मृषार्थतायाः क्वचिद् दर्शनादन्यत्रापि चोदनासामान्ये समुदेत्येवाप्रामाण्याशङ्केति । अथान्य आक्षेपः, शब्दार्थयोः सम्बन्ध एव दुरुपपादः, असति सम्बन्धे कथमर्थावबोधकतेति चोदनानामप्रामाण्यमिति । तावेतावाक्षेपौ वार्त्तिककृता विस्तरेण व्याख्यातौ 'परलोकफलाः पूर्वम्' इत्यादिना ।

"चित्रापशुफलत्वादिविषयाश्चोदना मृषा ।
प्रत्यक्षाद्यविकारेऽपि तैरर्थासङ्गतिर्यतः ॥
न वा पशुफला चित्रा स्वकाले तददर्शनतः ॥
अत्र तावदसंवादो विरोधश्चोत्तरत्र तु ।
स्वर्गयानविरुद्धो हि भस्मीभावोऽत्र दृश्यते ॥
एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।
वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्विव ॥" इति ।

(श्लो. वा. चित्रा०)

तथा शब्दार्थयोः सम्बन्धाक्षेपवादोऽपि "असम्भवेन शेषाणां संक्षेपः परिशिष्यते" इत्यादिना विस्तरेण वार्तिककारेण व्याख्यातः । सम्बन्धाक्षेपवादं व्याचक्षाणैः सुचरितमिश्रैः वैशेषिकैः पदार्थान्तरत्वेनाभ्युपगतो विशेषः प्रसङ्गान्निरस्यते, "अस्ति हि केषांचिद्दर्शनं नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः" इत्यादिना (पृ. २३२)

अत्रैव सम्बन्धाक्षेपारम्भे 'अपौरुषेयः शब्दस्यार्थेन सम्बन्धः' इत्यादि भाष्यं व्याचक्षाणष्टीकाकारः पौनरुक्त्यमाशङ्क्य परिहरन्नन्विताभिधानवादे श्रद्धामात्मनो व्यनक्ति, तथा च वाक्यम् —'ननु सर्व एवायं सूत्रार्थो विवृतः (औत्पत्तिकसूत्रे एव) पुनरिहानूदितः (अनेन पौनरुक्त्यम्) । सत्यम् । विशेषाभिधानाय । कः पुनरत्र विशेषोऽभिधीयते ? ननु च सम्बन्ध एव नास्तीति पूर्वोक्तमाक्षिप्य पुनः समाधिः । ननु च वाक्यार्थोऽयमाक्षिप्तः 'विद्यमानोपलम्भनत्वात्' इति, पदविषयमौत्पत्तिकत्वं मन्यन्ते मीमांसकाः । किमनयाऽनुपासितगुरुकथया विकल्पितया । यस्माद्धि यः प्रतीयते स तस्यार्थः, न च केवलात् पदात् वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टा, अनवगम्यमानस्य चार्थस्य केनचित् सम्बन्ध इति दुर्वचं वचः । कथं तर्हि प्रसिद्धिरियम् । अनुपासितगुरुत्वादित्युक्तम् । 'तस्मादौत्पत्तिको वाक्यवाक्यार्थयोः सम्बन्धः' इति (बृहती. पृ. १३४) । व्याचष्टे चेदं शालिकनाथः — किमनयाऽनुपासितगुरोः अभिहितान्वयवादिनः कथया विकल्पितया । ... ... अन्वितस्वार्थाभिधानतयैव व्युत्पत्तेः अर्थान्तरापेक्षत्वाच्चान्वयस्य पदान्तरादृते तदनवगतेः पदान्तरापेक्षत्वे च सिद्धं वाक्यस्यैव प्रतिपादकत्वं न केवलस्य पदस्य । ... ... अनुपासितगुरुत्वाद् भ्रान्तिमूलेत्युक्तम्' (पञ्चिका. पृ. १३५), इति । आचार्यस्त्वभिहितान्वयवाद एव त्वभिमतः । स चान्यत्र द्रष्टव्यः ।



अथेदमावेद्यामः — काशिकाव्याख्यासमेतस्यास्य श्लोकवार्तिकस्य प्रकाशपथमुपनेतव्योंऽशः प्रायोऽर्धांशादनधिकोऽवशिष्यते । या पुनरिह सन्निहिता काशिकामातृका उपरितनांशे प्रशिथिलपत्रा जीर्णजीर्णा चेति तामालम्ब्य प्रकाशनं दुर्घटम् । मातृकान्तरसम्पादने च प्रयत्न आधीयते । अचिरात् प्रकाश्येत । प्रकाशितपूर्वयोर्द्वयोर्विभागयोः इदानीं प्रकाशपथमुपनीते अनुमानादिसम्बन्धाक्षेपवादान्ते चास्मिन् तत्र तत्र ये विषयविशेषाः तथा भट्टाचार्यप्रभाकरमिश्रयोर्मतभेदस्तत्र तत्र प्रकाशमानः, त एते द्विभाषिण्यां प्रस्तावनायां निरूपिताः । सेयं प्रस्तावना 'मधुरेण समापये'दिति न्यायेन आत्मविचारेण परिसमाप्यते । सुदूरं व्यवहितोऽप्यात्मवादः यज्ञायुधिवचोविचारप्रसङ्गात् सन्निहित इव नः ॥

अथ धर्मं जिज्ञासमानैरिहमर्थः प्रथमं विचार्यः । स चेज्जनिमरणपूर्वापरावधिः, न प्रवर्तेत कोऽपि धर्मे न च स्पृहयेतामुष्मै श्रेयसे । देहादिभ्यो व्यतिरिक्तमहमात्मानं नित्यं कर्तारं भोक्तारं सांसारिकमवधार्यैव स्पृहयते श्रेयसे पुनर्भवसापेक्षाय, यतते च तत्साधनेषु धर्मेषु शास्त्रदृष्टेषु । तस्मात् ये धर्मविचाराय प्रवर्तन्ते समधिगतात्मस्वरूपा एव ते इति न तान् प्रति देहातिरिक्तत्वं इदानीं समर्थनीयम् । ये पुनराक्षिपन्ति — प्रत्यक्षव्याहतं वैदिकं वचनम् "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति, एष इति हि व्यपदेशः समीपतरवर्तिनि प्रत्यक्षे शरीरे समन्वेति । यज्ञायुधसम्बन्धश्च शरीरस्यैव, न च मृतस्य शरीरस्य दह्यमानस्य स्वर्गयानकथा इति । तान् प्रति प्रतिवक्तव्यम् ।

शरीरे चैवैष इति व्यपदेशो युक्तः, तद्द्वारा शारीरे युज्यत एव तथा यज्ञायुधयोगश्च । आह च भाष्यकारः — 'तदुच्यते शरीरसम्बन्धात्, यस्य तच्छरीरं, सोऽपि तैर्यज्ञायुधैर्यज्ञायुधीत्युच्यते' इति । आह च टीकाकारः — 'अभेदोपचारनिबन्धनोऽयं व्यपदेशः' इति (बृहती पृ. २०८) । व्याचष्टे च शालिकनाथः —'एतच्छब्देन वक्तृप्रत्यक्षोऽर्थोऽभिधीयते, यच्च प्रत्यक्षं तदपि स्पष्टसत्त्वम्, आत्मा अस्पष्टसद्भावः इति स गौण्या वृत्त्योच्यते' इति (पञ्चिका. पृ. २०८) । विभुरयमात्मा न कस्यचित् सन्निहितो न कस्यचिद्विप्रकृष्टः, न च स्पष्टावभासः परस्य, अथापि भवति व्यवहृतिपथे वर्तमानानामयं व्यपदेशः — एष वेत्ति स वेत्तीति । सोऽयं परोक्षापरोक्षव्यपदेशो भवति विज्ञातरि । अयं च शरीरजनिविनाशावनु जन्ममरणव्यपदेश इव आत्मन्यन्ततो व्याहृतार्थः । आह च भट्टाचार्यः—

'साक्षाद्यद्यपि सम्बन्धो नात्मनो वसुसाधनैः ।
तथापि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥
प्रत्यक्षत्वं च देहस्य भाक्तमात्मनि कल्पितम् ।' इति ॥
(श्लो० वा. आत्मवाद १३)

ननु कोऽन्यः शरीरादात्मा नाम, न ह्युपलभ्यते, तस्मात् व्याहृतमेव यजमानः स्वर्गं लोकं यातीति । ननु उपलभामहे प्राणादिभिः, योऽसौ प्राणिति अपानिति उच्छ्वसिति निमिषति च ।

"बृहतीपङ्क्तिकावाक्यैरन्वयं प्रापितैर्मिथः ।
संवादनैरपेक्ष्येण विषयोऽत्र निरूप्यते ॥"

ननु शरीरमेव प्राणिति अपानिति । शरीरं नाम किमभिप्रेतं भवता । ननु चातुर्भौतिकः सङ्घातः । न तर्हि शरीरकार्याण्येतानि । यदि भूतारब्धद्रव्यसमवायीन्येतानि स्युः, तदा कार्यद्रव्यसमवायित्वात् कारणद्रव्येऽपि तदापत्तिः स्यात् । कारणगुणपूर्वको हि कार्यद्रव्ये वैशेषिकगुणारम्भः । वैशेषिकगुणाश्च बुद्ध्यादयः । नापि रूपादय इव परैरुपलभ्यन्ते बुद्धिसुखादयः । ननु भोः ! सुखादयो यदि भूतधर्मा न, अथ कस्यैते । ज्ञातुरात्मनः । ननु कुत एष सम्प्रत्ययः, सुखादिभ्योऽन्यस्तद्वानस्तीति, नहि सुखादिप्रत्याख्यानेन तस्य रूपमुपलभ्यते, पटादिप्रत्याख्यानेन केवलभूतलमिव । ननु नीलादिप्रत्याख्यानेन न तदाश्रयः पटो नाम कश्चिदुपलभ्यते । को ब्रूते नीलो धर्मः पटस्येति, स एव तु सः । हन्त सौगतं पन्थानमनुप्रविष्टोऽसि । सौगतेन सूर्यवेदमाक्षिप्यते । ननु कस्येमे सुखादयः, न कस्यचित् । न हि यो य उपलभ्यते, तस्य तस्य सम्बन्धिना भाव्यमिति शक्यते वक्तुम् । यस्य सम्बन्धोऽप्युपलभ्यते सम्बन्धी च तस्यायं सम्बन्धीति गम्यते । न हि चन्द्रमसमादित्यं वोपलभ्य सम्बन्ध्यन्वेषणा भवति कस्यायमिति । यदाप्याहुः उपलब्धस्यावश्यं कल्पयितव्यः सम्बन्धीति, तर्हि ततः कल्पितस्यात्मनः कस्यायमिति स्यादेव सम्बन्ध्यन्वेषणा तस्याप्यन्यसम्बन्धिकल्पने तस्यापि सम्बन्ध्यन्वेषणया अनवस्था समापद्येत । अथैकं कल्पयित्वा तावत्येव विरंस्यसि, तर्हि विज्ञान एव विरन्तुमर्हति भवान् ।

ननु कार्येण सकारणेन भाव्यम्, सुखादेः कार्यस्य कारणेऽन्विष्यमाणे ज्ञाता कारणं सिध्यति । कार्येण सकारणेन भाव्यमिति सत्यम्, न तु



विसदृशेनैव कारणेन भाव्यमिति । स्वसदृशकारणकतामेव तु वयं ब्रूमः । पूर्वपूर्वैः सुखादिभिरेवोत्तरोत्तरसुखादीनामुत्पत्तिः, क्षणिकविज्ञानधारा चानुस्यूता प्रवहति । विज्ञानादनतिरिक्तमेव तु सुखम् ।

प्रतिसत्त्वं भिन्नभिन्ना क्षणिकज्ञानसन्ततिः ।
अनादिसंसृतावस्यामनुस्यूता प्रवर्तते ॥

हन्त भोः यद्येकः स्थिरो विज्ञाता नाभ्युपगम्येत इच्छादि नोपपद्यते, नह्यनुपलब्धपूर्वे अन्योपलब्धे वा भवेदिच्छा । न वा अन्येनाभिलषिते अन्यो यतेत । भवति चान्येद्युरुपलब्धे अन्येद्युरिच्छा । तस्मात् स्थिरमात्मानमिच्छादिभिरुपलभामहे वयम् । ननु किमनुपपन्नम्, यथोपलम्भं भवति वस्तुव्यवस्था । न च नित्यं विज्ञातारमुपलभामहे । उपलभामहे च क्षणिकविज्ञानधाराम् । इदं च दृष्टम् — एकस्यां सन्ततावन्येन दृष्टमन्य इच्छति, सन्तत्यन्तरे तु नेच्छतीति । स्मृतावप्येवमेव । पूर्वपूर्वप्रत्ययमहिम्ना भवत्युत्तरोत्तरकार्यवैचित्र्यम् । व्यवस्थिते च कार्यकारणभावे का नामानुपपत्तिः । ननु भोः यथोपलम्भं व्यवस्थेति ब्रूषे, प्रत्यक्षव्याहतां च व्यवस्थां कल्पयसि । 'इममेवार्थं पूर्वेद्युर्दृष्टमन्येद्युरुपलभामहे ते वयम्' 'तदेवेदानीं वयमेव स्मरामः', 'तदेवेदं वयमेव प्रत्यभिजानीमः' 'वयमेव स्मः', 'वयमेवास्म' इत्यबाधितः प्रत्ययो भवति । प्रतीतिमबाधितामपलपतस्तव न वादेन लाभः, अलं कुतर्कितैः । वयं वेदेनैवार्थमवधारयन्तो वेदवचनान्येव विचारयामः । 'स वा अयमात्मा' इति प्रकृत्याऽऽमनन्ति 'आशीर्यो न हि शीर्यते' अविनाशी वारे अयमात्मा अनुच्छित्तिधर्मा' इति । तस्मादविनश्वराद्विज्ञानादन्य एवात्मेत्यवगच्छामः । न च शक्यमवगन्तुं — यथोपलभ्यन्तेऽर्थाः, न तथा भवन्तीति, यथा च खलु नोपलभ्यन्ते तथा भवन्तीति वा । तथा सति शशो नास्ति शशस्य विषाणमस्तीत्येव तत्त्वमित्यवगम्येत । न चाहंप्रत्ययो व्यामोह इति शक्यते वक्तुम्, बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यो व्यतिरिक्तः तदाश्रय आत्मास्तीति ।

ननु वैदिकं त्वामेव पृच्छामः — यदि विज्ञानादन्यदपि विज्ञातृ स्यात् विज्ञानमपास्य तन्निदर्श्येताम् इदं तदीदृशं चेति । न च तन्निदर्श्यते, तस्मान्न ततोऽन्यदस्ति । उच्यते । स हि भवति स्वसंवेद्यः, न चासावन्येन शक्यते द्रष्टुम् । कथमसौ निदर्श्येत । यथा च चक्षुष्मान् स्वयं रूपं पश्यति, न शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम् । न च तत्र

शक्यत इत्येतावता नास्तीत्यवगम्यते । एवमसौ पुरुषः आत्मानमुपलभते न चान्यस्मै शक्नोति दर्शयितुम् । अन्यस्य द्रष्टुः तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽयमन्यः पुरुषः स्वयमात्मानमुपलभते, न च परात्मानम् । तेन सर्वे स्वेन स्वेनात्मना आत्मानमुपलभमानाः सन्त्येव । अथास्मिन्नर्थे ब्राह्मणम् — 'शान्तायां वाचि किंज्योतिरेवायं पुरुषः, आत्मज्योतिः सम्राड्' इति । परेण नोपलभ्यन्ते इत्यत्रापि ब्राह्मणम् — 'अगृह्यो न हि गृह्यते' इति । परेण न गृह्यते इत्येतदभिप्रायमेतत् । ननु तर्हि परेण परं प्रति कथमात्मोपदिश्यते । एवमुपदिश्यते 'स एष नेति नेत्यात्मेति' । अयमाशयः — असौ पुरुष इति न शक्यते निदर्शयितुम्, यत्तु परः पामरः पश्यति शरीरमेवेति, निषिध्यते तु तत् नायमात्मेति, यत्त्वन्यः प्राणम्, निषिध्यते च नायं प्राण आत्मेति, लिङ्गैर्वा यं यमात्मानमुपलभन्ते परे, न स आत्मेति च प्रतिषिध्यते । एवं भवति दृश्यनिषेधमुखेनात्मोपदेशः इति ।

> एतैर्मधुरगम्भीरैर्भाष्यवाक्यैः सुयोजितैः ।
> प्रस्तावनायाः साद्गुण्यं सिद्धमस्मत्कृतेरपि ॥

आचार्यैरात्मवादे शरीरेन्द्रियप्राणविज्ञानेभ्यो व्यतिरिक्तो नित्यो ज्ञाता कर्ता भोक्ता विभुरहंप्रत्ययवेद्यः प्रतिशरीरं भिन्नः इत्यात्मस्वरूपं विस्तरेण परपक्षनिरसनपूर्वकं प्रसाध्य इदमुदाहृतम् ।

> इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
> दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ इति ।
>
> (श्लो. वा. आत्मवाद. १४८)

अनेन वेदवेदान्तविचारयोरुपकार्योपकारकभावश्च गम्यते ॥

अत्र भूयान् निरूपणीयः सारोंऽशो वर्तते । स चास्यैव श्लोकवार्तिकस्योत्तरभागप्रकाशनावसरे प्रस्तावनापदमर्हतीति प्रक्रान्ता प्रस्तावना एतावता परिसमाप्यते ॥

> जयन्तु पद्मनाभस्य पदपङ्कजरेणवः ।
> ब्रह्मणोऽप्युत्तमाङ्गानां वैधृतैरुत्तमाङ्गता ॥

एम्बार्. कृष्णमाचार्यः, (श्रीरङ्गम्)

# विषयानुक्रमणी ।

इत्यनुमानपरिच्छेदः

इति शब्दपरिच्छेदः ।

इत्यभावपरिच्छेदः ।







इति चित्राक्षेपवादः ।

इति सम्बन्धाक्षेपवादः ॥

॥ श्रीः ॥

# मीमांसाश्लोकवार्त्तिकं

## सुचरितमिश्रप्रणीतया

### काशिकाख्यया टीकया समेतम् ।

(तृतीयो भागः ।)

प्रत्यक्षाव्यभिचारित्वादेवंलक्षणकं च यत् ।
प्रसिद्धमनुमानादि न परीक्ष्यं तदप्यतः ॥ १ ॥

अत्र भाष्यकारेण विज्ञानवादान्ते "अतो न व्यभिचरति प्रत्यक्षम्" इति प्रत्यक्षाव्यभिचारित्वमुपसंहृत्य 'अनुमानं ज्ञातसम्बन्धस्ये'-त्यादिनाऽनुमानलक्षणं प्रणीतम् । तस्य तात्पर्यं दर्शयति — प्रत्यक्षेति । अयमर्थः । वृत्तिकारग्रन्थे हि 'तेन व्यभिचरति प्रत्यक्षम् । तत्पूर्वकत्वाच्चानुमानाद्यपि' इति प्रत्यक्षव्यभिचारपूर्वकमनुमानादीनामपि व्यभिचारात् परीक्ष्यत्वमुक्तम् । तत्र प्रत्यक्षाव्यभिचारित्वे प्रतिपादिते व्यभिचारिकारणप्रभवत्वेन तावद् व्यभिचारशङ्का प्रत्युक्ता । यदि परं स्वरूपाश्रयो व्यभिचारस्सम्भवति । सोऽपि वक्ष्यमाणलक्षणकेषु नाशङ्कनीय एव । न हि प्रतिबुद्धदृशः प्रतिबन्धकसंनिधिविदितव्यभिचाराः । सकलव्यवहारोच्छेदप्रसङ्गात् । एवमितरेष्वपि यथास्वमवसरे वक्ष्यामः । तस्मादनुमानाद्यपि लोकप्रसिद्धं न परीक्षितव्यमिति ॥

इयं च सर्ववक्ष्यमाणप्रमाणलक्षणभाष्यतात्पर्यव्याख्या साधारणी वार्तिककारेण कृता । सर्ववक्ष्यमाणप्रमाणप्रपञ्चस्य हीदमेव साधारणं व्याख्यानम् । अनेन च श्लोकेन समर्थितारम्भावसरः प्रपञ्चो विशेषतो व्याख्यास्यत इति । तदेतदुक्तं भवति । नात्र नैयायिकादिवदलौकिकं प्रमाणानां

P. T. 2629 500. 19-5-116

स्वरूपमुपदर्शयितुं लक्षणानि प्रणीतानि । लोकप्रसिद्धप्रमा(णा)व्यभिचारित्वान्मीमांसकानाम् । किन्तु शङ्कितव्यभिचारापादितपरीक्षाप्रत्याख्यानार्थं लोकप्रसिद्धमेव स्वरूपमुपदर्श्यते । अतो न प्रमाणलक्षणे सङ्गतिः प्रत्यक्षादिलक्षणस्याशङ्कितव्येति ॥ १ ॥

इदानीं लक्षणभाष्यव्याख्यानावसरे प्राथम्यादनुमानलक्षणमनुसन्धास्यति । तत्र च 'ज्ञातसम्बन्धस्ये'त्युच्यते । तत्र न विद्मः को ज्ञातसम्बन्धसमासार्थ इति । न तावत् पुरुषस्सम्बन्धी समुदायो वा । अनुपादानात् । न ह्यनुपात्तान्यपदार्थको बहुव्रीहिर्भवति । ननु बुद्धिसम्बन्धोपस्थापितः पुरुषस्समुदायिद्वयाक्षिप्तस्समुदायो वा विशेष्यते । बुद्धिर्हि स्वशब्दादवगता तद्धन्तमन्तरेणात्मानमलभमानोपस्थापयति स्वाश्रयमिति नानुपादानदोषः । नैतदेवम् । गम्यमानस्याविशेषणात् । न खलु धूमशब्दार्थाविनाभावादवगतोऽग्निर्ज्वलतीति विशेष्यते । वक्ष्यति च —

गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।

इति । स्यान्मतम् । सत्यम् । अनुपात्तं न विशेष्यते । उपात्त एव त्विह सम्बन्धी । तथाहि अयमत्र पदान्वयः । अनुमानमेकदेशदर्शनादेकदेशान्तरे बुद्धिरिति । अतः कस्यैकदेशस्येत्याकाङ्क्षायां स एवैकदेशो ज्ञातसम्बन्धस्येति विशेष्यते । ननु दर्शनोपसर्जनत्वादेकदेशो न विशेषणमर्हति । न ह्युपसर्जनं पदं पदान्तरेण सम्बध्यते । न हि भवति पुरुषं प्रत्युपसर्जनीभूतस्य राज्ञः ऋद्धस्य राजपुरुष इति विशेषणम् । उच्यते । नोपसर्जनत्वादसम्बन्धः । आकाङ्क्षितं हि पूरणसमर्थमुपसर्जनेनापि सम्बध्यत एव । अनेकदेशदर्शनादित्युक्तेऽस्ति कस्यैकदेशस्येत्याकाङ्क्षा । अर्थसम्बन्धेऽप्याकाङ्क्षैव हेतुः । उपसर्जनसंज्ञा तु "उपसर्जनं पूर्वम्" (२-२-३०) इति पूर्वप्रयोगसिद्ध्यर्थैव । अत एव हि कस्य गुरुकुलमिति व्यवहारोपपत्तिः । तत्र हि कुलोपसर्जनस्यैव गुरोः कस्येति विशेषणम् । अपिच दर्शनक्रियाकर्मणो दृश्यस्यैकदेशस्य प्राधान्यमप्रधानस्य सापेक्षस्यापि पदान्तरेण सम्बन्धो दृष्टः, यथा राजपुरुषश्शोभन इति । अत उपपन्नं ज्ञातसम्बन्धस्यैकदेशदर्शनादिति । नोपपन्नम् । उक्तं हि गुरुणैव — "नोपसर्जनं पदं पदान्तरेण सम्बध्यते ऋद्धस्य राजपुरुष इतिवत्" इति । न च परिहृतम् । उपसर्जन-

१, 'व्यवहारि'



**प्रमाता ज्ञातसम्बन्ध एकदेश्यथवोच्यते ।**
**कर्मधारयपक्षो वा सम्बन्धिन्येकदेशता ॥ २ ॥**

विशेषणे हि ऋद्धी राजानं विशिष्यात् । यत्तूक्तम् — "आकाङ्क्षा सम्बन्धे हेतुः" इति तदयुक्तम् । आकाङ्क्षावतोऽप्ययोग्यस्य पदान्तरानन्वयात् । इह च दर्शनोपसर्जनत्वादन्वयायोग्यत्वमुक्तम् । अथोच्येत एकवाक्यतायाभयं दोषः एकदेशदर्शनाद् एकदेशान्तरे बुद्धिरनुमानम् । अतः पर्यवसिते वाक्ये कस्यैकदेशस्येत्याकाङ्क्षायां वाक्यगतमेकदेशस्येति पदं ज्ञातसम्बन्धस्येति विशेष्यत इति । तन्न । आकाङ्क्षावाक्यस्याश्रवणात् । स एवानुपात्तान्यपदार्थदोषः । यत्र तूपादानं तत्रोपसर्जनत्वादयोग्यत्वमुक्तम् । अपि च वाक्यभेद एवात्र दोषः । यच्च दर्शनं दृश्यप्रधानमित्युक्तं, तदप्ययुक्तम् । उत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य । न च वास्तवं गुणप्रधानभावमाश्रित्य पदान्तरसम्बन्धो दृष्टः । राजपुरुषेऽदर्शनात् । ननु शाब्दमेवैकदेशस्य प्राधान्यं गम्यते । कृद्योगलक्षणा हीयं कर्मणि षष्ठी । न । अश्रवणात् । नहि समासे षष्ठी श्रूयते । न चाश्रूयमाणा स्वार्थमभिधत्ते । किन्तु निषादस्थपतिवल्लक्षणया तदर्थोऽवगम्यते । श्रुत्या तु दृश्यावच्छिन्नं दर्शनमेव प्रधानतयावगम्यते । उत्तरपदार्थप्रधानानुशासनमप्यत एव । समासात् तथैवावगतेः । न च वास्तवं प्राधान्यमुपसर्जनस्य पदान्तरसम्बन्धे सापेक्षसमासे वा हेतुः । कस्य गुरुकुलमिति नित्यसापेक्षत्वाद् गुरुशब्दस्य नासामर्थ्यं दोषः न ह्यनन्तर्भाव्य प्रतिसम्बन्धिनं गुर्वर्थोऽवगम्यते । सम्बन्धिशब्दत्वात् तस्य । अतोऽपेक्षितार्थान्तर एवासौ वृत्तावनुप्रविशतीति न दोषः । न त्वेवमेकदेशशब्द इति वैषम्यम् । अतो दुरधिगमो ज्ञातसम्बन्धसमासार्थः ।

अत आह — प्रमातेति । अयमभिप्रायः — सत्यम् । एकदेशो नान्यपदार्थः । किन्तु प्रमातैव बुद्धिसम्बन्धोपस्थापितो ज्ञातसम्बन्ध इति निर्दिश्यते । गम्यमानमपि चाव्यभिचारिणा चिह्नेनोपस्थापितं विशेष्यत एव । न हि नमः पिनाकपाणय इत्यन्यपदार्थानुपादानं दोषाय । अपि च ऐन्द्रवायवं गृह्णातीति बहुव्रीहिसमासार्थो देवतातद्धितः कथमाहुत्यानुपात्ते सोमरसे वर्तते । यथ सोमं क्रीणाति अभिषुणोति पावयति

धारया गृह्णातीति प्रकरणावगतस्सोमरसोऽन्यपदार्थ इत्युच्यते । इहापि बुद्धयविनाभावावगतस्य प्रमातुर्बहुव्रीह्यर्थत्वं नानुपपन्नम् । पूर्वपक्षस्थितेन वार्तिककृता गम्यमानं न विशेष्यत इति यदुक्तं तदेव दुर्लभलब्धमिव मन्वानैः कैश्चिद्वल्गितमित्युपेक्षणीयमेव । सिद्धान्ते हि गम्यमानाया एव व्यक्तेर्गावौ गावः शुक्लो गौरिति च विभक्त्या शब्दान्तरेण च विशेषणं भविष्यति । मञ्चाः क्रोशन्तीति च । आह च —

जातेरस्तित्वनास्तित्वे न हि कश्चिद् विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥

इति । धूमोऽयं ज्वलतीति न भवति । अनभिधानात् । न हि लोकः पर्यनुयोक्तुमर्हति । यस्तु वैयात्याद् धूमशब्देनाग्निं लक्षयित्वा तथा प्रयुङ्क्ते न तं निवारयामः । नन्वेवं प्रमातरि ज्ञातसम्बन्धे सति नैकदेशो विशेषित इति व्यापकैकदेशदर्शो व्याप्यस्मृतिरनुमानमापद्येत । न त्वेतदिष्टम् । व्याप्याद्धि व्यापकज्ञानमनुमानम् । ज्ञातसम्बन्धस्यैकदेशस्येति सम्बन्धे स्यादपि विशिष्टैकदेशलाभः । तत्र हि ज्ञातसम्बन्धस्येति षष्ठ्या व्याप्य एव सम्बन्धी प्रतिपाद्यते । सर्वत्र हि व्याप्य एव हि षष्ठी दृष्टा । उच्यते । उक्तमस्माभिर्नेदमलौकिकं किञ्चित् प्रमाणानां स्वरूपमुपवर्ण्यते । लोकप्रसिद्धमेव स्वपरीक्षाप्रतिपादनार्थं स्वरूपमनूद्यते । लोके हि नियाम्यैकदेशदर्शन एव नियामकैकदेशज्ञानमनुमानमिति प्रसिद्धमिति । असत्यपि हि विशेषणे विशिष्टैकदेशो लभ्यते । अपि चासन्निकृष्टेऽर्थे इति वदति । न च व्यापकदेशस्साहचर्यमात्रात् व्याप्यस्मृतिरसन्निकृष्टविषया । पूर्वप्रमाणानधिकार्थाविषयत्वात् स्मृतेः । व्याप्यादेव त्वनुभूतपूर्वनियमाद् व्यापकविशिष्टः पर्वतादिरवगम्यते । अत उपपन्नो विशिष्टैकदेशलाभ इति । यत्तु ज्ञातसम्बन्धस्यैकदेशस्येत्यत्र षष्ठ्या विशेषप्रतिपादनमुक्तम् । तदयुक्तं व्यापकादपि षष्ठ्युत्पत्तेः । भवति हि कृतकत्वमनित्यताया हेतुरिति व्यवहारः । व्यापिका चानित्यता कृतकत्वस्य । तस्मादविशेषितोपादानेऽपि व्याख्यानतस्सम्बन्धविशेषा(देक)देशविशेषलाभो नानुपपन्नः । भवति हि 'व्याख्यानतो विशेषप्रतिपत्तिर्न तु सन्देहादलक्षणम्' इति सूक्तं प्रमाता ज्ञातसम्बन्ध इति ।



द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् ।
तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥ ३ ॥

व्याख्यानान्तरमाह — एकदेशीति । एकदेशौ हि नैकदेशिनमन्तरेण स्यातामिति आक्षिप्तस्यैकदेशिनो युक्तमन्यपदार्थत्वम् ।

नन्वेवं ज्ञातसम्बन्धस्यैकदेशिनो य एकदेशस्तस्यैकदेशस्य दर्शनादित्युच्यमाने स एव दर्शनोपसर्जनत्वादेकदेशस्यैकदेशिनः सम्बन्धस्सम्बन्धिविशेषापेक्षस्य वा समासदोषः प्रसज्यते । भवेदेतदेवम् । यद्येकदेशव्यतिरेकजनिता षष्ठी स्यात् । इयं त्वेकदेशदर्शनव्यतिरेकजनिता षष्ठी तदपि परम्परया वाजपेयस्य यूप इतिवदेकदेशिनो भवत्येव । कः पुनस्त्रैकदेशी ज्ञातसम्बन्धः पक्षस्सपक्षो वा । न तावत् पक्षः ज्ञायमानसम्बन्धत्वात् । न च सपक्षः सिद्धत्वेनाननुमेयत्वात् । नैष दोषः । व्याप्तिर्हि न सकृद्दर्शननिग्राह्या । भूयोभिस्तु दर्शनैः पूर्वपूर्वावगतसकलदेशकालविविक्तधूमवन्मात्रत्याग्निमत्तया व्याप्तिरवधारिता । न पुनरत्रायमिदानीं वा धूमवानग्निमानिति । अतः पक्षैकदेशिनोऽपि सामान्यतो धूमवत्तौपाधिकसम्बन्धो ज्ञात इति स एव ज्ञातसंबन्धः । सामान्यतो गृहीतेऽपि देशादिभेदेन प्रत्यक्षप्रत्यभिज्ञानवदनुमानप्रत्यभिज्ञानमनुपपन्नमिति न प्रमेयाभावः । एकदेशैकदेशौ चाश्रयाश्रयिणावभिमतौ । न पुनरवयवावयविनाविति द्रष्टव्यमिति ॥ १½ ॥

कर्मधारयसमासो वायमित्याह — कर्मधारयेति । अयमर्थः — ज्ञातश्चासौ संबन्धश्चेति कर्मधारयोऽयम् । अत्र च पक्षे संबन्धिनि गम्ये गमके चैकदेशता । कथं सम्बन्ध्याधारस्य सम्बन्धस्य सम्बन्धिनावेकदेशौ । न हि धूमाधारस्य धूमस्यैकदेशो गिरिः । आधेयमेव तु धूमस्तदेकदेशतया मन्यते । उच्यते । भवत्याधारांशेऽप्येकदेशवाचोयुक्तिः । यथा अवयव्याधारेष्ववयवेषु च समूहिष्विति निरवद्यम् ॥ २ ॥

द्वयं वाऽन्यपदार्थ इत्याह — द्वयं वेति । सम्बन्धग्रहणकाले परस्परसम्बन्धमुपलब्धं व्याप्यव्यापकद्वयं ज्ञातसम्बन्धमुच्यते, तस्य च समुदायिनावेकदेशौ । यथा चैतदेवं तथा प्रागेवोक्तमिति । किं

पुनः कर्मधारयपक्षे द्वयान्यपदार्थत्वे वा प्रमेयम् । न तावत् सम्बन्धसमुदायावेव । तयोः पूर्वमेवावगतत्वात् । अधुना च धर्मधर्मिविभागेनानवगमात् । न चान्य एकदेशी । तस्यानुपादानात् । न चैकदेशाभ्यामाक्षेपः । सम्बन्धसमुदायनिराकाङ्क्षत्वात् । न च स्वतन्त्रैकदेशदर्शनात् स्वतन्त्रैकदेशान्तरे ज्ञानमनुमानं, सिद्धत्वात् । वक्ष्यति हि न धर्ममात्रं, सिद्धत्वादिति । अत्राभिधीयते— अयमत्रार्थो ज्ञातस्य सम्बन्धस्य ज्ञातसम्बन्धस्य वा द्वयस्य क्वचिदेकदेशदर्शनात् तत्रैवैकदेशान्तरे बुद्धिरनुमानमिति । कुत एतत् । असन्निकृष्टग्रहणात् । न हि स्वतन्त्रैकदेशोऽसन्निकृष्टः । क्वचिदेव पर्वतादावेकदेशोऽसन्निकृष्टो भवति। तत्रानवगतपूर्वत्वादिति किमनुपपन्नमिति ।

कः पुनरत्र सम्बन्धोऽनुमानाङ्गमिष्यते । अविनाभावस्तादात्म्यतदुत्पत्तिनिमित्तक इति केचित् । एवं हि तैरुक्तम् ॥

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥"

इति । न हि विपक्षसपक्षयोरदर्शनाद् दर्शनाद्वाविनाभावसिद्धिः । तेनानियतस्यापि तत्र वृत्तेः सम्भवात् । किञ्चिद्विपक्षव्यावृत्त्या च सर्वविपक्षव्यावृत्त्यसिद्धेः । सर्वविपक्षाणां च युगपद् ग्रहीतुमशक्तेः । किन्तु अग्न्यादौ सति धूमादेर्भावादसति चाभावात् तदायत्तस्वभावो धूमादिरिति विदिते तदविनाभावस्सिद्ध्यति । तत्कार्यस्य तमन्तरेणात्मलाभाभावात् । तदत्राग्नौ दर्शनमितरत्रादर्शनं तदुत्पत्तौ हेतुः । ततोऽविनाभावसिद्धिः । तादात्म्येऽपि तत्सिद्धिः तं विना भवतस्तादात्म्यानुपपत्तेः ।

नन्वेवंविधान्वयविरहिणो गन्धाद्य रूपरसादयोऽनुमीयेरन् । न च खलु तस्य रूपमात्मा । न च कारणमिति कथं ततस्तत्सिद्धिः । श्रूयतां यथा सिद्ध्यति । रसादेव हि स्वहेतावगमाविव धूमादनुमीयमाने समसामग्रीकेन्धनविकारवद्रूपावगतिरिति नानुपपत्तिः । यथाहुः—

"एकसामग्र्यधीनस्य रूपादे रसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥"



इति । ननु युक्तेन्धनविकारे तस्य धूमस्य चैकाग्निकारणत्वादवगतिः । न तु रूपरसावेककारणकौ । कारणरसा हि कार्ये रसमारभन्ते । कारणरूपाणि च कार्ये रूपम् । तत् कुतस्समानकारणता । नैककारणतयैकसामग्र्यधीनत्वम् । किन्तु रसाद् रसहेतुरनुमीयमानः प्रवृत्तिरूपजननशक्तिरूपोपादानकारणसहकृतोऽनुमीयते । तथाविधस्यैव कारणत्वात् प्रवृत्तिशक्तिना च कारणेन रूपं जन्यत इति रूपसिद्धिः । तदिदमनुपपन्नम् । यत् तावत् कार्यं कारणेन विना न भवतीति ततस्तज्ज्ञानमुक्तम् । तदयुक्तम् । कथं हि कारणेन विना कार्यमेव न भवति इत्येतदेवावसेयम् । तद्विना भवतो नित्यं सत्त्वमसत्त्वं वा स्यात् । ततश्च कार्यतैव हीयेत । उक्तं हि तैः—

"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः ॥"

इति । अपेक्षातः कादाचित्कत्वमनपेक्षं तु सदसद्वा स्यात् । गगनशशविषाणवदिति चेत् । यद्येवमन्योऽयं कार्यकारणभावात् स्वभावनियमः यदनपेक्षं तन्नित्यं सदसद्वा भवतीति । यच्च रसाद्रूपावगतिरेकसामग्र्यधीनत्वादित्युक्तम् । तदप्ययुक्तम् । यद्यपि प्रवृत्तिशक्तिरूपोपादानकारणसहकृतो रसहेतुरवगतः स्वकार्याद् , रूपं तु कुतोऽवगम्यते । प्रवृत्तिसामर्थ्यात् कारणादिति चेत् । ननु नादो रूपस्य कार्यं नाप्नोति कथं तदवगमे हेतुः । प्रवृत्तिशक्तेः कारणस्य कार्याव्यभिचारादिति चेत् । न । तर्हि कार्यतदात्मनोरेवाविनाभावः कारणेऽपि (भावाद् ? भवेत् ) । भवत्विति चेत् । न । अग्नेरपि धूमानुमानप्रसङ्गात् । अस्त्विति चेत् । अतन्त्रं तर्हि कार्यत्वमनुमाने । स्यान्मतम् । न प्रवृत्तिसामर्थ्यात् कारणाद् रूपानुमानम् । अपि तर्हि रूपवद्रूपकारणसहकारिणा रसकारणेन रसो जन्यते । सहकारिकारणमपि सविशेषणं कारणमेवेति रसादितरेतरानुगृहीतं कारणचक्रमनुमास्यत इति । तन्न । कार्यकारणयोरयौगपद्याद्रूपकारणस्य तद्रसानुपपत्तिः । पारिशेष्याद् (दृष्याद्?) रूपमेव सहकारीति वाच्यम् । तत्र च वृथा तत्कारणानुमानपरिश्रमः । रूपं सहकारीत्यपि नानिर्णीतरूपरसाविनाभावोऽनुभवितुमुत्सहते । प्रागेव तु तन्निर्णये वृथारूपतद्धेत्वोस्सहकारित्वकल्पना ।

सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना ॥ ३½ ॥

---

अपि चानुभवविरुद्धमेवेदम् । न खलु रसमुपलभ्य तद्धेतुत्वमनुसन्धानमुखेन रूपावगतिर्लौकिकानाम् । अपि तर्हि रूपरसयोस्साहित्यनियमात् सहसैव रसाद् रूपमनुमीयते । अपि च कार्यकारणभूतयोरेव बहुलमनुमानव्यवहारो दृश्यते इत्यनादृत्यं कार्यत्वमव्यभिचारे । तादात्म्यमपि भेदाभावप्रसङ्गाद्धेयमेव । किं हि वृक्षात्मनि शिंशपात्वे विदिते भेदमवशिष्यते । निर्भागत्वात् । ऐकात्म्येऽपि वस्तुनः काल्पनिको भेद इति चेत्, न तावन्निर्भागं वस्तु, भागावग्रहाणां देशादिभेदेऽप्यबाधितानां सम्भवत्वात् । काल्पनिकभेदाश्रयत्वाच्चानुमानस्य वास्तवमैकात्म्यमनङ्गम् । वृक्षव्यवहारोऽनुमीयत इति चेद् कथमनात्मव्यवहारश्शिंशपात्वादनुमीयते । तादात्म्ये वृक्षवदननुमानप्रसङ्गात् । व्यवहारयोग्यतायामप्येवमेवेति यत् किञ्चिदेतत् । एवमेव वैशेषिकादिसमयसिद्धा अपि कार्यकारणभावादयस्सम्बन्धप्रकाराः प्रत्युक्ता वेदितव्याः । तेऽपि ह्यनियतानुमानोत्पत्तिकारणम् । अस्तु तर्हि नियमो वानुमानाङ्गम् । न । प्रमाणाभावादनवगतेः । न तावदापातजं प्रत्यक्षमस्यावधारणक्षमम् । ईक्षते खल्वयं विस्फारिताक्षस्सहसा महानसे धूममग्निना सहितम् । न तु जानाति नियतोऽयमनेनेति । दुरधिगमो हि सर्वभावानां स्वभावनियमः । न तमुन्नेतुमुत्सहन्ते झटिति महान्तोऽपि । न हि निर्विकल्पकागोचरे विकल्पः प्रमाणम् । तत्पुरस्सरत्वात् तस्य । स्यादेतत् । देशादिभेदेष्वव्यभिचारात् स्वभावनियमोऽवधार्यत इति । केनावधार्यते सर्वदर्शनानामन्वयमात्रे व्यापारात् ॥

अथ पूर्वपूर्वज्ञानजनितभावनासचिवमन्तिमदर्शनमयं नियत इति प्रवृत्त्यालोचनाज्ञानम् । ततो विकल्पाः प्रवर्तिष्यन्त इति । नैतदेवम् । इन्द्रियव्यापारसापेक्षं हि प्रत्यक्षम् । न च सहभावदर्शनादन्यत्र बहिरिन्द्रियव्यापारः । न च बहिर्विषयवेदने तन्निरपेक्षमन्तःकरणं प्रवर्तते । अपि च निरूपितरूपा अपि भावा देशादिभेदेष्वन्यथाभवन्तोऽनुभूयन्त इति न स्वभावनियमं प्रत्याश्रयितुमुचितं प्रामाणिकानाम् । तदाहुः —

"देशकालादिरूपाणां भेदाद् भिन्नासु शक्तिषु ।
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥"



व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥ ४ ॥
यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा ॥ ५ ॥
तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते ।
न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः ॥ ६ ॥

---

इति तस्माद् वक्तव्योऽनुमानाङ्गभूतस्सम्बन्धः । अत आह — सम्बन्ध इति । व्याप्तिर्हि साहित्यनियममपदिशति । तद्दर्शिनो ह्येकदेशदर्शनादेकदेशान्तरे बुद्धिरुत्पद्यते, अतस्सामान्यवचनोऽपि सम्बन्धशब्द व्याप्तिसमभिव्याहारादत्रानुमानलक्षणग्रन्थे विशेषपरो भवति । उपरि तस्यावधारणे प्रमाणं वक्ष्यत इति ॥ ३½ ॥

यदि ज्ञातसम्बन्धस्यानुमानं स तर्हि सम्बन्धो ह्याश्रय इत्युभयानुमाने लिङ्गं स्यादत आह— व्याप्येति ॥ ४ ॥

अत्र कारणमाह— यो यस्येति द्वयेन । सः —समन्यूनदेशकालो हि व्याप्यो भवति । पूर्वं तावद् यत्रोभयोरपि धर्मयोर्व्याप्यव्यापकत्वम् । तथा परस्तादुदाहरिष्यते । उत्तरस्तु यथा धूमादिः, स हि प्रायेणाग्निदेशकालवर्ती भवति । सत्यपि चाग्नावभवंस्ततो देशकालाभ्यां न्यूनो भवति । अग्निनावच्छिन्नदेशकालौ तावन्तौ नास्येति न्यूनत्वम् । अत एव चासावग्नेर्गमको न भवति । सकलतदीयदेशकालाव्याप्तेः । व्यापकस्तु समाधिकदेशकालः । अत्रापि पूर्वोक्त एव पूर्वः । उत्तरस्तु यथाऽग्निरेव धूमस्य । स हि तस्य देशकालौ तावद् व्याप्नोत्येव । असत्यपि धूमे भवन् देशकालाभ्यामधिकोऽप्यभिधीयते । यतश्चानयोरीदृशं स्वरूपं नान्यथा व्याप्यव्यापकतात्मकता, तेन कारणेन व्याप्य एव गृहीते व्यापकस्य ग्रहणं भवति यदसौ तं विनापि न भवत्येव । न ह्यसावग्निरिव धूमस्याग्निदेशकालातिक्रम्यापि भवति । येन तं विनापि भवस्तं न गमयेत् । अग्निर्नैवंविध इति नासौ धूमस्य गमको भवति । ननु चायं विशेषो

व्यापकत्वगृहीतस्तु व्याप्यो यद्यपि वस्तुतः ।
आधिक्येऽप्यविरुद्धत्वात् व्याप्यं न प्रतिपादयेत् ॥ ७॥

विस्पष्टं दृष्टमेतच्च गोविषाणित्वयोर्मितौ ।
व्याप्यत्वाद् गमिका गावो व्यापिका न विषाणिता ॥ ८॥

---

ज्ञातसम्बन्धशब्दाद्वावगम्यते । स हि सम्बन्धज्ञानमात्रमङ्गतया दर्शयति, न व्याप्यतामिति कुतो विशेषलाभः । उक्तमत्र लौकिकलक्षणानुवादेनापरीक्षाप्रतिपादनार्थमिदं भाष्यम् । लोके च व्याप्यैकदेशदर्शिन एव व्यापकज्ञानमनुमानमिति सिद्धम् । नह्यन्यथेति चापकृष्य पूर्वेण योजयित्वा तेनेति तदुपजीवनेन व्याख्येयमिति ॥ ६ ॥

ननु व्यापकादपि व्याप्यसंवित्तिर्दृष्टा । अनित्यत्वादिव कृतकत्वस्य । भवति हि भावानामनित्यत्वात् कृतकत्वानुमानम् । व्यापकं चानित्यत्वं कृतकत्वस्य । अतो व्यापकं गम्यं व्याप्यं गमकमित्यव्यापकमत आह — व्यापकत्वेति । अयमभिप्रायः । सत्यं व्यापकस्य गमकत्वम् । न तु व्यापकत्वगृहीतस्य । तेन हि रूपेण गृहीतोऽसौ व्याप्याद् देशकालाधिक्येऽपि न विरुध्यते । न चाधिकदेशकालः प्रतिपादको भवति तं विनापि भावादित्युक्तमेव । ननु व्याप्यतापि तस्यास्ति । अस्तु नाम वस्तुतस्तत्तु रूपं न गृहीतमिति कथं गमकत्वम् । अवगते तु ताद्रूप्ये तेनैव गमकत्वं न व्यापकतया । अतो व्याप्यतैवानुमानाङ्गं न व्यापकतेति सूक्तमिति ॥ ७ ॥

व्याप्यत्वमङ्गं न व्यापकत्वमित्येतदेवासङ्कीर्णोदाहरणेन दर्शयति — विस्पष्टेति । यत्र व्याप्यव्यापकभावो न सङ्कीर्यते, तत्र विस्पष्टमेवैतदुपलक्षितम् । यथा व्याप्यं गमकं व्यापकं गम्यमिति । गोविषाणित्वयोर्व्याप्यं गोत्वं व्यापकं विषाणित्वमनुमापयति न तु विषाणिता गोत्वम् व्यापिका हि सा । मितौ— अनुमाने । गोविषाणित्वयोरयं गम्यगमकविवेको दृष्ट इत्यर्थः ॥ ८ ॥



तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ ।
तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितेः ॥ ९ ॥

तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी ।
देशे यावति काले वा व्याप्यता प्राङ्निरूपिता ॥ १० ॥

---

एवमसङ्करे गम्यगमकविवेकाद् यत्रापि व्याप्तिसङ्करो भवति तत्रापि व्याप्यत्वमेव गमकत्वे कारणमिति निष्कृष्यत इत्याह— तेनेति ॥ ९ ॥

ननु व्याप्तिरनुमानाङ्गमित्युक्तम् । कस्य पुनरियं संयोगिनस्समवायिनस्सम्बन्धिसम्बन्धिनो वा । न ह्यत्र व्यवस्थामुपलभामहे । सर्वेषामप्यनुमापकत्वात् । तद् यदि संयोगी व्याप्यः । रसाद्रूपानुमानं न स्यात् । अथ समवायी धूमादग्न्यनुमानम्, सम्बन्धिसम्बन्धिनश्च पित्रोर्ब्राह्मणत्वात् पुत्रस्य ब्राह्मणत्वानुमानमित्यादि दर्शयितव्यम् । अपि च व्याप्तिरित्यन्वयोऽभिधीयते । उपश्लेष इति यावत् । न चासौ भूमौ प्रतिष्ठितेनाग्निना गगनगतस्य धूमाभ्रस्य सम्भवति । न च भूमिष्ठां शङ्कुच्छायां दिवि वर्तमानः ऋक्षोदयोऽन्वेति । व्याप्तिश्च कस्यचित् केनचिद् भवन्ती देशतो वा स्यात् कालतो वा । पूर्वस्मिन् कल्पे भाविनस्सवितुरुदयस्याद्यतनार्कस्यैवोदयात् षष्ठे यामानतिक्रम्यानुमानं न स्यात् । परस्मिन् धूमादग्न्यनुमानमित्यादि पर्यनुयोक्तव्यम् । अत आह—तेनेति द्वयेन । येन खल्वपि विवक्षितावान्तरविभागं व्याप्यतामात्रमनुमानाङ्गम्, तेन कारणेन यस्यैव संयोगादीनामन्यतमस्य, येनैव तेषामन्यतमेन, यादृशी उपश्लिष्टेनेतरेण वा व्याप्यता प्रागवगता, सैवानुमाने कारणं भवति । नह्युपश्लेषो व्याप्तिः । उक्तं हि—"सम्बन्धनियमोऽसावि"ति । स चानुपश्लिष्टेनापि भवति । यो हि यस्मिन् सति भवति, असति च न भवति, तेन नियम्यत इत्युच्यते । किमत्रोपश्लेषेण । न चात्र देशादीनामन्यतमविवक्षा । यावति हि देशे काले वा वर्तमानस्य यस्य व्याप्यता निरूपितपूर्वा, यावद्देशकालभाविना व्यापकेन तस्य व्यापकांशस्य तावत्येव देशादौ वर्तमानस्य स व्याप्यांशस्तादृगेव, गगनादिवर्त्तिधर्म्यन्तरे दृष्टान्तधर्म्यपेक्षया साध्यधर्मिणि दृष्टस्सन् प्रतिपादको भवति ।

**तस्य तावति तादृक् स दृष्टो धर्म्यन्तरे पुनः ।**
**व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः ॥ ११ ॥**
**भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः ।**
**ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः ॥ १२ ॥**

नियमो ह्यनुमानाङ्गम् । स च सर्वेषामविशिष्ट एव किमवान्तरविभागेन । देशे यावतीत्यनतिदूरमधिरूढस्य धूमादेर्दूरतरवर्तिनोऽपि नदीपूरस्य व्याप्तिं दर्शयति । शङ्कुच्छायायाश्च नितान्त(दूर)वर्तिना ऋक्षोदयेन । यावति काल इति च भाविनस्सवितुरुदयानुमानादावपि व्याप्तिं दर्शयतीति ॥ ११ ॥

नन्वस्यां व्याप्तौ न किञ्चित् प्रमाणमस्तीत्युक्तमत आह — भूयोदर्शनेति । कथं पुनर्भूयोदर्शनगम्या व्याप्तिः । किं हि तत्र प्रत्येकमेव भूयांसि दर्शनानि प्रमाणमाहोस्विद् दर्शनसङ्घातः पूर्वतनदर्शनाहितसंस्कारसचिवमन्तिमं प्रमान्तरं वा भूयोदर्शनप्रभवम् । तत्र न तावत् प्रत्येकसन्दर्शनसमधिगम्या व्याप्तिरित्यवसितमेव । नो खल्वस्य सहसाग्निधूमावग्निशरणे विलोकयमानस्याग्निना व्याप्तो धूम इति मतिराविरस्ति । न चाननुभूतमविकल्पकेन सविकल्पकेनापि विषयीक्रियते । न चानेकदर्शनारब्धो दर्शनसमुदायः कश्चिदस्ति, तस्य दर्शनातिरेकेणाभावात् । निरुद्धानागतप्रत्युत्पन्नानां चासंहन्यमानत्वात् । पुरस्तनानेकदर्शनाहितसंस्कारसहायमन्तिमं तु दर्शनं कतरत् प्रमाणमिति चिन्तनीयम् । न तावत् प्रत्यक्षम् । तद्धि द्वेधा विभक्तम् । आलोचनाज्ञानं तत्प्रभवं च विकल्पसम्भिन्नम् । न तावत् पूर्वं व्याप्तेरवधारणे समर्थम् अप्रतिसन्धानात् । व्याप्तेश्चायमनेन प्रतिबद्ध इति प्रतिसन्धानात्मकत्वात् । नच तदनपेक्ष्युत्तरमात्मानं लभते । यच्चेदं संस्काराणां साचिव्यम्, इदमपि न चतुरश्रम् । संस्काराः खलु यद्वस्तुरूपोपलम्भसम्भावितात्मानो भवन्ति, तत्रैव स्मृतिमात्रमादधति । न पुनरर्थान्तरग्रहणाय कल्पन्ते । प्रत्यक्षे च व्याप्तिप्रमाणे कथमतद्विषयाणां व्याप्तिसिद्धिः । भवति हि यथायथं दृष्टानुमितश्रुतेभ्यः कर्मफलेभ्यः पुंविशेषेषु वैदिककर्मानुमानम् । न च तत्तत्कर्मनियमस्तस्य तस्य पश्वादेः फलस्यापरोक्षमीक्ष्यते अतीन्द्रियत्वात् । यच्चेदमध्वरे



वितते वैदिकादङ्गात् प्रधानाच्चापूर्वानुमानम्, तदपि न स्यात् । व्याप्त्यवधारणे प्रमाणाभावात् । मेघाभावाच्च वृष्ट्यभावानुमानमित्यादि दर्शयितव्यम् । अतो न तावत् प्रत्यक्षा व्याप्तिः । न चानुमानिकी । प्रमाणाभावादेव तदधीनात्मलाभस्य तस्यानुपपत्तेः । शब्दस्त्वनागतोत्पाद्यभावविषयो न सिद्धव्याप्तिकल्पने प्रभवति । उपमानमपि प्रमाणान्तरप्रसिद्धवस्तुसादृश्यमात्रविषयं न वस्तुनस्सत्तां प्रमिणोति । अर्थापत्तिरप्यन्यथानुपपद्यमानार्थविषया दर्शनप्रभवा । न च सहितावधारितयोरसत्यां व्याप्तौ किञ्चिदनुपपन्नं नाम ॥

ननु कार्यता नोपपद्यते । कथं हि कार्यमसति कारणे भवति । भूयोदर्शनसमधिगम्यं च कार्यत्वमिति भूयोदर्शनप्रसूतकार्यत्वावगमान्यथानुपपत्तिप्रमाणिका कारणव्याप्तिसिद्धिः । कथमिदानीमकार्यकारणभूतेषु व्याप्तिस्सेत्स्यति । भूयांसि दर्शनान्येवासत्यां व्याप्तौ नोपपद्यन्त इति चेत्, किं हि तेषां व्याप्तिमन्तरेण न सम्भवति स्वरूपं, तावच्च कारणसामग्रीकं हि वासिद्धम् । स्वगोचरप्रकाशनमपि स्वत एव विषयस्यापि स्वप्रमाणपरिच्छिन्नस्य न किञ्चिदनुपपन्नं पश्यामः । न चासौ प्रमाणान्तरेण प्रतिहन्यते । यन्नोपपद्येत । न च भावस्वरूपा व्याप्तिरभावेन प्रमीयत इति साम्प्रतम् । तन्नासावभावप्रमाणिका न स्यादेव ॥

स्यान्मतम् — केयमन्या धूमस्याग्निना व्याप्तिरनग्निनिवृत्तेः । सा चाभावरूपत्वादभावेन प्रमीयत इति युक्तमेव । तन्न । वस्तुरूपत्वात् । वस्तुरूपो हि स्वभावो धूमादेः केनचिन्नियतः । इतरथा व्यावर्तते खल्वयं शशविषाणाभावादपीति शशविषाणेनापि नियम्येत । कथमसता नियम्यत इति चेत् । को दोषः । व्यावृत्तिर्हि नियमः । सा चास्तीति किं शशविषाणस्य सत्त्वासत्त्वाभ्याम् । यदि मतं विपक्षव्यावृत्तिर्नियम इति । कोऽयं विपक्षो नाम । यो हि येन नियम्यते तस्य तत्परिपन्थी विपक्षः । व्याप्यते च शशविषाणेन तदभावान्निवृत्तो धूम इत्यनग्निरिव तदभावोऽपि विपक्ष एव । अपि चाशेषविपक्षाणामुपलब्ध्ययोग्यत्वान्न तेभ्यो निवृत्तिरभावेन शक्यतेऽवगन्तुम् । योग्यप्रमाणाभावो

ह्यभावे प्रमाणमिति वक्ष्यते । अतो न किञ्चिद् व्याप्तौ प्रमाणम्। मानसमिति चेत् । न । बहिरस्वातन्त्र्यात् । तत्रैतत् स्याद्—यद्यपि बहिरिन्द्रियाण्यतीतानागतादिभिर्भावभेदैर्व्याप्तिं ग्रहीतुमसमर्थानि, मनस्तु सकलातीतादिविषयपरिच्छेदसाधारणं प्रतिपन्नसामर्थ्यं क्वचिदिति तद्बलभाविना प्रत्यक्षेण व्याप्तिर्ग्रहीष्यत इति । तच्च नैवं, बहिरस्वातन्त्र्यान्मनसः । नो खल्वपि बहिर्विषयबोधे मनस्स्वतन्त्रमिति वर्णितम् । तथाहि "मनसस्सार्थ"मित्यत्र । स्वतन्त्रे हि बहिरिष्यमाणे मनसि सर्वस्सर्वदर्शी स्यात् । संस्कारतो व्यवस्थेति चेत् । न । स्मृतिहेतुत्वात् । तत्रैतत् स्यात्—यद्यपि केवलमस्वतन्त्रं मनो बहिर्विषयावधारणे, तथापि पूर्वपूर्वानुभवजनितसंस्कारसनाथं बहिरपि वर्तिष्यते चक्षुराद्यनुगृहीतमिव रूपादौ । अतो नाव्यवस्था । तच्च नैवम् । स्मृतिहेतुत्वात् । स्मृतिमात्रहेतवो हि पूर्वानुभवप्रभाविताः संस्कारा नोत्सहन्ते मनसो बहिरर्थग्रहेऽनुग्रहमाधातुम् । स्मृतिविषयान्तराणामपि ग्रहणप्रसङ्गात् । अस्ति हि तत्रापि स्मृतिहेतुस्संस्कारः । स चेद् ग्रहणे क्वचिन्मनसस्सहायी भवतीति किं न स्मृतिविषयान्तराण्यपि ग्राहयतीति यत् किञ्चिदेतत् ॥

यस्तु वदति—साहित्यमग्निधूमयोस्सम्बन्धः । स च प्रथमसमधिगमसमय एव संविदितः । अनवच्छिन्नदेशकालश्चाग्निधूमयोस्सम्बन्धो भासते । न हीदानीमत्र वा तयोस्सम्बन्ध इति भवति मतिः । अपि तर्हि सन्निहितवर्तमानयोरेवेदन्तया प्रतिभासमानयोर्देशकालौ सम्बन्धश्च तयोर्विशेषणमिमौ सम्बद्धाविति । नेदानीमत्र वा सम्बन्ध इति । तदेवमनवच्छिन्नरूपः स्वाभाविक एव संबन्धः सिद्धो भवति । स्वाभाविकत्वे च न व्यभिचाराशङ्कोपपत्तिमती । किमिदानीमनङ्गभूतमेव भूयोदर्शनम् । नानङ्गम् । अङ्गं त्वौपाधिकाशङ्कानिराकरणेन । वह्निर्हि धूमेन संयुक्तस्संवेदितोऽपि कदाचिद्विधूमो दृश्यते । तत्रार्द्रेन्धनादिरुपाधिरनुप्रविशति । न तु स्वाभाविकोऽग्नेर्धूमेन संबन्ध इति निश्चीयते । तद्दर्शनाच्च धूमेऽपि भवति शङ्का । कदाचिदौपाधिकः पावकेनास्यापि संबन्ध इति । सा भूयोदर्शनेन निवर्त्यते । बहुशोऽपि दृश्यमानस्य धूमस्य नाग्निसंबन्धे कश्चिदुपाधिरुपलभ्यते । प्रयत्नेनापि चान्विष्टो न दृष्ट उपाधिर्नास्तीति निश्चीयते । तदेवं



धूममात्रानुबन्ध्यग्निरिति सिद्धं भवति । ततश्चानौपाधिकस्य न व्यभिचाराशङ्केति । स वक्तव्यः किमिदानीं साहित्यमात्रमनुमानाङ्गं तन्नियमो वा । यदि साहित्यमात्रं तत्तर्हि प्रथमदर्शन एव समधिगतमिति पुनर्धूमदर्शिनोऽविदितव्याप्तेरप्यनुमानं स्यात् । अथ तन्नियमः, तस्यैवेदं प्रमाणमनुस्रियते कुतस्सिध्यतीति । न हि प्रथमदर्शिनोऽयमनेन नियत इति मतिराविर्भवन्ती दृश्यते । अनवच्छिन्नदेशकालतयावगतस्संबन्धः स्वाभाविको भवति, ततो नियम इति चेत् । स तर्हि तथाविधः प्रथममेवावगत इति भूयोदर्शनं नापेक्षेत । तथा दृष्टस्याप्यग्नेर्धूमसंबन्धो व्यभिचरति । तद्दर्शनाच्च धूमेऽपि व्यभिचाराशङ्का जायते । तन्निराकरणायासकृद्दर्शनापेक्षेति चेत्, यद्यनवच्छिन्नस्यापि देशतः कालतो वा कदाचित् कस्यचिद् वियोगो दृश्यते । कस्तर्हि इतरत्रापि समाश्वासः । नन्वियमाशङ्का भूयोदर्शनेन निराक्रियत इत्युक्तम् । कथं निराक्रियते । यदा शतशोऽपि धूमवानग्निरवगतो विधूमो दृश्यते । न चात्र प्रतिनियमः इयद्भिर्दर्शनैरव्यभिचारः सिध्यति इति ।

ननु धूमस्याप्यग्निसबन्धे न कश्चिदुपाधिरुपलभ्यते अग्नेरिव धूमसंबन्धे । अतः कथमसौ सत्यपि धूमे न भविष्यति । न । देशादेरेवोपाधित्वेन शङ्क्यमानत्वात् । अग्नौ धूमसंबन्धव्यभिचारमुपलभ्याशङ्कते — कदाचिद् धूमस्याप्यग्निसम्बन्धे देशकालाद्युपाधिः स्यादिति । दृष्टं हि क्वचिद् देशे खर्जूराणां पिण्डखर्जूरफलत्वम् । वृश्चिकदंशनस्य च मरणकारणत्वम् । तद्देशान्तरे न भवति । तद्वत् धूमोऽपि जातु जायेतान्तरेणापि हुताशनं क्वचिदिति शङ्कमाना न तस्य नियममग्निनाऽध्यवस्यन्ति शतांशेनापि । विपक्षाद् व्यावृत्तिश्शङ्क्यमाना अनुमानोदयं प्रतिबध्नातीति कतरच्चेदं प्रमाणम्, अनौपाधिकोऽग्निर्धूममात्रानुबन्धीति । न तावत् प्रत्यक्षम् । साहित्यमात्रोपक्षीणत्वात् । नानुमानम् । तस्यासत्यां व्याप्तावसम्भवात् । व्याप्तिसिद्ध्यर्थं चापरापरानुमानकल्पनायामनवस्थापातात् । प्रमाणान्तराणि निराकृतपूर्वाण्येव । अतो व्याख्येयमनुमानाङ्गसम्बन्धावधारणे प्रमाणम्, तद् व्याख्यायते ।

इदं तावत् प्रमाणाभाववादी वक्तव्यः । किं खलु व्याप्तिगोचरं ज्ञानं न जायत एव, सन्दिग्धं वा जायते, विपर्यैति वा । त्रेधा हि परीक्षकैरप्रामाण्यं विभक्तम् । प्रकारान्तरासम्भवात् । न तावदाद्यः पक्षः । संविद्व्यवहारविरोधात् । दृश्यते हि बहुलं धूममग्नावुपलभमानोऽयमनेन नियत इत्यवधारणपुरस्सरं ततोऽग्निमनुमाय तदनुरूपं व्यवहरमाणः । तन्नासत्यां व्याप्तिसंवित्तावुपपद्येत । व्यवहारदर्शनादेव संशयविपर्ययौ निराकार्यौ । ताभ्यामेवंविधव्यवहारासम्भवात् । अतो न तावदप्रामाण्यम् । प्रामाण्यं तु षोढा विभज्यते । तद् यथायोग्यं कस्यचित् कस्याञ्चित् व्याप्तिसंवित्तौ व्यवस्थापयामः । यथैव तावद् धूमस्याग्निना व्याप्तौ प्रत्यक्षस्य । न हीह प्रमाणान्तराणि सम्भवन्तीति वर्णितमेव ॥

ननु प्रथमदर्शनेऽनवगमात्प्रत्यक्षासम्भवोऽप्युक्त एव । अत एव भूयोदर्शनावगम्यत्वम् । ननु तान्यपि विकल्प्य दूषितानि प्रत्येकसाहित्ययोरसम्भवात् । सत्यम् । न प्रत्येकं व्याप्तिरवगम्यते । न च दर्शनानि संहन्यन्ते । प्राचीनानेकदर्शनजनितसंस्कारसहाये चरमे दर्शने चेतसि चकास्ति धूमस्य वह्निनियतस्वभावत्वं, रत्नतत्त्वमिव परीक्षमाणस्य, शब्दतत्त्वमिव व्याकरणस्मृतिसंस्कृतस्य, ब्राह्मणत्वमिव मातापितृसम्बन्धस्मरणसहकृतस्य, तैलाद् विविक्तमिव विलीनाज्यं रसगन्धसहकृतेन्द्रियस्य । न ह्येतत् सर्वमापातान्न प्रतिभातमिति परस्तादपि भासमानमन्यथा भवति । न च प्रमाणान्तरत्वमापादयति । ननूक्तं न स्मृतेरन्यत्र संस्कारा व्याप्रियन्त इति । केन वा संस्काराणां स्मृतेरन्यत्र व्यापार उपेयते । स्मारयन्त एव तु ते पूर्वपूर्वावगतमग्निसम्बन्धं धूमस्य व्याप्तिसंविदं जनयितुमभिप्रवृत्तस्येन्द्रियस्य सहायीभवन्ति । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसम्बन्धानुसारि प्रत्यक्षमिति वर्णितम् । इन्द्रियसम्बन्धफलापरोक्षावभासानुसारात् । न च यत् सहसा न प्रतिभाति तत्पश्चादपि प्रतिभासमानं प्रत्यक्षतां जहाति । यथोदाहृतेष्वेव तावत् ब्राह्मणत्वम् ।

ननु न तावदापातजं प्रत्यक्षं व्याप्तौ प्रमाणमिति भणितम् । तत्पूर्वकं च सविकल्पकमिति कथं तस्यापि प्रामाण्यम् । अस्ति वा ब्राह्मणादि-



प्रत्यक्षे निर्विकल्पकावस्थायां वृद्धादाविव नरान्तरविविक्ताकारप्रतिभासः । येन परस्तात् सविकल्पकं प्रवर्तते । यथा तु तत्र पिण्डमात्रदर्शिनः स्मृतयोनिसम्बन्धस्य ब्राह्मणोऽयमिति प्रत्यक्षं जायते, एवमिहापि बहुशोऽग्निधूमदर्शिनोऽन्तिमे दर्शने निर्विकल्पकावृत्तधूमस्वलक्षणस्याग्निना नियतोऽयमिति धूमस्वभावगोचरं प्रत्यक्षम्, एतावदेव सविकल्पकस्य निर्विकल्पकपूर्वत्वम्, यत्तज्जन्मपूर्विका प्रवृत्तिः, संज्ञादिस्मरणार्थं हि तत् प्रथममर्थ्यते । तच्चेह व्यक्तिदर्शन एव पूर्वसंस्कारोद्बोधात् सिद्धमिति नावश्यमनयोस्समानविषयता । अत एव तैलविविक्तविलीनाज्यबोधे तैलमिदमिति विपर्ययतो गन्धसहकृतेन्द्रियस्य (स)विकल्पकप्रत्यक्षत्वासिद्धिः । न हि तत्रासङ्कीर्णा घृताकारा संविदासीत् । तैलमिदमिति विपर्ययात् । अतः परस्तादेव सहकारिवशात् निर्विकल्पकोपदर्शितव्यक्तिविषयं घृतमिदमिति सविकल्पकं प्रत्यक्षमाविरस्ति । एवमिहापीति न दोषः ।

किं पुनरिह सविकल्पकेन विषयीक्रियते । नियतोऽयमनेनेति नियमः । अस्य हि बहुशो धूममग्नावुपलभमानस्यानग्नौ च व्यतिरेकमन्ते भवति विमर्शः — अपि स्याद् व्याप्तोऽयमनेनेति । कथमपरथा जाङ्गलादिभेदभिन्नानेकदेशपरित्यागेन सायमादिभेदभिन्नानेककालपरिहारेण च तृणदारुगोमयेन्धनादिसमवधानविशेषं प्रत्यनादृतोऽग्निमेवानुधावत्यनग्नौ च न भवति । ततः परं च यथाग्निर्धूमभास्वरत्वादिपरित्यागेनापि (दु ? कु) कूलालातादौ वर्तमानोष्णत्वमजहत् तन्नियतो भवति । एवमग्निना धूम इत्यपरोक्षनिश्चयो जायते । यत्तु देशान्तरादौ व्यभिचार इति, तन्न तावद् दृष्टपूर्वं नापि श्रुतमिति नाशङ्कामधिरोहति । एवमपि तु शङ्कमानस्य सर्वप्रमाणेष्वनाश्वासः क्वचिद् व्यभिचारदर्शनात् । यत्त्ववधारितोऽपि स्वभावनियमो देशान्तरादावन्यथा भवति वृश्चिकादेरिति । तन्न । अवान्तरजातिभेदात् । न हि यद् येन नियतमवगतमबाधितं च तदन्यथा भवति । अवान्तरजातिभेदात्तु शक्तिसदसद्भावकृता कार्यव्यवस्थेति न क्वचिद् व्यभिचारः ।

ननु अनुमानमेव किं नेष्यते । यदौपाधिकं तद् व्यभिचरति । अग्निरिव धूमम् । न च तथा धूमोऽग्निमित्यनौपाधिक इति । भवत्वेवम् ।

अव्यवस्था तूपस्थिता । अर्थापत्तिस्तर्हि भवतु । इदमेव चाग्नौ दर्शनमनग्नौ चादर्शनमनुपपद्यमानमग्निना नियमं प्रतिपादयति । किमत्र नोपपद्यते । दर्शनं तावत् तत्र भवतीत्येतावतैवोपपन्नम् , न हि यदेकत्र भवति तेनान्यत्र न भवितव्यम् । अन्यत्र भवतोऽदर्शनमनुपपन्नमिति चेत् । न । विप्रकृष्टानामन्येषामप्यसन्निकर्षाददर्शनोपपत्तेः । सन्निहितेष्वनग्निष्वदर्शनमनुपपन्नमिति चेद् अभावादुपपत्तेः । तेषु ह्यसौ नास्त्येव, कथमुपल(भ्यते ? भ्येत) । तत्र सताप्यन्यत्रापि न भवितव्यमेवेति किमत्र प्रमाणम् । अतो दर्शनादर्शनसहकृतेन्द्रियस्यैव वस्तुस्वभावावधारणमपरोक्षं जायत इत्येवं समर्थनीयम् । नन्वेतदेव न विद्मः । कीदृशोऽसौ वस्तुनः स्वभावोऽवधार्यत इति । उक्तमसकृद् धूमोऽग्निना नियत इति । एतदुक्तं भवति—यदा यत्र धूमस्तदा तत्राग्निरिति ।

ननु सन्निहितवर्तमानदेशकालमात्रसम्बन्धोऽस्तु प्रत्यक्षः । अनागतादिसम्बन्धस्तु कथम् , अतिप्रसङ्गो हि तथा (सति) स्यात् । न । सन्निहितरूपमात्रोपलम्भात् । रूपमेव तु तादृशं धूमादीनां यदेवमुन्नीयते, स्थिरमिव रूपं कुड्यादीनाम् । अस्ति हि तेषु विद्युदादिविलक्षणकालान्तरस्थायिरूपप्रकाशः । सन्निहितावान्तरसम्बन्धो न प्रत्यक्ष इति तद्रूपमप्रत्यक्षं भवति । अप्रत्यक्षे हि तस्मिन् नेदं रजतमिति पूर्वानुभूतरजतबाधो न स्याद् , भिन्नविषयत्वात् । स्वकाले हि पूर्वविज्ञानेन रजतं विषयीकृतं न भविष्यद्बाधकज्ञानक्षण इति कथं तत्राप्रसक्तं बाध्यते । कालान्तरसम्बन्धोऽपि तेन रूपेण पूर्वज्ञानावधारितं भविष्यज्ज्ञानकालमपि व्याप्नोतीति भवति समानविषयतामासाद्य बाधः ।

ननु यद् वस्तुनो रूपं तत्परानपेक्षमवगम्यते, अग्नेरिवोष्णत्वम् । न च धूमस्यागृहीतप्रतिसम्बन्धिना तद्रूपमवगम्यत इति कथं वस्तुरूपत्वम् । नैवम् । सम्बन्धो ह्यसौ, कथमनवगते प्रतिसम्बन्धिन्यवसीयते । यथाह—

'नियमो नाम सम्बन्धः स्वमतेनोच्यतेऽधुना' ।

इति । अतो यदेतदग्निना धूमस्य नियतत्वं भावात्मकमिदं तत्प्रत्यक्षेणावगम्यत इति किमनुपपन्नम् । यथा चानग्निनिवृत्तिर्न नियमः तथा वर्णितमेव । विपक्षव्यावृत्त्या तु विधिरूप एव नियमः परीक्षकैर्व्याख्याय परेभ्यः प्रति-



कृत्तिकोदयमालक्ष्य रोहिण्यासत्तिकॢप्तिवत् ।

पाद्यते । ननु नियम्यत्वमपि कर्तृकारकत्वं, तच्च शक्तिरूपं कथं प्रत्यक्षम् । न । कारकान्तरप्रत्यक्षवदुपपत्तेः । कारकान्तरशक्तयोऽपि हि न प्रत्यक्षाः, अतोऽसत्येव शक्तिप्रत्यक्षत्वे कारकं प्रत्यक्षमेषितव्यम् । एवमिहापि नियम्यः प्रत्यक्षो भविष्यतीति किमनुपपन्नम् । अतस्सिद्धं तावत् प्रत्यक्षत्वम् । आगमिकेषु चार्थेषु तस्य तस्य फलस्य तेन तेन वेदवेद्येन कर्मणा समन्वयात्, कर्मान्तरान्वयस्य चानवगमाद् अनेनैव कर्मणेदं फलं व्याप्तमिति शास्त्रादवगम्यते । नियतसाध्यत्वावगमात् मेघाभाववृष्ट्यभावयोश्च स्वतन्त्राभावप्रतीत्यसम्भवाद् भावयोरेव कथञ्चिद् व्याप्तिसंवेदनम् । मेघाभावो नाम नभस एवावस्थाविशेषः । जलधरनिरोधनिर्मुक्तस्य निर्वातास्तमितमहार्णवप्रतीकाशमाकाशस्य वपुस्संलक्ष्यते । वृष्ट्यभाव इति च पृथिव्या एव निबिडकठोरपाण्डुरादिभावः । तच्च रूपमुभयस्यापि प्रत्यक्षसमधिगम्यमेवेति तदेव तत्र व्याप्तिप्रमाणम् । एवमन्यत्रापि दर्शयितव्यमिति । भवतु तावदन्यद् व्याख्यास्याम इति समधिगतं तावद् व्याप्तेस्स्वरूपं प्रमाणं च । इदं तु चिन्तनीयम् । कस्य केन व्याप्तिरिति । न ह्येकत्र विदितावग्निधूमविशेषौ प्रदेशान्तरे दृश्येते । यत् तयोरेकस्यैकेनान्वयव्यतिरेकसमधिगम्या व्याप्तिर्भवेत् , अतो वाच्यं व्याप्तेरधिकरणम् । अत आह — सामान्येति । सत्यं न विशेषयोर्व्याप्तिः, सामान्यात्मनोरेव तु कस्यचिद् धर्मिणो धर्मयोस्तत्तद्भेदपरित्यागेन व्याप्तिरवगम्यते धूमाकृतिरग्न्याकृत्या नियतेति । अतो न कश्चिद् दोष इति । इदं तु प्रायिकम् , स्थायिनोस्तु विशेषयोरपि क्वचिद् व्याप्तिर्भवत्येवेत्याह — क्वचिदिति ॥ १२ ॥

अत्रैवोदाहरणमाह — कृत्तिकोदयमिति । यत्र हि कृत्तिकोदयं दृष्ट्वा रोहिण्यासत्तिः कथ्यते—अनन्तरमुदेष्यति रोहिणीति, तस्मिन्ननुमाने विशेषस्यैव विशेषेण व्याप्तिः । न हि तयोस्सामान्यमस्ति । व्यक्तिभेदे प्रमाणाभावात् । प्रत्यभिज्ञायते हि सैवेयं कृत्तिका, सैवेयं रोहिणीति । कथमन्या भविष्यति । अतस्सिद्धं विशेषयोरेवात्र व्याप्तिरिति ।

यदि तर्हि व्याप्तिरनुमाना[ङ्गम्]र्, अस्ति खल्वग्नौ हिंसात्वस्याधर्मत्वेन बाह्यहिंसास्वित्यतः क्रतावपि हिंसात्वादधर्मत्वमनुमीयते । तत्र

व्याप्तेश्च दृश्यमानायाः कश्चिद् धर्मः प्रयोजकः ॥ १३ ॥
अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ।
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ॥ १४ ॥
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ।
ये तु तानपि विस्रब्धं साध्यसिद्ध्यै प्रयुञ्जते ॥ १५ ॥

---

दैक्षपशुहिंसादीनामधर्मत्वं प्रसज्येतेत्यत आह — व्याप्तेश्चेति द्वयेन । अयमभिप्रायः — सत्यमपाताद् भवति भ्रमः, यथा किल हिंसात्वमात्रानुबन्ध्यधर्मत्वमिति । नत्वेतदेवम् । निर्ज्ञातेन ह्यधर्मत्वेन हिंसात्वं व्याप्यते । न च शास्त्रादृते तज्ज्ञानोपायस्सम्भवति । न च हिंसात्वमात्रमनर्थसाधनमिति शास्त्रमस्ति । विशेषहिंसाया विहितत्वात् । विध्यवरुद्धविषये च प्रतिषेधानवकाशात् । प्रतिषेधमन्तरेण चानर्थसाधनत्वज्ञानोपायाभावात् । अतः परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशत इति हिंसान्तराणि 'न हिंस्यादि'ति प्रतिषेधोऽवलम्बते । एवं च यद्यपि बाह्यहिंसासु हिंसात्वाधर्मत्वयोस्साहित्यमवगतं, तथापि न हिंसात्वमधर्मत्वप्रयोजकम् । किन्तु निषिद्धत्वम् । असत्यपि हिंसात्वे निषिद्धत्वमात्रेण सुरापानादावधर्मत्वसिद्धेः । अतो य एवास्मिन् सत्येवास्य भवितुं शक्तिरस्ति, इत्यनेन रूपेण निरूप्यते । व्याप्यतयावगम्यत इति यावत् । स एव धर्मः प्रयोजक इत्युच्यते । परप्रयुक्तव्याप्त्युपजीविनस्तु हिंसात्वादयः, न तैरधर्मत्वादिव्यापकांशोऽवधारयितुं शक्यते । न हि बाह्यहिंसा हिंसेत्येवाधर्मः, किन्तु निषिद्धेति । अतो न क्वचिद्विहितानां दैक्षपश्वादिहिंसानामधर्मत्वमिति ॥ १४½ ॥

ये त्वेवंजातीयकानप्यप्रयोजकान् हेतून् प्रयुञ्जते, ते सुलभैः प्रतिहेत्वादिदोषैश्चिरं भ्राम्यन्ति । शक्यते हि प्रतिहेतुर्दर्शयितुं, दैक्षपशुहिंसा धर्मः विहितत्वादग्निहोत्रादिवदिति । प्रयोजके हि हेतावेवंजातीयका दोषा नास्पदं लभन्ते । अप्रयोजके तु सुलभा एव । तदेतदाह — येत्विति । विस्रब्धमिति क्रियाविशेषणम् । यथा विश्वासो भवति तथा प्रयुञ्जत इत्यर्थः ॥ १५½ ॥



सुलभैः प्रतिहेत्वादिदोषैर्भ्राम्यन्ति ते चिरम् ।
तेष्वागमविरुद्धत्वं स्वयं चेष्टविघातिता ॥ १६ ॥
अलौकिकविवादाश्च वर्ज्यास्ते हेतुकैस्ततः ।
निषिद्धत्वेन हिंसानामधर्मत्वं प्रयुज्यते ॥ १७ ॥
तदभावे न तत्सिद्धिर्हिंसात्वादप्रयोजकात् ।
हेतुद्वयप्रयुक्ते च मिथ्यात्वे सर्वबुद्धिषु ॥ १८ ॥
ज्ञानत्वोत्पत्तिमत्त्वादिसाधको *न प्रयोजकः ।
त्रैवर्णिकप्रयुक्ता च यागादेः स्वर्गहेतुता ॥ १९ ॥

---

प्रतिहेत्वादिदोषैर्भ्राम्यन्तीत्युक्तम् तानेव दोषानुपन्यस्यति — तेष्विति । प्रतिहेतुस्तावदस्माभिरुक्त एव । आगमविरोधोऽप्येवंवादिनामापद्यत एव, आगमैकप्रमाणत्वाद् धर्माधर्मयोः । क्वचिदिष्टविघातः क्वचिदलौकिकविवाद इति ॥ १६½ ॥

आगमविरोधोदाहरणं तावदाह — निषिद्धत्वेनेति । इदं चानागतावेक्षणन्यायेन प्रागेवास्माभिर्व्याख्यातमिति ॥ १७½ ॥

इष्टविरोधोदाहरणमाह — हेतुद्वयेति । बाधकारणदोषाधीनं हि सर्वत्र मिथ्याबुद्धीनां मिथ्यात्वम्, न च ज्ञानत्वेनोत्पत्तिमत्त्वेन वा प्रयुज्यते, सत्यमिथ्यात्वसाधारणत्वादनयोः । ज्ञानत्वादेव तन्मिथ्यात्वं साधयतो बौद्धस्येष्टविघातकारी हेतुः, धर्मधर्मिस्वरूपस्वविशेषयोरपि प्रतिक्षेपात् । सर्वलोकप्रसिद्धपृथिव्याद्यपलापाद्यालौकिकविवादोऽप्यत्रैव दर्शयितव्यः, न हि सर्वविज्ञानानि मिथ्येत्येवंविधं विवादं लौकिकास्सहन्ते । सहसैव ह्येवंविधविवादश्राविणामुद्वेगो जायते । यथा — अचन्द्रश्शशीत्यादौ । अतोऽयमलौकिको विवादः । तथा चोक्तम् —

"सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र ते ध्रुवम् ।"

इति ॥ १८½ ॥

अपरमप्यागमविरोधस्योदाहरणं दर्शयति — त्रैवर्णिकेति । सन्ति खलु स्वर्गकामो यजेतेत्येवं विहितानि सोमादीनि कर्माणि । तेषु किं

---

* 'नाप्रयोजकं' इति मुद्रितपुस्तकपाठः.

न मनुष्यत्वमात्रेण शूद्रस्थेन प्रयुज्यते ।
कृतसावयवत्वादिप्रयुक्ता च विनाशिता ॥ २० ॥
प्रयत्नानन्तरज्ञानसदृशैर्न प्रयुज्यते ।

---

चतुर्णां वर्णानामधिकारः, उतापशूद्राणां त्रयाणामिति संशये चतुर्णामिति प्राप्तम्, चत्वारोऽपि हि वर्णाः स्वर्गं कामयन्त इति स्वर्गकामपदेनाभिधीयन्ते । स्वर्गकामश्चात्राधिकारितया ज्ञायत इति प्राप्ते उक्तम् — अपशूद्राणामधिकार इति । विद्याग्निसाध्या हि ते क्रतवः । अनग्निरविद्वांश्चान्तिमो वर्णः । कथमसौ वैतानिके कर्मण्यधिक्रियते । ननु श्रुत्यर्थावगताधिकारसामर्थ्यादेव शूद्रस्याप्यग्निविद्ययोराक्षेपो भविष्यति । न । अविधानात् । त्रैवर्णिकस्यैव 'अष्टवर्षं ब्राह्मणमुपनयीत' 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्येवमादिभिराग्निविद्ये विहिते । न चानियमेनैव ते शूद्रस्यापि भविष्यत' इति शक्यते वक्तुम् । को हि प्रतिलब्धविद्याग्निसम्बन्धस्त्रैवर्णिकाधिकारसम्पादितासु कामश्रुतिषु नियतकालवयोवस्थमुपनयनमाधानं वा जघन्यवर्णस्योपकल्पयितुमुत्सहते । अतस्त्रैवर्णिकत्वप्रयुक्तमेव यागादीनां स्वर्गहेतुत्वम् । न मनुष्यत्वमात्रेण शूद्रसमवायिना प्रयुज्यते । तद् यदि कश्चिदनुमानकुशलः प्रयुङ्क्ते शूद्रकृतो यागः स्वर्गहेतुः मनुष्यकृतत्वात् त्रैवर्णिकाचरितयागवदिति । तस्यागमविरोधः । नन्वागमविरोध उदाहृत एव, किं पुनस्तदुदाहरणेन । उच्यते । पूर्वमधर्मत्वानुमानस्य वैदिकहिंसाविषयस्य साक्षादागमविरोधो वर्णितः, व्यक्तमेव दैक्षपशुहिंसा विधीयमानत्वाद् अर्थसाधनमित्येतदवगम्यते, कथमसावधर्मो भविष्यतीति, चोदनालक्षणस्यार्थस्य धर्मत्वात् । इह तु शूद्रकृतस्य यागादेः स्वर्गहेतुता न साक्षादागमेन प्रतिक्षिप्यते । किन्तु त्रैवर्णिकाधिकारलाभादर्थादितरनिरास इति विशेषः ॥ १९½ ॥

अप्रयोजकोदाहरणच्छलेनेदानीं परोपालम्भनार्थमुदाहरणान्तराणि दर्शयति — कृतेति द्वयेन । प्रयत्नानन्तरज्ञानसदृशाः प्रत्ययानवस्थानादयोऽभिमताः तैरशब्दगोचरैस्तस्य विनाशिता न प्रयुज्यते । कृतकत्वादिप्रयुक्ता ह्यसौ । न च कृतकत्वमेव प्रयत्नानन्तरदर्शनेन साधयितुं शक्यम् । आकाशादिभिर्व्यभिचारात् । यदि तर्हि सावयवत्वप्रयुक्ता विनाशिता,



जातिमत्त्वैन्द्रियत्वादि वस्तुसन्मात्रबन्धनम् ॥ २१ ॥
शब्दानित्यत्वसिद्ध्यर्थं को वदेद् यो न तार्किकः ।
तस्माद् य एव यस्यार्थो दृष्टस्साधनशक्तितः ॥ २२ ॥
स एव गमकस्तस्य न प्रसङ्गान्वितोऽपि यः ।
उपात्तश्चैकदेशाभ्यां धर्म्यप्यत्रैकदेशवान् ॥ २३ ॥

---

किमिदानीं नश्वराणि भुवनानि भुवनसन्निवेशाश्च महीमहीधरोदधिप्रभृतयः । सत्यम् । सर्वमेव सावयवं विनाशधर्मकम्, महीमहीधरादयोऽपि समासादितस्वावयवसंयोगविभागविशेषा भागशो नश्यन्त्येव । निरन्वयं तु विनाशं न कस्यचिदभ्युपगच्छामः । एवं महाभूतेरप्यावापोद्वापभेदान्नाशो दर्शयितव्यः । तथा यदपि वैशेषिकैर्जातिमत्त्वादैन्द्रियकत्वाच्च शब्दानित्यत्वमनुमितं, तदप्ययुक्तम् । एतद्धि जातिमत्त्वादि वस्तुसन्मात्रनिबन्धनमेव नित्यानित्यसाधारणम्, नानेनानित्यता साध्यते । किमिदं वस्तुसन्मात्रनिबन्धनमिति, परमार्थसन्निबन्धनमित्युक्तं भवति । परमार्थसन्त एव घटाकाशात्मादय इन्द्रियविषया जातिमन्तश्च, न भ्रान्तिसंविदिताः शशविषाणादय इवेति ॥ २१½ ॥

एवमप्रयोजकस्यासाधकत्वमुक्तमुपसंहरति— तस्मादिति । अयमर्थः—य एव निषिद्धत्वादिरर्थो यस्याधर्मत्वादेस्साधनशक्तियुक्तत्वेनावगतः । अस्मिन् सत्यमुना भवितव्यमितीदृश्या शक्त्यावधार्यत इति यावत् । नियम्यशक्तिरेव हि साधनशक्तिरित्याख्यायते, नियतावगतो हि नियामकं शक्नोति (गमयितुं) नान्य इति. (स) नियम्य एव गमको न प्रसङ्गान्वितो हिंसात्वादिः । निषिद्धत्वेनान्वेतुमभिप्रवृत्तेनाधर्मत्वेन प्रसङ्गाद्धि हिंसात्वमन्वितमिति प्रसङ्गान्वितं हिंसात्वं नाधर्मत्वस्य गमकं भवतीति ॥ २२½ ॥

एवं तावत् सर्वप्रकारोऽनुमानाङ्गभूतस्सम्बन्धपदार्थो व्याख्यातः । इदानीमेकदेशदर्शनादेकदेशान्तरे बुद्धिरिति व्याख्येयम् । तत्र चैतदेव तावद् वक्तव्यम् । स्वतन्त्रैकदेशदर्शनात्तथाविधैकदेशान्तरे ज्ञानमनुमानमित्यापद्येत । तच्चायुक्तम् । स्मरणं हि तत्, कथमनुमानं भवेत् । अथैक-

अपरार्थे हि धूमादेः स्वरूपेणैकदेशता ।
स एव चोभयात्मायं गम्यो गमक एव वा ॥ २४ ॥

देशदर्शनादेकदेशान्तरविशिष्ट एकदेश्यनुमानस्य विषय इष्यते । तन्न । अनुपात्तत्वात् । न ह्यत्रैकदेशी केनचिच्छब्देनोपात्तः । अतस्तदनुपादाना-न्न्यूनं लक्षणमित्याशङ्कयाह — उपात्त इति । यद्यपि स्वशब्देन नैकदेश्यु-पात्तस्तथाप्येकदेशशब्दाभ्यामेवार्थादाक्षिप्यत इति न न्यूनत्वदोष इति ॥ २३ ॥

अर्थाक्षेपे कारणमाह — अपरार्थ इति । न हि धूमादिस्वरूप-मात्रमपरार्थीभूतमेकदेशपदास्पदं भवति । न च परस्परापेक्षयैकदेशवाचो-युक्तिरुपपद्यते । न ह्यग्न्यैकदेशो धूम इति कस्यचित् प्रतिपत्तिरस्ति । न चागृहीतेऽग्नौ तदेकदेशतया धूमोऽवगन्तुं शक्यते । गृहीते च तस्मिन्ननु-मेयाभावः । अत एकदेशत्वानुपपत्त्यैव तदाश्रयः कश्चिदेकदेश्यवगम्यत इति सिद्धमिति ॥ २३½ ॥

नन्वाक्षिप्यतामेकदेशशब्दाभ्यामेकदेशी । तदेकत्वं तु कुतो-ऽवगम्यते । अतः क्वचिदेव धूमं दृष्ट्वा क्वचिदेकदेश्यन्तरेऽनुमानं न स्यात् । ऐकाधिकरण्यं त्वेकदेशयोर्न सिध्यति, अनुपादानादित्यत आह — स एवेति । पूर्वप्रकृतमेकदेशवानिति विवक्षितैकसङ्ख्यमेकदेशिनं प्रत्यवमृशति स एवेति । स खल्वेक एवैकदेशी गम्यगमकरूपः उभयात्मकत्वात् । तस्य हि तौ नाम वक्ष्यमाणात्मानौ स्तः, यद्द्विरूपत्वमर्हति । नन्वेकत्वं नैकदेशिनोऽनुपात्तं लभ्यत इत्युक्तम् । न । ज्ञातसम्बन्धस्येत्येकवचनेनैवो-पादानात् । एकदेशिनि ह्यन्यपदा(थैकस्यै ? थै ए)कत्वमेकवचनेनोपात्तं, प्रमातृपक्षेऽपि प्रथमोच्चरितेनैकदेशशब्देन स्वाश्रय एकदेशिन्याक्षिप्ते द्विती-यापेक्षाक्षणेऽपि स एव बुद्धौ विपरिवर्तमानस्तदाश्रयत्वेनावगम्यते नान्यः । तत्परित्यागे कारणाभावात्, तथा व्युत्पत्तिदर्शनाच्च । यथा देवदत्तस्यैकत्र करे कङ्कणमङ्गुलीयकं करान्तर इति न भिन्नः कराश्रयोऽवगम्यते । अपि तर्हि देवदत्त एक एव । अतस्सिद्धमेक एवैकदेशी गम्यगमकरूप इति ॥ २४ ॥



असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ।
आत्तः पृथगभिन्नो वा प्रयोक्तॄणां विवक्षया ॥ २५ ॥
अनित्यः कृतको यस्माद् धूमवानग्निमानिति ।
धर्म्यभिन्नमुपादानं भेदोऽग्नाग्निरितीदृशः ॥ २६ ॥

उभयात्मा सन् गम्यगमक इत्युक्तम् । तावेवोभयात्मानौ दर्श-यति — असिद्धेनेति । यदि ह्यसावेकदेश्यसिद्ध एव स्यात् सिद्धो वा, तदा न द्विरूपतां लभते । स तु धूमवदादिना रूपेण प्रत्यक्षसिद्धोऽग्नि-मदादिना चासिद्ध इति द्व्यात्मकत्वादुभयोपपत्तिरिति । आह — अस्त्वर्था-दुपात्त एकदेशी । स चैको गम्यो गमक इति । स तु कथं प्रमातृभि-रुपादातव्य इति । न च तदुपादानप्रकारः कश्चिद्भाष्यकारेणोपात्तः । अतः पुनरपि न्यूनत्वमित्यत आह — आत्त इति । तत्र नाम विशेषोपादान-माश्रीयते, यत्र विशेषविवक्षा । नत्विह विशेषो विवक्षितः । स ह्येकदेशी प्रमातृविवक्षावशेन पृथगभिन्नो वैकदेशशब्दाभ्यामुपात्तो भवतु । उभयथा-नुमानव्यवहारदर्शनादिति ॥ २५ ॥

तमेवोभयथा व्यवहारं दर्शयति — अनित्य इति । निगदव्या-ख्यातो ग्रन्थः ॥ २६ ॥

एकदेशी गम्यो गमको भेदाभेदाभ्यामुपात्त इति दर्शितम् । कियति पुनरनुमानस्य व्यापार इति भवति संशयः । भवति हि विशिष्टार्थ-प्रतीतावपि विशेषणमात्रपर्यवसायि प्रमाणम् । यथा शब्दः । स खल्वा-कृतिविशिष्टायां व्यक्तौ धियमादधाति, अथ चान्वयव्यतिरेकाभ्यामा-कृतिमात्रपर्यवसायीति निश्चीयते । तदिहापि यदि तद्वदेव विशेषणमात्रपर्य-वसायि प्रमाणमिष्यते, ततस्सिद्धसाध्यत्वम् । सिद्धं हि सम्बन्धज्ञान-कालेऽग्निमात्रम् । किं तदनुमानेन । यदि तु द्विखण्डदण्ड्यादिशब्दवद्विशिष्ट-मेवानुमानं गोचरयतीतीष्यते । तत्र सम्बन्धग्रहणाभावाद(न)नुमेयत्वम् । न ह्यग्निमद्विशेषेण पर्वतादिनान्वितो धूमो दृष्टः । न च समस्ताग्निमत्साधारणं

१. 'थै' मुद्रितपुस्तकपाठः.

एकदेशविशिष्टश्च धर्म्यैवात्रानुमीयते ।
नहि तन्निरपेक्षत्वे सम्भवत्यनुमेयता ॥ २७ ॥

न धर्ममात्रं सिद्धत्वात् तथा धर्मी तथोभयम् ।
व्यस्तं वापि समस्तं वा स्वातन्त्र्येणानुमीयते ॥२८॥

एकदेशस्य लिङ्गत्वं साध्येनानुगमोऽस्य च ।
इत्थं च न स्यादिष्टं सत् पक्षेष्वेषु यथाक्रमम् ॥२९॥

---

सामान्यं किञ्चित्समस्ति । तद्भावेऽपि पुनरपि सिद्धसाध्यतैव । अत एवाहुः —

"अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ।
विशेषेऽनुगमाभावस्सामान्ये सिद्धसाध्यता" ॥

इत्यत आह—एकदेशेति । अयमभिप्रायः—दण्ड्यादिशब्दवद् विशिष्टविषयमेवानुमानम् । न च सम्बन्धग्रहणाभावः । सकलोपाधिपरित्यागेन धूमवन्मात्रस्याग्निमत्तया सम्बन्धावगमादित्युक्तमस्माभिः । असत्यपि सामान्ये केनचिदेकेनोपाधिनानन्तानामपि भावानां सम्बन्धो गृह्यत एव । यद्यपि धूमवानग्निमानिति सामान्यतोऽवगतम्, तथाप्ययमसाविति विशेषरूपेण प्रत्यभिज्ञानात्प्रमाणविषयत्वमप्युपपन्नमित्युक्तमेवेति । कस्मात् पुनर्विशेषणमात्रपर्यवसाय्येव प्रमाणं नेष्यते, अत आह — नहीति ॥ २७॥

असम्भवमेव दर्शयति — न धर्मेति । धर्ममात्रं हि सम्बन्धग्रहणकाले सिद्धमिति भवतैवोक्तमिति । एवमेव धर्मिमात्रानुमाने स्वतन्त्रोभयानुमाने वा सिद्धसाध्यता दर्शयितव्येत्याह — तथेति ॥ २८ ॥

धर्मधर्म्युभयेष्वेवानुमेयेषु यथासङ्ख्यं दूषणान्तराण्याह — एकदेशस्येति ॥ २९ ॥



अनित्यत्वादयो धर्माः कृतकत्वादयो नहि ।
ध्वनिनानुगमो नैषां नोभयस्योभयेन वा ॥ ३० ॥

सम्बन्धोऽप्यनुपादानान्नाम्ना षष्ठ्यापि वा मितौ ।
न चाप्यनुगमस्तेन लिङ्गस्येह निदर्श्यते ॥ ३१ ॥

---

एतदेव विवृणोति — अनित्यत्वादय इति । पक्षैकदेशो हि लिङ्गं भवति । न चानित्यत्वाख्यस्य धर्मस्य स्वतन्त्रपक्षीकृतस्य कृतकत्वं धर्म इति कथमपक्षधर्मो लिङ्गं भविष्यति । एवं ध्वनिमात्रेऽपि स्वतन्त्रे पक्षीकृते न कृतकत्वस्य तेनानुगमश्शक्यो दर्शयितुम् । नहि यत्र यत्र कृतकत्वं तत्र तत्र ध्वनिरिति नियमस्सम्भवति । तथोभयस्य ध्वन्यनित्यत्वात्मकस्योभयेन पक्षधर्मत्वानुगमात्मकेन न सम्बन्ध इत्यनागतं सम्बन्धशब्दं पूर्वापराभ्यां सम्बन्ध्य तन्त्रेण व्याख्या कर्तव्येति । समधिगतं तावद् धर्मधर्म्युभयेषां व्यस्तसमस्तानां न साध्यत्वमिति ॥ ३० ॥

अथ कस्माद् धर्मधर्मिसम्बन्ध एव साध्यो न भवतीत्यत आह — सम्बन्ध इति । मिताविति साधनवाक्यमपदिशति । न खलु परीक्षकस्साधनवाक्ये सम्बन्धवाचिना केनचिन्नाम्ना षष्ठ्या वा सम्बन्ध उपादीयते । न ह्येवं प्रयुज्यते, अग्निपर्वतयोरस्ति सम्बन्धः धूमवत्त्वादिति । नापि पर्वतस्याग्निरिति । देशमेव त्वग्न्यादिना विशिष्टमनुमिमाना दृश्यन्ते । यदेवं प्रयुञ्जते, अग्निमान् पर्वत इति । सम्बन्धोऽपि नानुमीयत इत्यतीतेन सम्बन्ध इति । न परं प्रतिज्ञायां नोपादीयते, उदाहरणेऽपि न तेनानुगमो लिङ्गस्य निर्दिश्यते । नहि भवति दर्शनं, यत्र यत्र धूमस्तत्र तत्राग्निसम्बन्ध इति । भवति तु यो यो धूमवान् स सोऽग्निमानिति देश एव निदर्शनं, तदेतदाह — न चापीति । इहेति मितिं प्रत्यवमृशति । एतदुक्तं भवति — न साधनवाक्ये सम्बन्धस्साध्यतयोपादीयते नापि दृष्टान्ततया निर्दिश्यते न चायथाप्रतिभासं परीक्षकाणां वक्तुमुचितमिति ॥ ३१ ॥

न चाकारद्वयं तस्य साध्यसाधनभाग् भवेत् ।
तस्मादर्थगृहीतत्वान्मतुबर्थस्य गम्यता ॥ ३२ ॥
न स्वातन्त्र्येण मन्तव्या यथा दण्ड्यादिशब्दतः ।
विशिष्टार्थप्रतीतौ स्यात् सम्बन्धो नान्तरीयकः ॥३३॥

अपि चायं सम्बन्धस्साध्यमानस्सन्मात्रतया वा साध्यते, केनचिद् वा धर्मेण विशिष्टः । न तावद् वस्तुसत्तामात्रमनुमानस्य विषयः । न च पर्वतादिवत्सिद्धसाध्यरूपमाकारद्वयं सम्बन्धो वहति, येनानुमानस्य विषयो भवेत् । तस्मान्न कथञ्चित् सम्बन्धस्साध्य इत्याह — नचेति । नन्वसति सम्बन्धे विशिष्ट एव साधयितुं न शक्यते । नास्ति नाम स प्रकारः, यदसम्बन्ध्यमान एवाग्निना पर्वतस्तद्विशिष्टो भवतीत्यत आह — तस्मादिति व्यान्तेन । न(नु) सत्यमसति सम्बन्धे विशिष्टो न भवति, न त्वेतावता सम्बन्धसाध्यता सिध्यति, विशिष्टसाध्यत्वान्यथानुपपत्त्यैव त्वर्थगृहीता मतुबर्थस्य सम्बन्धस्य साध्यता न पुनः स्वतन्त्रस्येति । अत्रैव दृष्टान्तमाह — यथेति । दण्ड्यादिशब्दा हि दण्डादिविशिष्टमेवाभिदधानास्सम्बन्धमप्यर्थादुपाददते, न त्वभिदधति । तद्वदिहापि पर्वतोऽग्निमानिति साध्यमानेऽर्थगृहीतोऽग्निसम्बन्धः, न पुनस्स एव साध्यते । यथा दण्ड्यादिशब्दतो विशिष्टार्थप्रतीतौ सत्यां सम्बन्धो नान्तरीयको भवति, एवमत्रापि विशिष्टे साध्यमानेऽनुनिष्पादी भवतीत्यर्थः ।

इदं तु चिन्तनीयम् । कथं दण्ड्यादिशब्दा विशिष्टवचना इति । मत्वर्थीयप्रत्ययान्ता हि ते । स चास्यास्मिन्नस्तीति सम्बन्धे स्मर्यते, अतस्सम्बन्ध एवात्र प्रत्ययार्थः । स च प्रधानः । 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन' इति स्मृतेः । इदं हि भेदेनैवोभयोरभिधाने प्राधान्यप्रतिपादनार्थं वचनम् । प्रधानं च शब्दार्थः । अतस्सम्बन्धवचना एव दण्ड्यादिशब्दा इति युक्तम् । अपि च 'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यत' इति विशिष्टाभिधित्सायामवश्यम्भावि प्रथमतरं विशेषणाभिधानमापतति तत एव विशिष्टावगाहासिद्धेर्न तद्यावच्छब्दस्याभिधानशक्तिरुपकल्पयितु



शक्यते । अत एवाकृतिविशिष्टव्यक्त्यभिधानमाकृत्यधिकरणे निराकरिष्यते । किञ्च — 'कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्याम्' इति स्मरति । कथं च ताभ्यां तद्धितवृत्तौ सम्बन्धोऽभिधीयते । यदि तद्धिताभिधेयो न स्यात् । अभिधेयनिष्कर्षे हि तयोः स्मरणं, 'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तदभिधाने त्वतला'विति । तद् यदि दण्डपुरुषसम्बन्धो दण्डिशब्दस्याभिधेयः, तथा सति तन्निष्कर्षे दण्डित्वं दण्डितेति त्वतलोरनुशासनमुपपद्यते । यथा गोशब्दाभिधेयं सामान्यं गोत्वमिति, त्वप्रत्ययेन निष्कृष्यते । अतस्सम्बन्ध एव दण्ड्यादिशब्दानामभिधेय इति साम्प्रतं कथमुच्यते नान्तरीयकस्सम्बन्ध इति ।

अत्राभिधीयते—न तावत् स्मृत्यनुसारेण सम्बन्धवाच्यत्वमध्यवसातुं शक्यते । शब्दानुशासनमात्रं हि 'तदस्यास्त्यस्मिन्नि'(५–२–९४)ति, न पुनरर्थानुशासनम् । अपि च वृत्तिविग्रहयोरन्यथान्यथा गुणप्रधानभावो दृश्यते । यथा चित्रगुरिति चित्राभिर्गोभिर्विशिष्टो देवदत्तादिरेव वृत्तौ प्रधानतयावगम्यते । विग्रहे तु चित्रा गावो यस्येति गवामेव देवदत्तादिर्विशेषणतया गुणभूतः । ताश्च प्रधानम् । वेदेऽपि 'रथन्तरसामा सोम' इति । तद् यद्यपि स्मृतिकारेण त(द)स्येति विग्रहे सम्बन्धः प्रधानतया षष्ठ्या निर्दिष्टः, तथापि गोमदादितद्धितवृत्तौ तद्वानेव प्रधानं भवति, तथा प्रतीतेः । गोमच्छब्दो हि पुरुषप्रधानो भासते न सम्बन्धप्रधानः । पाणिनेरपि भगवतस्सम्बन्धाभिधानद्वारेण विशिष्टवाच्यतैव प्रतिपादयितुमभिमता । वृत्तौ विगृह्यमाणायामवर्जनीय एव षष्ठीप्रयोगः । तावता च तदर्थः प्रधानतया वाच्यत्वेन निर्दिष्ट इति भ्रान्तिरुपजायते । अतो न तावत् स्मृत्यनुसारेण सम्बन्धस्य वाच्यता ।

यत्तु प्रथमतरं विशेषणमभिधेयमिति । सत्यम् । न त्विह सम्बन्धो विशेषणम् । दण्डो हि दण्डिनो विशेषणं न सम्बन्धः । स च प्रकृत्या प्रथममभिहित एव । अत एव नानेकाभिधानशक्तिकल्पनादोषः । निर्भागशब्देषु हि गवादिषु विशिष्टप्रतीतावपि विशेषणमात्रमभिधीयत इति युक्तम् । तत्र ह्येकस्यैवोभयाभिधानशक्तिकल्पनादोषो भवति । दण्ड्यादिशब्दास्तु भागवन्तः । तेषु भिन्नाभ्यां प्रकृतिप्रत्ययाभ्यां भिन्नौ विशेषण-

विशेषणविशेष्यत्वमापन्नौ द्वाविमावतः ।
गम्यावङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः ॥ ३४ ॥
सर्वथा धर्मिणो धर्मो धर्मेण त्ववगम्यते ।
विशेषणविशेष्यत्वे न विशेषोऽवधार्यते ॥ ३५ ॥

विशेष्यावभिधीयेते इति किमनुपपन्नम् । अतः प्रकृत्यभिहितप्रथमतरावगतदण्डविशिष्टः पुरुषो दण्डिशब्देनाभिधीयते । नन्वसति सम्बन्धे दण्डो विशेष्टुमेव नरं न शक्नोति । सत्यम् । न त्वेतावता सम्बन्धो वाच्यो भवति । न हि पृथिव्यामनवस्थिता गावो न तद्वन्तं विशिंषन्तीति पृथिव्यप्यभिधीयत इति युक्तमभिधातुम् । यत एव त्वसति सम्बन्धे विशिष्टावगतिरनुपपन्ना, अत एव सम्बन्धोऽप्यर्थादन्तर्भाव्यते । न त्वभिधीयते । यत्तु सम्बन्धाभिधाने त्वतलोरनुशासनमसति सम्बन्धवाच्यत्वेऽनुपपन्नमिति, तदयुक्तम् । न ह्यभिधेयनिष्कर्षे गोमदादिषु भावप्रत्ययानुशासनम्, अपि तर्हि अभिधेयानिष्कर्षे हि 'यस्य गुणस्य हि भावादि'ति त्वभिधेयानिष्कर्षार्थमेव स्मरणम् । इतरथा त्वनेनैव गतार्थत्वात् कृत्तद्धितसमासेष्वित्यवचनीयमापद्येत । अतः प्राक् प्रतीते एकनिमित्तसम्बन्धिविशिष्टेऽपरस्मिन् सम्बन्धिन्यभिहितेऽर्थगृहीतस्सम्बन्धो नाभिधेयपक्षे निक्षिप्यते । सर्वयौगिकानामपि चैषैव दिग् दर्शयितव्या । आह च —

सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात् ॥

इति । अतोऽनुमेयान्तरासम्भवाद् विशेषणविशेष्यभूतौ धर्मधर्मिणावेवानुमानसमधिगम्याविति ॥ ३२-३३ ॥

उपसंहरति — विशेषणेति गम्यावित्यन्तेन । स चायमङ्गाङ्गिभावः कैश्चिद् विकल्पेनाश्रितः । एवं हि मन्यन्ते । सर्वथा हि धर्ममात्रे धर्मिणि वा स्वतन्त्रे प्रमीयमाणे सिद्धसाध्यतादिदोषो भवति न विशिष्टप्रमायाम् । विशिष्टता तु कदाचित् कस्यचिद् यथाभिप्रायं भवतु नाम, न किञ्चिद् दुष्यति । सर्वथा तावत् धर्मिण एव पर्वतादेरग्न्यादिधर्मस्तद्धर्मेणैव धूमादिनावगन्तव्यः । स तु धर्मो विशेषणभूतो विशेष्यभूतो



अङ्गोत्तरं वदन्त्यन्ये यदि धर्मी विशेषणम् ।
हेतुधर्मेण सम्बन्धस्तस्याप्राधान्यतोऽस्फुटः[1] ॥ ३६ ॥
प्रधानत्वाद्धि धर्मेण सम्बन्धो वाक्यतो भवेत् ।
तत्रासम्भवतः पश्चात् कल्प्योऽसौ धर्मिणा सह ॥ ३७ ॥

वावगन्तव्य इति न कश्चिद् विशेषः । उभयथापि स्वतन्त्रानुमानाभावादित्याह — अङ्गेत्यवधार्यतेऽन्तेन ॥ ३४-३५ ॥

अत्र दूषणमाह — अङ्गेति । अयमभिप्रायः — लौकिकानि हि प्रमाणानि लक्षणकारैरपि यथालोकमेवानुगन्तव्यानि । न तु विपरीतम् । नह्यग्निः पर्वतविशिष्ट इति लोको बुध्यते । अपि तु पर्वतोऽग्निमानिति । तथा स्वयमनुमानेन प्रतिपन्नमर्थं तेनैव परं प्रतिपादयन्तो लौकिका धर्मिणा विशिष्टमेव हेतुं प्रयुञ्जाना दृश्यन्ते, यथाग्न्यनुमान एव धूमवत्त्वादग्निमानिति । तच्चेदमग्नौ देशेन विशिष्टेऽनुमीयमाने नोपपद्यते । विशेषणतया हि पर्वतविशिष्टोऽग्निरिति धर्मिण्युपात्ते धूमवत्त्वादिति हेतुधर्मेण तस्य सम्बन्धो न स्फुटं प्रकाशते । धर्मधर्मितयावगतस्य हेतुत्वम् । न च गुणभावोपात्तो धर्मी हेतुधर्मसम्बन्धमर्हति, गुणानां परस्परासम्बन्धात् । अतोऽस्मात् परार्थहेतुप्रयोगविशेषादेव लौकिकानामीदृशी प्रतिपत्तिरुन्नीयते । यत् स्वयमपि धर्मविशिष्टमेव धर्मिणं बुध्यते न विपरीतमिति ॥ ३६ ॥

यदि तर्हि धर्मिणो हेतुधर्मेण सम्बन्धो न स्फुटः केन तर्हि प्रसज्यत इत्यत आह — प्रधानत्वादिति । ध्वनिविशिष्टमनित्यत्वं कृतकत्वादित्युच्यमानेऽनित्यत्वाख्येन धर्मेणैव साध्यतया प्रधानभूतेन कृतकत्वादिहेतुस्सम्बध्येत न ध्वनिना गुणभूतेन । सर्वस्य ह्येकवाक्यगतस्य प्रधानान्वय एव युक्तः । प्रधानसम्बन्धे च हेतोरपक्षधर्मत्वम् । नहि कृतकत्वम-

1. 'तः स्फुटः' इति मुद्रितपुस्तकपाठः.

ध्वनेरित्यथवा वाच्यमन्वयस्य तु दर्शने ।
भेदोपात्तस्य धर्मस्य गुणभावो न दुष्यति ॥ ३८ ॥

---

नित्यत्वस्य धर्मः, किं तर्हि ध्वनेः । अतो धर्म्येव धर्मविशिष्टः स्वयं प्रमातृभिरवगम्यते । तथैव परस्मै प्रतिपाद्यत इति युक्तमिति । यदि तूच्यते, सत्यं प्रधानतया धर्मेण हेतोस्सम्बन्धो वाक्यादवगम्यते, लिङ्गबलीयस्त्वेन तु वाक्यं बाधित्वा धर्मिणैव सम्बन्धः कल्पयिष्यते । हेतुधर्मस्य हि धर्मिणैव सम्बन्धयोग्यता न धर्मेण, अतो धर्मसम्बन्धाभावाद् धर्मिणैव सम्बन्धो भविष्यतीत्यत आह—तत्रेति । अयमभिप्रायः—सत्यमेवं धर्मिणा सम्बन्धः सिध्यति । किं त्वयमेव क्लेशो यद्वाक्यस्वरसभङ्गो नाम । अत एवाह—कल्प्योऽसाविति । अन्यथाप्रतिपन्नस्यान्यथाकल्पनैव दोष इति भावः ॥ ३७ ॥

ध्वनेः कृतकत्वादिति वा पुनर्धर्म्युपादानेन हेतुर्विशेषणीयः, न चैवं प्रयोक्तारः प्रयुञ्जाना दृश्यन्त इत्यभिप्रायेणाह—ध्वनेरिति । यस्तु वदति धर्मिण्यपि विशिष्टे साध्येऽन्वयोपदर्शनवेलायां यत्र यत्र कृतकत्वमित्युक्ते ध्वनिरेव प्रधानतया सम्बध्येत नानित्यत्वं गुणभूतत्वादिति तं प्रत्याह—अन्वयस्येति । अन्वयोपदर्शनकाले हि भेदेनैव धर्ममुपाददते । यत्र यत्र कृतकत्वं तत्र तत्रानित्यत्वमिति न तत्र प्रधानसम्बन्धाशङ्का । अतः प्रतिज्ञावस्थायां धर्मविशिष्टे धर्मिणि साध्यमाने यो गुणभाव आसीत् नासौ दृष्टान्तवाक्ये दुष्यति । हेतुस्त्वविशिष्ट एव तार्किकैः प्रयुज्यत इत्युक्तम् । तत्राविशेषित एव प्रयुक्ते भवति प्रधानभूतधर्मसम्बन्धाशङ्केति । यस्तु वदति षष्ठ्यन्तेन ध्वनिनाऽनित्यत्वं विशेष्यते ध्वनेरनित्यत्वमिति । एवं च कृतकत्वादित्यस्याविपरिणतविभक्तिकेन ध्वनिनैव सम्बन्धः स्फुटो भवति । धर्मसम्बन्ध एव यथावद् विभक्तिविपरिणामेन स्यात् । स चान्याय्य इति स वक्तव्यः । निराकृतोऽयं पक्षो वार्तिककृतैव —

"सम्बन्धोऽप्यनुपादानान्नाम्ना षष्ठ्यापि वा मितौ"

इति । षष्ठीनिर्देशे हि सम्बन्ध एव साध्यो भवेत् । तस्य च साध्यता निराकृतैव । विशिष्टसाध्यपक्ष एव स्थित्वा धर्मिविशिष्टता धर्मस्येदानीं



अग्नेर्देशविशिष्टत्वे न चैतत् पक्षलक्षणम् ।
विशिष्टतास्य देशेन भवेदेवंप्रकारिका ॥ ३९ ॥
योऽग्निः सोऽस्ति क्वचिद्देशे यो दृष्टो यत्र तत्र वा ।
अग्निः पूर्वानुभूतो वा देशमात्रेण सङ्गतः ॥ ४० ॥
योऽग्निः सोऽनेन युक्तो वा यो दृष्टोऽनेन सोऽथवा ।
योऽयं स देशमात्रेण युक्तः पूर्वेण वाप्ययम् ॥ ४१ ॥
एतद्देशविशिष्टो वा योऽयमग्निरितीह तु ।
पूर्वयोस्सिद्धसाध्यत्वं परेषु स्याद् विरुद्धता ॥ ४२ ॥
व्याप्तिरेतेन देशेन सर्वाग्नीनां न युज्यते ।
नापि पूर्वस्य नाप्येष वह्निः *सर्वैर्विशेष्यते ॥ ४३ ॥

---

निराक्रियते । किमत्र सम्बन्धसाध्यत्वं पुनरुपक्षिप्यते । तदलमनेन बालभाषितेनेति ॥ ३८ ॥

अपि च अग्नेर्देशविशिष्टत्वे साध्यमाने वक्ष्यमाणसमस्तपक्षप्रकाराणामसम्भवोऽपीत्याह — अग्नेरिति । दूषणान्तरसमुच्चये चकारः । एतदिति वक्ष्यमाणलक्षणप्रतिनिर्देश इति । तानेव पक्षप्रकारान् वक्तुं संक्षिप्य प्रतिजानीते — विशिष्टेति ॥ ३९ ॥

इदानीं विभज्य तानेव दर्शयति — योऽग्निरित्तीतीत्यन्तेन । निगदव्याख्यातो ग्रन्थः । विवेकस्तु पक्षाणां प्रणिहितैरवगम्यत इति । इहाद्ययोर्द्वयोः पक्षयोस्सिद्धसाध्यता दोषः । सिद्धो हि कश्चिदग्निः, दृष्टपूर्वोऽपि पूर्वदेशाधिकरणस्सिद्ध एव किं तत् प्र(सा)धनेन । परेषु तु पञ्चसु पक्षेषु प्रमाणान्तरविरोध इत्याह — इह त्विति । सिद्धसाध्यता सुप्रकाशैव ॥ ४०-४२ ॥

विरोधं प्रपञ्चयति — व्याप्तिरिति । यत्तावत् योऽग्निः सोऽनेन युक्त इत्युक्तं तदयुक्तम् । नह्यनेन देशेन सर्वाग्नयो व्याप्यन्ते देशस्यावैभवात् सर्वाग्नीनां चात्रासन्निधानात् , तद्भावो धत्राभावेन विरुध्यत इति ॥ ४२½ ॥

---

* 'सर्वैर्विशिष्यत' इति मुद्रितपाठः.

देशैः, पूर्वेण वाप्यस्य न देशेन विशेष्यता ।
एतद्देशविशिष्टोऽयमित्येतत् कथ्यते कथम् ॥ ४४ ॥
यदा देशानपेक्षोऽग्निर्नीयमित्यवधार्यते ।
अग्नेः पूर्वतरं चात्र देश एवावधार्यते ॥ ४५ ॥
तज्ज्ञानकालबुद्धश्च न देशः स्याद् विशेषणम् ।
देशस्य पर्वतादेस्तु स्वरूपे पावकादृते ॥ ४६ ॥

---

यो दृष्टोऽनेन सोऽयमेवेति यदुक्तं तद् दूषयति—नापि पूर्वस्येति । दृष्टस्याप्यग्नेरनेन देशेन व्याप्तिर्न विद्यत इत्यर्थः । योऽयं स देशमात्रेणेत्यत्र दूषणमाह—नापीति देशैरन्तेन । न ह्येष पुरःस्थितो वह्निः सर्वैर्देशैर्विशेष्यते सर्वत्र तस्याभावादिति । पूर्वेण वाप्ययमित्यत्र विरोधमाह—पूर्वेणेति । पूर्वेण देशेनास्याग्नेर्विशेष्यता नास्त्येव, पूर्वदेशस्यात्राभावात्, अस्य च तत्र । पूर्वानुभूतस्य स्वैर्देशमात्रेण सम्बन्धः पुरःस्थितवह्नेः सर्वदेशसम्बन्धनिराकरणेनैव तुल्यन्यायतया निराकृत इति न पृथगुपन्यस्य दूषित इति ॥ ४३½ ॥

एवं सत्सु पक्षेषु निराकृतेष्वष्टमः पक्षोऽवशिष्यते एतद्देशविशिष्टो वा योऽयमग्निरिति तन्निराकरोति—एतदिति । अयं पुरःस्थितोऽग्निरनेन देशेन विशिष्ट इति नैतत् साधयितुं शक्यम् । न ह्यप्रत्यक्षदेशो वह्निरयमिति निर्देष्टुं शक्यः, नितरां विशिष्टतया साधयितुम् । यस्तु वदति स्मृत एव वह्निरनेन विशिष्टः साध्यत इति, स वक्तव्यः । स्वदेशकालवर्त्त्यैव स्मरणेन विषयीकृतः कथमसावनेन देशेन विशेष्टुं शक्यः । तदेवंवादिना नापि पूर्वस्येत्यपि नालोचितम् । अनवच्छिन्नस्मृतावपि च धर्मो धर्मिणो विशेषणमिति नेदं युक्तिसाध्यम् । धर्माणां धर्मिविशेषणतयैव सर्वदावगतेरित्यलमनेनेति । देश एव तु पूर्वावगतो विशेष्यतामर्हतीत्यभिप्रायेणाह — अग्नेरिति ॥ ४४-४५ ॥

यदि चाग्निर्विशेष्यो भवेत् ततस्तस्यैवायमाद्यो ज्ञानकालो भवेत्, प्रसिद्धस्याप्रसिद्धेन विशेषणात् । इह त्वादौ पर्वत एव ज्ञायते । कथमसौ पश्चात् प्रत्येष्यमाणस्याग्नेर्विशेषणं भवतीत्याह—तज्ज्ञानेति । तद्वृत्तेनाग्निं निर्दिशति । अग्नेर्ज्ञानकाले हि स एव देशो बुद्धः, नाग्निः, अतः कथं



गृहीतेऽग्निविशिष्टस्य पुनर्ज्ञानं न दुष्यति ।
तस्मात् धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता ॥ ४७ ॥
सा देशस्याग्नियुक्तस्य धूमस्यान्यैश्च कल्पिता ।
ननु शब्दवदेव स्यात् लिङ्गमस्यं विशेषणम् ॥ ४८ ॥
नैवं न ह्यत्र लिङ्गस्य शक्त्यनेकत्वकल्पना ।
न च तस्यानुमेयत्वं विशेष्यश्चावधारितः ॥ ४९ ॥

---

देशो विशेषणं भवति । प्रमितं हि वस्त्वप्रमितेन धर्मेण प्रमित्सितं भवति कीदृग्धर्मोऽयमिति । तथा च देश इति स एव प्रमित्स्यते, प्रमीयते च, न पुनरग्निरिति । ननु देशोऽपि प्रत्यक्षावगत एवेति कथमसावनुमानस्य विषयो भविष्यतीत्यत आह— देशस्येति । स्वरूपमात्रमेव हि देशस्य प्रत्यक्षेणावगतम्, अनुमानेन तु पावकादिविशिष्टता तस्यानुमीयत इति न गृहीतग्राहित्वमिति । अतो धर्म्येव धर्मविशिष्टः प्रमेयः न धर्मो धर्मिविशिष्ट इत्याह—तस्मादिति ॥ ४६-४७ ॥

एवं च देश एवाग्निविशिष्टः प्रमेयोऽवतिष्ठते । स हि धर्मी, तदाश्रयत्वादग्नेः । न त्वग्निः, अतदाश्रयत्वाद् देशस्येत्याह— सा देशस्येति । अन्ये तु पूर्वावगतधूममप्यग्निविशिष्टमनुमानस्य प्रमेयं मन्यन्ते । तदपि साध्वेवेत्यभिप्रायेणाह—धूमस्यान्यैश्च कल्पितेति । सा प्रमेयतेति सम्बन्धः । अत्र चोदयति—नन्विति । विशिष्टोऽनुमानस्य विषय इत्युक्तम् । नागृहीतविशेषणन्यायेन लिङ्गमपि शब्दवद् विशेषणमात्रपर्यवसाय्येव युक्तम् । शब्दो हि विशेषणमात्र एव वर्तत इत्याकृत्यधिकरणे वक्ष्यत इति ॥ ४८ ॥

परिहरति— नैवमिति । कारणमाह—नहीति । अनेकशक्तिकल्पनाभयेन हि शब्दस्य विशेषणमात्रपर्यवसानमिष्टम् । लिङ्गं तु पूर्वावगतप्रतिबन्धबलेन प्रतिबन्धकधियमुपकल्पयति । तद् यावतैव प्रतिबद्धमवगतं तावत्येव प्रतिबन्धके धियमादधाति । सर्वोपाधिपरित्यागेनाग्निमन्मात्रेण धूमवत्त्वं प्रतिबद्धमवगतमित्यग्निमत्त्वमेवानुमापयतीति न कश्चित् दोष इति । न च विशेषणमात्रमनुमेयं सिद्धसाध्यत्वादित्युक्तमित्यभिप्रायेणाह —

विशिष्टत्वेन चाज्ञानात् तन्मात्रस्यानुमेयता ।
ननु धूमविशेष्यत्वे हेतोः पक्षैकदेशता ॥ ५० ॥
नैतदस्ति विशेषे हि साध्ये सामान्यहेतुना ।
धूमतज्ज्ञानसम्बन्धस्मृतिप्रामाण्यकल्पने ॥ ५१ ॥
फलेन विषयैकत्वं तद्व्यापारात् पुरोदितम् ।
प्रमेयधीः प्रमाणं हि भाष्यकारस्तु मन्यते ॥ ५२ ॥

---

न चेति । विशेष्योऽपि पर्वतादिस्वरूपेणावधारितः सोऽपि नानुमेय इत्याह—विशेष्य इति ॥ ४९ ॥

अतो विशिष्टत्वेनैव रूपेणाज्ञानात् तस्यैवानुमेयत्वमित्याह—विशिष्टत्वेनेति । अत्र चोदयति—नन्विति । धूमोऽप्यग्निविशिष्टोऽनुमीयत इत्युक्तं, तदयुक्तम् । प्रतिज्ञार्थैकदेशत्वादिति ॥ ५० ॥

परिहरति—नैतदिति । सामान्यविशेष्यात्मा हि धूमः, तत्र विशेषात्मना पक्षीकृतस्य सामान्यात्मना हेतुत्वमिति न पक्षैकदेशतेति । समधिगतं तावदनुमानस्य विशिष्टो विषय इति, स्वरूपमेव किमस्येति न ज्ञायते । तद् यदि धूमतज्ज्ञानादीनामनुमानत्वमिष्यते, ततः प्रमाणफलयोर्विषयभेदः स चायुक्तः । अत एव भिक्षुणा एकमेव ज्ञानं प्रमाणफलरूपमिति प्रत्यक्षमुक्त्वा तदेवानुमानेऽप्यतिदिष्टं पूर्ववत् फलमस्येति । यदि त्वनुमेयज्ञानमेव प्रमाणमिष्यते ततोऽप्यतिरिक्तफलाभावः । अतो वक्तव्यमनुमानस्य स्वरूपमित्यत आह—धूमतज्ज्ञानेति । यत्तावत् भिक्षुणा प्रमाण(फल ?)मेव फलमित्येकविषयत्वलाभादाश्रितं, तत् प्रत्यक्षवदिहापि प्रतिषेद्धव्यम् । न हि साध्यसाधनयोरभेदं लौकिका मन्यन्ते । को हि वृक्षाच्छिदया सार्धं परशोरेकत्वमातिष्ठते । विषयभेदपरिहारस्तु प्रत्यक्षोक्त एवेहाप्यनुसन्धातव्यः । यथा हीन्द्रियादिप्रमाणपक्षे यत्र फलं निष्पद्यते तद्विषयव्यापारात् समानविषयत्वमुपपादितम् । एवमिहापि धूमादिप्रमाणपक्षे तद्व्यापारादेव पुरोदितं विषयैकत्वमतिदेष्टव्यम् । अतो धूमस्तज्ज्ञानं वा सम्बन्धस्तत्स्मरणं वा प्रमाणमस्तु, विवक्षाधीनत्वात् प्रमाणफलभावस्येति । यत्तु बुद्धेः प्रमाण-



प्रत्यक्षानियमोक्तिश्च सर्वत्रैवानुपज्यते ।
अनुमानगृहीतस्य तेनैव प्रतिपादनात् ॥ ५३ ॥
परेभ्यो वाञ्छता वाच्यः पूर्वं पक्षो यथोदितः ।
तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयते ॥ ५४ ॥

---

(फल ?)त्वे फलाभाव इत्युक्तम् । भाष्यकारो हि बुद्धिरेव प्रमाणमिति दर्शयति 'यत् कारणमसान्निकृष्टेऽर्थे बुद्धि'रिति वदति । न च फलाभावः, हानादेरेव फलत्वात् । न च सजातीयमेव फलमिति राजाज्ञा । उपयोगाद्धि सजातीयमसजातीयं वा फलं भवत्येव । अस्तु वा सजातीयमेव फलं हानादिबुद्धिः फलं भविष्यति । उपकारादिस्मृतिर्वेत्यभिप्रायेणाह — प्रमेयधीरिति ॥ ५२ ॥

यदि भाष्यकारः प्रमेयधियः प्रामाण्यं मन्यते, कथं तर्हि धूमादिप्रमाणत्वाभ्युपगमः अत आह — प्रत्यक्षेति । उक्तमस्माभिर्विवक्षाधीनं प्रमाणत्वमिति । तद् यदा धूमादीनामेव प्रकृष्टसाधनत्वमवगम्यते, तदा तदेव प्रमाणम् । भाष्यकारेणापि 'बुद्धिर्वा जन्म वे'त्यादिना प्रत्यक्षानियमं दर्शयता सर्वत्रैवानियमस्तुल्यया दर्शित एव । अतो न धूमादिप्रामाण्याभ्युपगमे भाष्यविरोध इति ॥ ५३ ॥

तच्चेदमनुमानं द्वेधा बौद्धा विभजन्ते स्वार्थं परार्थं चेति । यदाहुः—

अनुमानं द्विधा स्वार्थं त्रिरूपाल्लिङ्गतोऽर्थदृक्
परार्थमनुमानं तु स्वदृष्टार्थप्रकाशकम् ॥

इति । तदिदं द्वैविध्यमनुपपन्नमित्यभिप्रायेणाह — अनुमानेति । अस्यार्थः— गुरुशिष्यसहाध्यायिविरोधिप्रतिवादिभ्यः परेभ्योऽनुमानगृहीतस्यार्थस्य तेनैवानुमानेन प्रतिपादनं वाञ्छता यथा पूर्वमस्माभिः प्रतिपादितः पक्षो विशिष्टो धर्मी प्रमीयत इति स वक्तव्यः । इदमत्राकूतम् । स्वयमनुमानेन गृहीतमर्थं परं प्रतिपादयितुं साधनवाक्यमेव प्रयुज्यते । परस्तु ततो वाक्यात् त्रिरूपं लिङ्गमनुसन्धाय स्वयमेव साध्यं वस्तु

बुध्यते, तदस्य स्वार्थमेवानुमानम्। वक्तुरपि स्वयमर्थं प्रतिपन्नवतः स्वार्थानुमानमेव, कतरदत्र परार्थानुमानमिति न विद्मः। वचनं परार्थमिति चेत्। न। अननुमानत्वात्। वचनं परार्थमिति तु मृष्यामहे। यद्वदति दर्शनस्य परार्थत्वादिति, न तु तदनुमानम्, अत्रिरूपलिङ्गजनितत्वादनर्थदृक् च। त्रिरूपाल्लिङ्गतोऽर्थदृगनुमानमिति वस्सिद्धान्तः, अतः कथं वचनमनुमानम्। अथानुमानगोचरीकृतार्थप्रतिपादनसमर्थवचनपारार्थ्यादनुमानं परार्थमित्युपचर्यते, ततः प्रत्यक्षप्रतिपन्नमप्यर्थं बोधयद् वचः परार्थमिति प्रत्यक्षमपि परार्थमापद्येत। यदि तु स्वलक्षणविषयत्वात् प्रत्यक्षस्य तस्य चाशब्दगोचरत्वान्न प्रत्यक्षं परार्थमित्युच्यते। तदयुक्तम्। एवं हि प्रत्यक्षगृहीतार्थविपरीताभिधायिनां तद्विरोधोद्भावनवचनं न युज्यते। यो हि प्रत्यक्षविरुद्धमर्थं प्रतिजानीते नाग्निरुष्ण इति, स वचनेन तं प्रत्यक्षविषयमर्थं प्रतिपाद्य निराक्रियते। प्रत्यक्षविषये तु शब्दागोचरे तन्नोपपद्येत, अतः प्रत्यक्षविषयमपि शब्दो वदतीत्यभ्युपगन्तव्यम्। एवं च प्रत्यक्षविषयवचनपरार्थतया कः प्रत्यक्षपरार्थतां वारयतीति द्वैविध्यानुपपत्तिः। अतो यथोदितः पक्ष एव वाच्य इत्युक्तवान्।

इदं तु वक्तव्यम्— कोऽयं पक्षो नाम, तदुच्यते, प्रतिज्ञार्थः पक्षः। का प्रतिज्ञा। साध्यसमर्पकं वचनम्। यदाहुः — 'साध्यनिर्देशः प्रतिज्ञे'ति। अतः साध्यः पक्ष इत्याचक्ष्महे इति वाच्यः पक्ष इत्युक्तम्। तद्वचनमिदानीमुपन्यस्यति—तत्रेति। तत्र पक्षे धर्मिणं प्रथममुद्दिश्य साध्यधर्मोऽन्यादिर्विधीयते। योऽयं पर्वतः सोऽग्निमानित्युक्तं भवति। इदं तु पक्षवचनं प्रतिज्ञापरनामानमेके नानुमन्यन्ते। वदन्ति च किमनेनानर्थकेन, अन्तरेणापि पक्षवचनमपेक्षितं सिध्यत्येव। हेतुर्हि साध्यसाधकः। न पक्षस्य वचनम्। नह्ययमागमिकोऽर्थः, हेतुवचनानर्थक्यप्रसङ्गात्। आप्तानुसारेण पक्षवचनादर्थनिश्चये हेत्वभिधानमनर्थकं स्यात्। वक्तृगुणदोषावधारणप्रवण एव प्रतिवादी भवेत्। हेत्वधीने तु निर्णये तच्छक्तिरेव निरूपयितुमुचिता, किं प्रतिज्ञावचनेन। हेतोश्च सामर्थ्यं साध्यान्वयप्रदर्शनेनैव सिद्धम्। अतो यत् कृतकं तदनित्यं शब्दश्च कृतक इत्युदाहरणोपनयमात्रादेव साध्यसिद्धेरनार्थिका प्रतिज्ञा। हेतोरेव तु त्रैरूप्यं दर्शयितव्यम्। तच्च दृष्टान्तद्वयेनोपनयेन च कथ्यत इति कृतमतिविस्तरेण।



यदि तु विवादमावेदयितुं प्रतिज्ञावचनमित्युच्यते। तन्न। अव्यापकत्वात्। यो हि मन्यते — यदा खल्वयं शब्दो नित्य इति प्रतिजानीते तदेतरोऽनित्यवादी व्युत्थितो भवति ततो जल्पः प्रवर्तत इति। तच्च नैवम्, अव्यापकत्वात्। नेदं प्रतिज्ञावचनस्य व्यापकं प्रयोजनम्। वादे असम्भवात्। शिष्यविषयो हि सः। स च तत्त्वमेव बोधयितव्यः, अतो हेतुशक्तिमेव प्रतिपाद्य तत्त्वं बोध्यत इति युक्तम्, किं विवाद आद्रियते, न हि तेन सह विवदितव्यम्। जल्पे स्यादिति चेद्, न। अन्यथासिद्धेः। तत्रैतत् स्यात् — जल्पे खलु विवादमाजिहीर्षुः प्रतिज्ञां प्रणयतीति, तच्च नैवम्। अन्यथासिद्धेः, असत्यपि हि पक्षवचने लक्ष्यत एव यथा ध्वनिमनित्यमनुमिनोतीति, यत् कारणं, यत्कृतकं तदनित्यं यथा घट इत्युक्त्वा कृतकत्वं ध्वनेरुपनयति शब्दश्च कृतक इति। ततो जल्पः प्रवर्तिष्यत एव। वितण्डा तु यथा तथा वादे दर्शिते प्रवर्तत एव। न हि वैतण्डिकस्य किञ्चित् परनिग्रहादन्यद् साध्यमस्ति। यदसौ प्रतिज्ञावचनेन क्वचिदर्थे साध्यमाने स्वविपरीतसिद्धिं मन्वानो जातोद्वेगो विवदेत्। अतः प्रतिज्ञावचनं कथात्रयेऽप्यनुपयुज्यमानमुपेक्षणीयमित्याक्षिपन्ति॥

अत्राभिधीयते — स्वदृष्टार्थप्रकाशनं परार्थमनुमानमिति भवद्भिरेवोक्तम्। स्वयं च कुतश्चिद्धेतुविशेषात् किञ्चित् केनचिद् धर्मेण विशिष्टमवगतमिति परस्मा अपि तथैव कथ्यत इति युक्तम्। असत्यां तु प्रतिज्ञायामनाश्रयहेत्वादय आकाशपतिता इव भवेयुः। ननु नायं पक्षवचनपुरस्सरमज्ञासीत्साध्यमिति कथं परस्मै तथा कथयति। नैवम्। यद्यपि शब्दोऽनित्य इति स्वप्रतिपत्तौ नोच्चारितं तथापि सविकल्पकत्वादस्या बुद्धेरस्त्येवात्र प्रमातुर्विशिष्टो विकल्पः, उच्चारणं तु परार्थमिति तन्मात्रं स्वप्रतिपत्तौ नासीत्। परस्तु नानुच्चारितेन शब्देन प्रतिपादयितुं शक्यत इत्युच्चार्य प्रतिपाद्यत इति शब्दोच्चारणमात्रमधिकम्। यत्तु वादेऽनुपयोग इत्युक्तम्, तन्न, सुतरामुपयोगात्। जल्पवितण्डे हि विजिगीषमाणयोर्द्वयोः प्रवर्तेत इति परं भ्रामयितुं प्रतिज्ञावचनं न प्रयुज्येत। अविवादे तु शिष्यो न व्यामोहनीय इति विशदतरमेव प्रतिज्ञा-

**नियमस्तद्विरुद्धाच्च कल्प्यते नाविरोधिनः ।**
**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ॥ ५५ ॥**

वचनेन साध्यत इति युक्तम् । न हि न शब्ददारिद्र्यं, यदेनं तत्त्वं बुभुत्समानमुपसन्नमविशदवचनेन परिक्लेशयाम । न चैव जल्पेऽनुपयोग इति । उक्तमिदमसति हि प्रतिज्ञावचनेऽनाश्रया हेत्वादयो न प्रवर्तेरन्निति । गुणभूता हि ते प्रधानभूतसाध्यापेक्षायां सम्बध्यन्ते । तच्च नासति साध्यनिर्देश उपपद्यते । निर्दिष्टे हि साध्ये कुत इत्यपेक्षायां हेतुः सम्बध्यते । ततः कथमयमव्याप्तोऽस्य साधक इत्यपेक्षिते व्याप्तिवचनम् । इतरथा त्वेकार्थ्याभावादेकवाक्यतैव न संवर्तेत । तथाहि— यत् कृतकं तदनित्यमित्युक्ते कृतकत्वमनित्यतया सम्बद्धमित्यनूदितम् । पुनश्च शब्दः कृतक इति शब्दस्य कृतकतया सम्बन्धोऽनूदितः । परस्परसम्बन्धे तु न प्रमाणम् । असम्बद्धमिदं वाक्यद्वयमित्याशङ्क्येत, कृतकं तावदनित्यं शब्दोऽपि कृतक इति स्वरूपानुवादमात्रमुभयोरिति शङ्का जायेत, अर्थान्तरं वापद्येत । यथा चानित्यत्वधर्मा कृतकस्तथा शब्दात्मकोऽपीति, तदत्र सर्वे कृतकाश्शब्दात्मान इति साधुसम्पादितमापद्येत । अतः प्रधानवाक्यावयवप्रतिज्ञा यदपह्नूयते तन्नास्तिकानामेव सर्वापलापवादिनां शोभते नेतरेषाम् । सा हि सर्वव्यवहाराणां सारः । यदाहुः—

"सारं तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥"

इति सूक्तो वादिवचनप्रकारो धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति ॥ ५३-५४ ॥

नन्वेवं साध्यविशिष्टे धर्मिणि विधीयमाने केवलसाध्यान्वयावगमाद् धर्मान्तरव्युदासो भवेत् । ततश्चानित्यश्शब्द इत्युक्ते नित्य एवेत्यवधारणादम्बरगुणत्वादयोऽपि तद्धर्मा न भवेयुः । एवं च हेतोरपि प्रतिक्षेपात् साध्यसिद्धिरपि दुर्लभैव । असत्यवधारणे नित्योऽपि स्यादिति नेष्टसिद्धिः । अथ कथमेको नित्योऽनित्यश्चेत्यर्थात् प्रतिपक्षप्रतिक्षेपः । सत्यम्, अत एव तन्निवृत्त्यर्थमवधारणे क्रियमाणे इतरनिवृत्तिरपि भवेदत आह — नियमश्च इति । साध्यधर्मविवक्षापेक्षयैव नियमः कल्प्यते, न



पुनरविरोधिनोऽपि धर्मान्तरात् । अतोऽग्निमानिति साध्यमानेऽग्न्यभावमात्रमेव निराकृतं भवति, न पुनः धर्मान्तरम् । यथा शुक्लः पट इत्युक्ते तद्विरोधिनस्तदभावस्यैव निवृत्तिर्भवति, नाविरोधिनां सूक्ष्मत्वादिधर्माणामिति । अत्र चासन्निकृष्टेऽर्थे इत्युच्यते, तस्य कोऽर्थः । यदनवगतपूर्वमेवार्थमनुमानं गोचरयतीति, तन्न । सम्बन्धज्ञानकाल एव हि यावद्धूमादिभावितयाऽग्न्यादिसम्बन्धोऽवगत एव । अन्यथा नियम एवावधारितो न स्यात् । न चात्र देशकालसम्बन्धोऽधिक इति वक्तव्यम् । धूमस्य हि देशादिसम्बन्धो भासते नाग्नेः । धूमोपलक्षिताशेषदेशसम्बन्धस्य सम्बन्धसमधिगम एवावसायात् । अत एव कैश्चित् स्मरणाभिमाननिरासार्थमसन्निकृष्टपदं व्याख्यातम् । स्मरणं हि सन्निकृष्टावमर्शोल्लिखितमेव प्रायशो भवति, स इति हि तत् प्रवर्तते । न चैवमनुमानम् । अतो नेदं स्मरणम् । नन्वसत्यपि तदुल्लेखे स्मरणमुत्पद्यत एव । यथा प्रमोषे । नैवम् । ग्रहणकारणाभावाद्धि तत्रानुभवाकारप्रवृत्तमपि ज्ञानं स्मृतिरित्यास्थितम् । न ह्यसन्निहितरजताद्यवभासकारणत्वमिन्द्रियाणां प्राप्यकारिणां सम्भवति । स्मृतिहेतुस्तु प्राचीनानुभवप्रभाविता भावना समस्तीति स्मृतिरेव प्रमुषिततदवमर्शा सेत्याश्रितम् । इदं तु प्रत्युत्पन्नलिङ्गादिकारणबलादुत्पद्यमानं लैङ्गिकज्ञानमनुभवाकारप्रवृत्तं न तद्भावादुत्सारयितुं शक्यम् । अनुभूतिश्च नः प्रमाणम् । अतः प्रमाणमनुमानमित्याख्यायते । यद्येवमस्तु तर्हीदमेवासन्निकृष्टपदस्य प्रयोजनम् । न । फलाभावेनाप्रामाण्यप्रसङ्गात् । अधिकपरिच्छेदफलं प्रमाणं भवति । परिच्छेदमात्रस्य तु फलत्वे स्मृतावपि प्रसङ्गः । सापि हि स्वगोचरपरिच्छेदात्मिकैव जायते । स्यान्मतम्— अनपेक्षं हि नः प्रमाणम् । अपेक्षते च स्मरणं ग्रहणम् । अतो न प्रमाणमिति । तन्न । लैङ्गिके प्रसङ्गात् । तदपि ह्येकदेशदर्शनादिसापेक्षमेव । स्वविषयग्रहणापेक्षं स्मरणं नेदमिति चेन्न । इहापि तदपेक्षणात् । लैङ्गिकमपि हि प्राचीनाग्निज्ञानसापेक्षमेव । न ह्यनवगताग्नेरविदितसम्बन्धस्याग्निरत्रेति मतिराविरस्ति । न च ग्रहणं प्रमाणमेवेति राजाज्ञा । भ्रान्तावपि प्रसङ्गात् । विपरीतावग्रहोऽपि ग्रहणमेव । न च प्रमाणम् । न चासौ नास्तीति यथार्थायथार्थज्ञानविभागं व्याचक्षाणैरस्माभिरुक्तमेव । अपि च 'अर्थेऽनुपलब्ध' इति सूत्रयता सूत्रकारेण

ताद्रूप्येण गृहीतत्वं तद्विपर्ययतोऽपि च ।
प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः ॥ ५६ ॥
ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।

---

सर्वमनुपलब्धार्थविषयमेव प्रमाणमिति सूचितम् । एतदपि तद्व्याख्यानावसरे वर्णितमेव । अतो व्याख्येयमसन्निकृष्टार्थग्रहणमत आह — असन्निकृष्टेति । अस्यार्थः — द्वेधा हि सन्निकृष्टं भवति तद्रूपप्रमितं विपरीतनिरूपितं वा । तदुभयजिहासयेयमसन्निकृष्टवागिति । किं पुनस्तन्निराकरणमत आह — प्रमितस्येति । व्यवहारार्थं ह्यप्रमितपरिच्छेदाय प्रमाणमपेक्ष्यते न व्यसनेन । स च सकृत्प्रमाणव्यापारादेव सिद्ध इति न प्रमाणान्तरापेक्षेति ॥ ५५, ५६ ॥

किं पुनः प्रमितस्य प्रमाणान्तरापेक्षा न जायेत । अत आह — ताद्रूप्येणेति । वर्णितमिदं — द्वेधा हि प्रमितं भवति ताद्रूप्येण वैपरीत्येनेति । तत्र तावत् ताद्रूप्यपरिच्छेदे न परं प्रमाणं फलवत् । पूर्वपरिच्छेदादेव तदर्थसिद्धेः । वैपरीत्यपरिच्छेदे तु प्रमाणान्तरमनवकाशमेवेति तदुभयनिराकरणार्थमसन्निकृष्टग्रहणमर्थवत् । नन्वेवमप्रमाणमेवानुमानं सन्निकृष्टविषयत्वादित्युक्तमेव । न । अधिकारविषयत्वात् । यद्यपि पूर्वावगतो धर्मः स्मृतिविषयः । धर्मी च गिरिरनुभवसिद्धः, तथापि विशिष्टमनुमानेन विषयीक्रियत इति वर्णितमसकृत् । नन्वग्निविशिष्टोऽपि सम्बन्धसमय एव संविदितः । एवं ह्यनेन व्याप्तिग्रहणकालेऽवगतं धूमवन्मात्रमग्निमदिति । तदस्य धूमवन्मात्र एवापेक्षा । विदिते तु तस्मिन्नग्निमत्ता प्रमितपूर्वैवानुभूयते । सत्यम् । किन्तु धूमवानग्निमत्तया प्रमितपूर्वोऽपि सम्प्रत्यनुमानेन प्रत्यभिज्ञायते । प्रत्यभिज्ञानं चेदं प्रमाणमेव प्रत्यक्षप्रत्यभिज्ञानवत् । पूर्वं हि धूमवत्त्वोपलक्षितेन रूपेणाग्निमत्तया देशो निर्ज्ञातः । सम्प्रत्ययमसावग्निमानिति विशेषतोऽनुमानेन प्रत्यभिज्ञायत इति किमनुपपन्नम् । अवश्यं चैवमभ्युपगन्तव्यम्, अन्यथा कथमग्निमानिति विदित्वा व्यवहाराय घटते । एष हि पक्तुकामोऽग्निमत्तामनुमायाग्नये धावतीति पश्यामः ।



वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु ॥ ५७ ॥
मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ।
प्रत्यक्षादेश्च षट्कस्य नैवार्थो ह्यवधारितः ॥ ५८ ॥
तेनैवोत्तरबाधः स्याद् विकल्पादेरसम्भवात् ।
अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते ॥ ५९ ॥

---

तत् कस्य हेतोः, न यदि पूर्वानुभवादस्य विशेषः, अवागमत् खल्वयं धूमवानग्निमानिति, न चाग्नये धावतीति । कथमनाश्रयप्रतिपन्नेऽग्नौ व्यवहरतीति चेत् । न । प्रागपि धूमवदाश्रयत्वेनावगमात् । पर्वतमधुना प्रत्यक्षेण विशेषतोऽवगम्याग्नये व्यवहरतीति चेत् । किमस्याग्न्यर्थिनः पर्वतप्रत्यक्षेण । तदयमग्निमत्तया बोध एव पूर्वबोधाद् विलक्षणोऽभ्युपगन्तव्यः । यत्कृतो व्यवहारविशेषः इत्यगृहीतविषयत्वादनुमानं प्रमाणमिति वक्तव्यम् । तदिदमसन्निकृष्टग्रहणेनोक्तम् । ये तु स्मृत्याशङ्कानिराकरणमस्य प्रयोजनमाहुः, तेषां बाधितविषयमप्यनुमानमापद्येत । न हि तन्निराकरणमवयवान्तरेण लक्षणग्रन्थे कृतमुपलभ्यते । अतोऽसन्निकृष्टग्रहणमेवोभयविधसन्निकृष्टार्थनिराकरणार्थमिति साध्वी व्याख्येति ॥ ५७ ॥

वैपरीत्यपरिच्छिन्ने परमनवकाशमित्युक्तम् । तत्र कारणमाह — मूल इति । व्याप्तिस्मरणादि ह्यनुमानस्य मूलम्, तद्यावदुत्तरं तत्तद्व्यापारव्यग्रतया विलम्बते तावच्छीघ्रभाविना पूर्वेण विषयापहाराद् विप्रकृष्टसाधनस्योत्पत्तिरेव निरुध्यत इत्यनन्तरमेव वक्ष्यत इति । कथं पुनरनुमानं बाध्यते । सदपि हि प्रमाणं कथं प्रमाणान्तरेण बाधितुं शक्यते । बाधे वा न कश्चिदाश्वासो भवेत् । आभासो बाध्यत इति चेत्, कथमाभासत्वम् । यदि बाधादेवेतराश्रयं तर्ह्यस्तु वा ज्येष्ठप्रमाणेन प्रत्यक्षेणानुमानबाधः । ननु ततोऽपि जघन्यैरपरैर्बाध्यते, तत् कस्य हेतोः अत आह — प्रत्यक्षादेरिति स्यादन्तेन । अयमभिप्रायः — न प्रमाणं नाम किञ्चित् बाध्यते । अवधारणात्मकं ह्येवैतदिति ज्ञानं प्रमाणम् । तद् यत्र कस्यचिदर्थस्य केनचिदात्मनावधारणं भवति तत्र तेनोत्पन्नस्योत्पत्स्यमानस्य वा ज्ञानस्य बाधोऽभिधीयेत । तद्द्विविधो हि बाधः प्राप्तबाधश्चाप्राप्तबाधश्चेति । प्राप्तबाधो हि यथा — शुक्तिकारजतज्ञाने । तत्र हि पूर्वोपमर्दनेनैवोत्तर-

मात्मानं लभत इति तत् तस्य बाधकम् । उत्तरं च देशादिभेदेऽप्यबाधितं स्वभावतश्च प्रमाणं पूर्वमाभासीकरोति । तदेवं प्राप्तबाधे तावद् येनोत्तरेणार्थोऽवधारितः । त्रिविधमप्यप्रामाण्यमवधारितपदेन व्युदस्यति । न ह्यज्ञातस्सन्दिग्धो विपर्यस्तो वार्थोऽवधारितो भवतीति त्रिविधमप्यप्रामाण्यं यस्य नास्तीत्युक्तं भवति । तदेवमात्मना ज्ञानेन पूर्वमाभासीकृतमिति तत्राभास एव बाध्यत इति नातिप्रसङ्गः । अप्राप्तबाधे तु यावत् क्लिष्टसाधनमनुमानं स्वगोचरे सामान्यशास्त्रं वा क्वचिद् विशेषविषये प्रवर्तितुमारभते तावत् प्रत्यक्षेणानुमानेन वा सिद्धसर्वाङ्गकेनागमेन वा विशेषविषयेण शीघ्रजन्मना येनैवार्थोऽवधारितो भवति तेनैवोत्तरस्योत्पत्तिप्रतिबन्धलक्षणो बाधो भवति । न हि बलवता शीघ्रभाविना प्रमाणेन निरुद्धमुखमुत्पत्तुमर्हति । तदेवमप्राप्तबाधे परमनुत्पन्नमेव प्राप्तिसम्भावनया तु बाध्यत इत्युच्यते श्रुत्येव लिङ्गमिति न क्वचित् प्रमाणबाधः । यत्तु जघन्येन मुख्यबाधो न युक्त इति । तन्न । न हि प्रत्यक्षादीनां विनियोगप्रमाणानामिव पारदौर्बल्यनियमः । यदेव तु शीघ्रभावि पूर्वोपमर्देन वात्मानं लभते तदेव बाधकमभिदध्महे । इतरच्च बाध्यमत एव तेनैव तस्य बाधं ब्रूमः । प्राप्तबाध इव प्रत्यक्षस्य तेनैवानुमानेन च सिद्धाङ्गकेन साध्याङ्गकस्य विशेषशास्त्रेण सामान्यशास्त्रस्य । अतस्सर्वप्रमाणाविरुद्धमेव पक्षमभिधास्यामः । न चानाश्वासः । आभासबाधात् । स्वतः प्रमाणेन चावधारणात्मना ज्ञानेनेतराभासीकरणात् । तदिदमवधारितपदेनोक्तमिति । ननु च बलवतापि नावश्यं दुर्बलं बाध्यते । असति हि सम्भवे बाधस्सम्भवति । अतो विषयव्यवस्थाया विकल्पेन समुच्चयेन वोभयमुपपादयिष्यते विनात्यन्तिकबाधाश्रयणेन , अत आह — विकल्पादेरिति । नात्रोक्ता विकल्पादयस्सम्भवन्ति । न तावत्परस्परविरुद्धं रूपद्वयमेकत्र समुच्चीयते । न हि श्रावणोऽश्रावणश्च नित्योऽनित्यश्चेति सम्भवति । न च विकल्पः । विधिनिषेधविषयत्वात् तस्य सिद्धे वस्तुन्यसम्भवात् । न च विषयव्यवस्था, वर्णात्मनामेव नित्यानित्यत्वसाधनात् । अतोऽसम्भवादेव बाधमभिदध्मह इति । एवमुपपादितो बाध उदाहरणैर्दर्शयितव्यः । तत्र प्रत्यक्षबाधमेव तावद् दर्शयति अग्राह्यतेति । इमं तु प्रत्यक्षबाधं न बुध्यामहे । स्वगोचरविपरीतार्थं हि प्रमाणं



तेषामश्रावणत्वादि विरुद्धमनुमानतः ।
नहि श्रावणता नाम प्रत्यक्षेणावगम्यते ॥ ६० ॥
सान्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु ।
त्रिधा शब्दविरोधः स्यात्प्रतिज्ञादिविभागतः ॥ ६१ ॥

प्रत्यक्षेण बाध्यत इति युक्तम् । न च ग्राह्यता प्रत्यक्षविषया ग्राह्यग्रहणसम्बन्धविषयत्वात्तस्याः । तस्य च प्रत्यक्षागोचरत्वात् । शब्दो हि प्रत्यक्षः न ग्राह्यता । अत एव ह्यश्रावणतापक्षोऽपि न प्रत्यक्षेण विरुध्यत इति वक्ष्यते । अत्रोच्यते । सत्यम्, नेन्द्रियविषयो ग्राह्यता, ग्राह्यस्तु तद्विषयः । तदिह ग्राह्यापलापस्यैव प्रत्यक्षविरोधो दर्शितः । निरालम्बनानुमानस्येति यावत् । प्रत्ययस्त्वग्राह्यपदादुपपन्नस्तस्यैवाभावमभिधत्ते । कश्च ग्राह्यस्य भावोऽन्यदतो भावात् । इयं हि शशविषाणस्याग्राह्यता यन्न भवति । तदभावादेव तत्राग्राह्यताभिधानप्रत्ययौ । तदनेन प्रकारेण शब्दाभावपक्षस्यैव प्रत्यक्षविरोध उपदिष्ट इति न किञ्चिदनुपपन्नमिति ॥५८,५९॥

अनुमानविरोधोदाहरणमाह—तेषामिति । तेषामेव शब्दादीनामश्रावणत्वाद्यनुमानविरुद्धं यो ह्यश्रावणमनित्यं वा शब्दं पक्षमिच्छति तस्यासौ शीघ्रभाविना विपर्ययानुमानेन बाध्यत इति । इदं तु प्रत्यक्षविरोधमन्ये मन्यन्ते । तान् निराकरोति— नहीति । शब्दो हि प्रत्यक्षः न तच्छ्रावणता ग्राह्यग्राहकसम्बन्धो हि शब्दस्य श्रावणस्य च त्वतल्भ्यामुच्यते । "कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्याम्" इति स्मृतेः । स च न प्रत्यक्षेण समधिगम्यः । अपि च अतीन्द्रियं श्रोत्रं, कथं तत्सम्बन्धश्शब्दस्य प्रत्यक्षो भविष्यति । न ह्यैन्द्रियानैन्द्रियाधारस्सम्बन्धः प्रत्यक्षो भवति वायुवनस्पत्योरिव । अतो नायं प्रत्यक्षविरोध इति ॥ ६० ॥

किंप्रमाणिका तर्हि श्रावणता । अत आह—सेति । अबधिरादिषु शब्दोपलब्धेर्बधिरादिषु चानुपलब्धेरन्वयव्यतिरेकौ दृश्येते । तथाहि श्रोत्रोपघातमात्रेण चक्षुरादिमतो बधिरस्य शब्दबुद्धिर्न दृश्यते । श्रोत्रे च दृष्टे चक्षुरादिष्वसम्भवेऽपि शब्दग्रहणं दृष्टम्, अत आभ्यामन्वयव्यतिरेकाभ्यामिदं श्रावणत्वं गम्यत इति । नन्वेवं कथमनुमानविरोधः, न ह्यन्वय-

व्यतिरेकावनुमानम्, तत्प्रभवस्तु मानसःश्रावणत्वविकल्पः, अतो मानसप्रत्यक्ष एवायमिति कश्चित् भ्राम्यति स वक्तव्यः। न बहिर्विषयबोधे मनः स्वतन्त्रमिति वर्णितमसकृत्। यद् यदीयान्वयव्यतिरेकावनुविधत्ते तत्तत्कारणकमिति सर्वकार्येषु समधिगतम्, अनुविधत्ते च शब्दज्ञानं श्रवणमिति तत्तत्कारणकमिति। इदमेव च शब्दस्य श्रावणत्वम्। यत्तु ज्ञानस्य श्रवणजन्यत्वमतोऽनुमानमेवेदम्। नन्वन्यत्राप्यन्वयव्यतिरेकानुविधायिनः कथं तत्कारणकत्वमवगन्तव्यम्, यत्र मानसं प्रत्यक्षमाश्रीयते, श्रूयताम्। पश्यामो हि वयं कुम्भकारव्यापारानन्तरं कुम्भसम्भवमुदीक्षमाणाः कार्यकारणभावं चक्षुषैव। इदं हि कुम्भस्य तत्कार्यत्वं या तदनन्तरसम्भूतिः। स च कुम्भस्तत्सम्भवश्चोभयं चाक्षुषमेवेति किमत्र मनसा। अतो यद् यस्मिन् सति भवति, असति च न भवति, तत्तत्कारणकमिति प्रत्यक्षतो विदितव्याप्तेरनुमानमुपपन्नमेव। एवं च प्रयोगः—श्रवणप्रमाणप्रकाश्यश्शब्दः तस्मिन् सत्येवोपलभ्यमानत्वात्। यदेवं तत्तत्प्रकाश्यं सन्तमस इव घटः प्रदीपप्रकाश्य इति। इदं च प्रत्यक्षपूर्वकार्थापत्तिपूर्वकमनुमानं तया श्रावणत्वसिद्धेः। इदं च सिद्धसर्वाङ्गत्वादश्रावणत्वानुमानाद् बलवत्। यावद्धि गुणत्वस्याश्रावणत्वेन व्याप्तिर्ग्रहीतुमिष्यते, तावच्छीघ्रजन्मना श्रावणत्वानुमानेन व्याप्तिसंविदं प्रतिबध्नता तस्योत्पत्तिरेव निरुध्यते। एवमेवानित्यत्वानुमानमपि। यत् कृतकत्वादिहेतुकं तदप्यसिद्धिव्यभिचारादिदोषान्न शीघ्रमुपजायत इति सिद्धावयवैश्शीघ्रजन्मभिर्नित्यत्वानुमानैर्बाध्यते। यथा देशकालादिभिन्ना गोशब्दबुद्धयस्समानविषयाः गौरित्युत्पद्यमानत्वात् सम्प्रत्युत्पन्नगोशब्दबुद्धिवद् ह्यस्तनोच्चरितो वा गोशब्दोऽद्याप्यस्ति गोशब्दत्वाद्, अद्योच्चरितगोशब्दवदित्यादिभिरिति ॥ ६०½ ॥

शब्दविरोधप्रकारमिदानीं प्रतिजानाति—त्रिधेति। प्रतिज्ञाविरोधादयो हि शब्दविरोधतया प्रसिद्धा इति ते तथाभिधीयन्ते। न त्वेते शब्दविरोधाः। यत्र हि क्वचिदर्थे प्रतिष्ठितेन शब्देन प्रतिज्ञान्तरं बाध्यते, तत्र शब्दविरोधो भवति। न च स्ववाग्विरोधे शब्दस्य क्वचिदर्थे प्रतिष्ठास्ति व्याहताभिधानात्। पूर्वसञ्जल्पविरोधेऽपि पूर्वापरन्यायबलाबलानुसारेण निर्णय



**प्रतिज्ञापूर्वसञ्जल्पसर्वलोकप्रसिद्धितः ।**
**यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते ॥ ६२ ॥**
**सर्ववाक्यमृषात्वेन धर्मोक्त्यैवात्मबाधनम् ।**
**धर्म्युक्त्याहं यतो जातः सा वन्ध्या जननी मम ॥६३॥**

---

इति न शब्दविरोधः। न हि तत्र शब्दप्रमाणतोऽर्थः न्यायगम्यत्वात्। लोकप्रसिद्धिस्तु न शब्दो न प्रमाणान्तरम्। अपि तु प्रत्यक्षाद्यन्तर्गतैवेति तद्विरुद्धपक्षप्रदर्शनेनैव प्रदर्शितेति न शब्दविरोधेऽन्तर्भावयितुमुचिता। न ह्यचन्द्रश्शशीति पक्षश्शब्देन विरुध्यते। नहि चन्द्रशब्दशशाङ्कयोस्सम्बन्धं शब्दो वदति येनातद्वाच्यपक्षस्य शब्दविरोधो भवति सम्बन्धवाच्यत्वे हीतरेतराश्रयं भवेत्। अभिधानात् सम्बन्धः सम्बन्धाच्चाभिधानमिति। तस्मान्नैते शब्दविरोधाः। पूर्वोत्तरशब्दसामर्थ्यपरामर्शेन त्वेकपरित्यागेनेतरपरिग्रहाच्छब्दविरोधतया प्रसिद्धा इति तन्त्रान्तरप्रसिद्धिविभागात्त्रिधा शब्दविरोध इत्युच्यते। परमार्थेन तु वेदार्थवचनविपरीतार्थप्रतिज्ञैव शब्देन विरुध्यते। तत्र हि प्रतिष्ठितं शब्दस्य प्रामाण्यं शक्नोति विपरीतप्रतिज्ञां वारयितुम्। तच्चानन्तरमिहैव वक्ष्याम इति ॥ ६१ ॥

तानेव त्रीन् प्रकारान् दर्शयति—प्रतिज्ञेति। तत्र प्रतिज्ञाविरोध एवैकस्त्रिधा भिद्यत इत्याह—यावदिति सार्धेन। अयमर्थः—प्रतिज्ञाविरोधो हि स्ववाग्विरोधः। स च त्रेधा भिद्यते। उच्चारणधर्मधर्मिभेदात्। यावज्जीवमहं मौनीति पक्षः प्रतिज्ञयैव बाध्यते। न ह्यनुक्ता सती प्रतिज्ञा भवति। उक्तिमात्रेण च मौनं बाध्यते। अतः प्रतिज्ञाशरीरान्तर्गतेनोक्तिमात्रेण बाधाद् भवति प्रतिज्ञया बाधः। सर्ववाक्यमृषात्वपक्षस्तु धर्मोक्त्या बाध्यते। सर्वमृषात्वे हि प्रतिज्ञावचनमपि मृषेति नेतरन्मृषा भवेत्। तदमृषात्वे वा न सर्वमिथ्यात्वम्। तदिह प्रतिज्ञान्तर्गतधर्मसंसर्गासम्भवपरामर्शात् पक्षबाध इति धर्मोक्तिविरोधाभिधानम्। पूर्वत्र त्वविशिष्टमुक्तिमात्रमेव मौनं बाधत इत्युक्तिमात्रेणेत्युक्तम्। आत्मबाधनमिति। धर्मबाधनमित्यर्थः। धर्म एवायमुक्त आत्मानं बाधत इति यावत्। वन्ध्या मे जननीति पक्षो धर्म्युक्त्या बाध्यते। जननीत्वे ह्युद्दिष्टमात्रे न

बौद्धस्य शब्दानित्यत्वं पूर्वोपेतेन बाध्यते ।
चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ॥ ६४ ॥
स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।
ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् ॥ ६५ ॥
न गोर्गवयसादृश्यं तस्य बाधोपमानतः ।
गेहावगतनास्तित्वो जीवंश्चैत्रो यदा बहिः ॥ ६६ ॥

---

वन्ध्यात्वमास्पदं लभते । न च गौणो जननीशब्द इत्यपि वक्तव्यम् । अहं यतो जात इति विशेषणात् । एवं विशेषिते पक्षे धर्म्युक्तिविरोध इत्युक्तं भवति । एतच्चाभ्युपगमवादेनोक्तम् । न तु श्रुतिस्मृत्यतिरेकीणि जल्पाकवचनानि गौणत्वादिभिस्समीकर्तुं शक्यन्ते । सर्वदूषणोच्छेदप्रसङ्गात् । प्रमादाज्ञानजान्येव हि दूषणानि भवन्ति । तेषु कथञ्चित्समाधीयमानेषु न किञ्चिद् दूषणं नाम भवेदिति ॥ ६२, ६३ ॥

पूर्वसञ्जल्पविरोधमुदाहरति बौद्धस्येति । अनित्यश्शब्द इति बौद्धेनोक्ते कथं क्षणिकादगृहीतसम्बन्धादर्थप्रत्यय इत्यनुयुक्तेन तेनैव यदा पुनरुच्यते नित्यस्तर्हीति तदा तस्य पूर्वाभ्युपगमविरोधः । यद्यपि चात्र न्यायबलाबलानुसारी बाध्यबाधकभावः, तथाप्येवंविधा पूर्वापरविरुद्धा प्रतिज्ञैवात्मानं न लभत इति न न्यायावतारमपेक्षते । सम्भाविते हि प्रतिज्ञायामर्थो न्यायेन साध्यते । असम्भाविते तु न्यायापेक्षा नास्त्येव, स्वरसभङ्गुरत्वात् । अतश्शब्दविरोध एवैनमन्तर्भावयति । शब्दसन्दर्भ एव हि तादृशः पूर्वापरविरुद्धः पक्षं विनाशयतीति तेषामभिप्राय इति । सर्वलोकप्रसिद्धिविरोधस्योदाहरणमाह—चन्द्रेति । अत्रापि महाजनविपरीतार्थश्शब्दसंसर्गः स्वरसादेव भज्यते न प्रमाणं यावदपेक्षत इति शब्दबाध उदाहृत इति ॥ ६४½ ॥

उपमानविरोधोदाहरणमाह—ज्ञातेति । येन हि नगरे गवाकारो दृष्टः सम्प्रति चारण्ये गवयाकारः, तं प्रति गौर्गवयसदृशो न भवतीति पक्ष उपमानेन विरुध्यत इति ।



नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत् ।
अङ्गावदाहके साध्ये शब्दे चानभिधायके ॥ ६७ ॥
श्रोत्रादिनास्तितायां च शब्दानित्यत्वसाधने ।
श्रुतार्थापत्तिबाधोऽत्र यदाप्तोक्तिनिवारिते ॥ ६८ ॥
दिवाभुजो निषिध्येत हेतुना रात्रिभोजनम् ।

---

परोक्षे गवि सादृश्यमुपमेयम् । प्रत्यक्षे तु प्रत्यक्षमेव । अत एव 'ज्ञातगोगवयाकार'मिति क्रमो विवक्षित इति ॥ ६५½ ॥

अर्थापत्तिविरोधमिदानीं विवक्षन् भाष्यकारानुसारेणाभावपूर्विकां तावदुदाहरणमाह—गेहेति ॥ ६६½ ॥

प्रत्यक्षपूर्विकामुदाहरति— अङ्गाविति । अदाहक इति । अतच्छक्तियुक्त इत्यर्थः । अनुमानपूर्विकामुदाहरति—शब्दे चानभिधायक इति । शब्दश्रवणानन्तरमर्थप्रतीतिं चेष्टयानुमाय तत्र शब्दः कारणमित्युन्नीयते । अतस्सर्वकारकाणां क्रियाविनाभावादभिधाभिधानो व्यापारः, तदनुपपत्त्यार्थापत्त्या तच्छक्तिसिद्धिरिति ॥ ६७ ॥

तथेन्द्रियापलापपक्षोऽपि प्रत्यक्षपूर्विकयार्थापत्त्या विरुध्यत इत्याह—श्रोत्रेति । यद्यपि प्रत्यक्षपूर्विकोदाहृतैव तथापि पक्षदोषोद्भावनच्छलेनैन्द्रियापलापपक्षस्याप्ययं दोष इति विवक्षता पुनस्तद्विरोधोऽभिहितः । अत्रैवादिशब्देनोपमानपूर्विकया विरोधो दर्शयितव्यः — यथा गवयोपमितायां गोस्तज्ज्ञानग्राह्यशक्त्यपह्नव इति । अर्थापत्तिपूर्विकया विरोधमुदाहरति—शब्देति । अर्थाभिधानान्यथानुपपत्त्या हि वाचकशक्तिमर्थापत्त्या प्रमाय पुनस्तदनुपपत्त्यार्थापत्त्यन्तरेण शब्दानित्यत्वमवगम्यत इति ॥ ६७½ ॥

शब्दपूर्विकार्थापत्तिविरोधमुदाहरति—श्रुतार्थापत्तिबाध इति । किं पुनरर्थापत्तिः प्रपञ्चेनोदाह्रियते, तद्विरोधप्रतिपादनं हि ययाकयाचिदेकयापि सिध्यत्येव । तथा च प्रमाणान्तरविरोधेषु प्रपञ्चो न दर्शितः । अर्थापत्तिवद्वा प्रमाणान्तरविरोधोऽपि प्रपञ्चेन वाच्यः । सत्यम् । षोढा भिन्नैरेव षड्भिरत्र विरोधो वार्तिककारस्य विवक्षितः, तत्प्रदर्शनार्थमेव षट्प्रमाणप्रसूतार्थापत्तिरुदाहृता । तेनैव तु मार्गेण प्रमाणान्तरेष्वपि प्रपञ्चो दर्शयितव्यः ।

यथा तावत् प्रत्यक्षबाध एवानुभूतिस्मृत्यनुमानादिभिः षष्ठवर्जं षोढा भिद्यते । स्वेद्यमानस्य वादिनोऽनुष्णो वह्निरिति प्रतिज्ञा अनुभवस्थेनैव प्रत्यक्षेण विरुध्यते । अनासन्नाग्नेस्तु सैव प्रतिज्ञा स्मृतिस्थेन प्रत्यक्षेण विरुध्यते, यदा खल्वयं वादकालेऽनुष्णो वह्निरिति प्रतिजानाति तदैनमितरः स्मारयति किं न स्मरसि पूर्वानुभूतमग्नेरुष्णत्वं यदेवमात्थेति, स तत् स्मृत्वा ततः प्रत्यक्षान्निवर्तेत इति भवति स्मृतप्रत्यक्षबाधः ।

अनुमितप्रत्यक्षबाधस्तु यत्रासमुखे चेष्टाविशेषादर्शनेन तदवगततिक्तादिरसनिवारणं प्रतिज्ञायते, मुखवैरूप्येण हि तस्य तिक्तानुभवोऽनुमीयते अतस्तद्विपरीतपक्षस्यानुमितप्रत्यक्षबाधः ।

श्रुतप्रत्यक्षबाधस्तु यत्र केनचिदर्थे कस्मिंश्चिदपह्नुते साक्षिभिर्दृष्टोऽयमर्थ इति साक्षिप्रत्यक्षेण बाधोऽभिधीयते । न चैष शब्दबाधः । न ह्यत्र तैरर्थोऽभिधीयते । किन्तु दर्शनम् । अतस्तद्दर्शनानुसार्येव निर्णयः । दर्शनं तु तैः स्वशब्देन प्रत्याय्यत इति शब्दावगतप्रत्यक्षविरोध एवायम् ।

उपमानं तु प्रमाणान्तरप्रसिद्धवस्तुसादृश्यमात्रविषयमित्यन्यतरसिद्धस्य सादृश्यं गोचरयति । यथा दात्रादिप्रत्यभिज्ञायां यादृशी स्वात्मनि चेष्टा दृष्टा तां परत्रापि दृष्ट्वोपमिनोति-ममेवास्यापि दात्रादिप्रत्यभिज्ञा प्रत्यक्षमुत्पन्ना, कथमन्यथा पूर्वेद्युरर्धकृतकर्मसमापने परेद्युः प्रवर्तेत । इह च चेष्टया तदनुरूपं परगोचरमनुमाय स्वज्ञानसादृश्यं तत्रोपमीयते । यद्यपि चात्रानुमानावगतप्रत्यक्षबाध एव शक्यो दर्शयितुम्, तथापि स्वज्ञानसादृश्यपरिच्छेदे शक्यं दर्शयितुमिति तदवगतप्रत्यक्षबाधोऽभिधीयते । प्रत्यक्षसत्तैवोपमानेन प्रमीयते । अर्थापत्त्यवगतप्रत्यक्षबाधस्त्वेवं दर्शयितव्यः । यदा हि बहुषु गच्छत्सु तोयार्थिषु तटाकमेकस्तदाहरणाय प्रस्थितो विलम्बते तदा तद्विलम्बनान्यथानुपपत्त्या तदीयं तोयप्रत्यक्षमर्थापत्त्या प्रमीयते । तत्र तद्विपरीतो निस्तोयतटाकपक्षोऽर्थापत्तिसिद्धेन प्रत्यक्षेण बाध्यते । अभावेन तु भावरूपं प्रत्यक्षं नावगम्यत इति तदनवगतप्रत्यक्षविरोधो नेहोदाह्रियते । षोढा विभक्तमनुमानबाधमतःपरमनुसन्धास्यामः—धूमावगतवह्निप्रतिषेधे तावत् प्रत्यक्षपूर्वानुमानबाधः । धूमानुमितादेव वह्नेरुष्णत्वेऽनुमिते तद्विपरीतपक्षोऽनुमितानुमानेन बाध्यते । यत्र तु 'देवस्य त्वेति निर्वपति'



इति प्रतीतविनियोगान्मन्त्रशेषेऽनुमिते तद्विपरीतः पक्षो गृह्यते, तत्रागमानुमानबाधः ।

नित्ये तु कर्मणि प्रवृत्ते व्रीहीणामपचारे तत्सदृशेषु नीवारेषूपासितेषु 'व्रीहिभिर्यजेते'ति चोदना नीवारविषयत्वेनानुमीयते । व्रीह्यवयवा हि तद्विषयतया ज्ञातसम्बन्धास्तामनुमापयन्ति । न हि तस्याः स्वरूपेण व्रीहयो विषयभूताः, तदवयवास्तु चूर्णीभूता व्रीहिशास्त्रार्थः । ते च नीवारेष्वपि सन्तीति व्रीह्यवयवसामान्योपमितनीवारगामिनी व्रीहिचोदनानुमीयते । तदिहातद्गोचरत्वपक्षस्योपमानपूर्वकानुमानबाधः ।

अर्थापत्तिपूर्वकानुमानबाधस्तु श्रावणत्वपक्षेऽभिहित एव । यत्र दूराद् वृक्षाभावं विदित्वा तच्छायाभावोऽनुमीयते तत्राभावपूर्वकानुमानेन छायासद्भावपक्षो बाध्यते । प्रत्यक्षशब्दबाधस्तु त्रिधा दर्शित एव । अन्योऽपि श्रुतिस्मृतिभ्यां दर्शयितव्यः । अष्टकादीनामधर्मत्वपक्षस्तु कर्तृसामान्यानुमितशब्दविरुद्धः स्मृत्यधिकरणे दर्शितः । शक्यं ह्यष्टकादयः शब्दमूलाः शास्त्रस्थार्यावर्तनिवासिकर्तृकत्वादग्निहोत्रादिवदित्यनुमातुम् । आगमिकशब्दबाधस्तु यत्र शाखान्तरगतश्रुतिविषयविवादे स्मृतिनिबन्धनकाराणां वचनेन श्रुतिसद्भावो निश्चीयते; तत्र ह्याप्तागमावगतनित्यागमविरोधो विपरीतपक्षस्य सम्भवति । उपमितशब्दविरोधस्तु मन्वादिस्मृतिभ्योऽर्थापत्त्या वैदिकं किमपि मूलमस्तीति कल्पिते स्मार्तवाक्यसदृश एव मूल उपमितेऽर्थवादमूलत्वपक्ष उपमितशब्देन बाध्यते । विश्वजिदफलत्वपक्षस्तु श्रुतार्थापत्तिसिद्धशब्दविरुद्धः । अभावेन तु शब्दभावोऽवगन्तुं न शक्यत इति शब्देयत्तावधारणे तस्य व्यापारः तत्राभावावधारितविधिकार्त्स्न्ये ज्योतिष्टोमे प्राकृतेतिकर्तव्यताप्राप्तिपक्षो बाध्यते । यथा वक्ष्यति— 'कृत्स्नविधानादपूर्वस्सोम' इति । व्रीह्यभावे तु नीवाराणामग्राह्यतापक्षः प्रत्यक्षजोपमानविरुद्धः । अनुमानपूर्वकोपमानबाधस्तु-यदा ह्यादित्यस्य देशान्तरप्राप्त्या गतिमनुमाय संवत्सरादिमध्यान्तेषु तस्यास्सादृश्यमुपमीयते । यादृश्येकत्र संवत्सरादौ तन्मध्ये वान्ते वा सूर्यगतिः तादृशी वत्सरान्तरेष्विति तत्र गतिवैसादृश्यपक्षोऽनुमानपूर्वकोपमानेन बाध्यते । पूतीका न सोमसदृशा इति तु पक्षश्शब्दपूर्वकोपमानविरुद्धः । सामपूतीकयोर्हि सादृश्यं न प्रत्यक्षम् । न

शशशृङ्गादिसद्भावविरोधोऽनुपलब्धितः ॥ ६९ ॥

एवं च धर्मसम्बन्धबाधस्तावदुदाहृतः ।
धर्मधर्म्युभयेषां च स्वरूपस्य विशेषयोः ॥ ७० ॥

---

चानुमेयम् । शब्देनैव तु सोमांशुजातत्वं पूतीकानां प्रतिपादयता कार्यकारणयोरौचित्येन सारूप्यं प्रतिपादितमिति शब्दावगतकार्यकारणप्रभवत्वात् पूतीकानां सोमसादृश्योपमानस्य तद्विपर्ययः शब्दपूर्वकोपमानविरुद्धो भवति। ज्योतिष्टोमिका हि धर्माः सत्राहीनेषु न भवन्तीति पक्ष उपमानोपमानेन बाध्यते । ज्योतिष्टोमोपमानेन हि ते द्वादशाहं गच्छन्ति द्वादशाहोपमानेन च सत्राहीनाविति । यदा त्वात्मेन्द्रियसादृश्यविशिष्टानि परेन्द्रियाण्युपमीयन्ते तत्र तन्निषेधोऽर्थापत्त्युपमानेन बाध्यते । वेदकारनास्तिता शशशृङ्गाद्यभावसदृशी न भवतीति पक्षोऽभावपूर्वकोपमानेन बाध्यते । द्वयोरप्यभावेनाभावेऽवगते सादृश्यमुपमीयते । अर्थापत्तिविरोधस्तु षड्विधो वर्णित एव । अभावविरोधं त्वनन्तरमेव वक्ष्यामः ॥ ६८½ ॥

अभावविरोधमिदानीमुदाहरति — शशशृङ्गादीति । अयं च प्रत्यक्षाभावविरोधः । यदा त्वमुं राशिं सूर्यो गतो न वेति चिन्त्यमाने गणितकुशलेन गणितानुमानाभावान्न गत इत्यवगते भ्रान्तो गत इति वदति । तत्रानुमानाभावविरोधः । चैत्यवन्दनादिधर्मत्वपक्षस्तु श्रुत्याद्यागमाभावविरुद्धः । पूर्ववन्तो दर्वीहोमा इति तूपमानाभावेन विरुध्यते, न हि तेषां केनचित् कर्मणा सादृश्यं कथञ्चिदवगम्यत इति । पलालकूटकुञ्जरयोस्तु सादृश्यास्तितापक्ष उपमानाभावेन विरुध्यते । तथा शब्दे श्रोत्रदेशमनागच्छति श्रोत्रे च शब्ददेशं ध्वन्यागमनमात्रेणैव शब्दश्रवणोपपत्तेर्योऽर्थापत्त्या शब्दः शब्दान्तरमारभते ततः क्रमेणान्त्यः श्रोत्रेण गृह्यते इत्यन्यथानुपपत्त्या प्रतिजानाति तत्प्रतिज्ञा अर्थापत्त्यभावेन बाध्यते । अभावाभावस्त्वेवं दर्शयितव्यः — यदा हि कर्त्रभावेन वेदानां दोषाभावोऽवगतो भवति तदा दोषवत्पक्षस्याभावाभावेन बाध इति ॥ ६९ ॥

एवं तावद् धर्मसम्बन्धबाधः षोढा प्रपञ्चितः । धर्मधर्म्युभयस्वरूपस्वविशेषबाधमतःपरं वक्ष्याम इति संक्षिप्य सुखग्रहणार्थं श्रोतृबुद्धिसमाधा-



श्रुत्यर्थाक्षिप्तयोर्वाक्ये बाध्यः सर्वप्रमाणकः ।
तृणादिविक्रियाहेतोरग्निमद्धिमसाधने ॥ ७१ ॥

प्रत्यक्षावगताच्छैत्यात् तद्विशेषोऽस्य बाधनम् ।
अधर्मो विहितो दुःखं करोत्यल्पमितीह तु ॥ ७२ ॥

विहितत्वादधर्मस्य स्वरूपस्यैव बाधनम् ।
तथा दुःखनिमित्तत्वं विशेषस्तस्य बाध्यते ॥ ७३ ॥

---

नार्थं च वृत्तवर्तिष्यमाणयोस्सङ्कीर्तनं करोति — एवमिति सार्धेन । श्रुत्यर्थाक्षिप्तयोरिति । स्वरूपं तावत् सर्वत्र श्रुत्यर्थ एव । तद्विशेषोऽप्यर्थाक्षिप्तः । धर्मधर्मिणोर्हि स्वरूपं येन विशेषेण व्याप्तं तमाक्षिपति । तच्चानन्तरमेव वक्ष्यत इति । श्रुत्यर्थश्चाक्षिप्तश्चेति विग्रह इति ॥ ७०½ ॥

तत्र धर्मस्वरूपबाधो वर्णित एवेति तमकृत्वैव तद्विशेषणबाधमुदाहरति — तृणादीति । यो हि तृणादिविकारदर्शनादग्निमद्धिमं साधयति तस्याभावेन तावद्धर्मस्वरूपबाधो भवत्येव । तद्विशेषणमप्युष्णत्वमर्थाक्षिप्तं प्रत्यक्षावगतेन शैत्येन बाध्यते । न च वाच्यमनुष्णोऽपि वह्निः प्रभासु दृष्ट इति कथमर्थाक्षिप्तो विशेष इति । प्रभास्वप्येवं वह्निरुष्ण एव, अभिभूतत्वात्तु स्पर्शो न गृह्यते, न पुनरुष्णतां जातु जहाति, स्वाभाविकी हि सा तस्य । न च हिमेऽप्यभिभूतत्वादग्रहणमिति वाच्यम् । तद्विपरीतशैत्योपलम्भात् । हेतूपन्यासस्तु पक्षदोषाभिधानावसरे तद्बीजमात्रप्रदर्शनार्थं सोऽयमभावेन धर्मविशेषबाध इति ॥७१- ॥

धर्मिणस्तु द्विप्रकारोऽपि बाधोऽनुक्त एवेति उभयथा तद्बाधोदाहरणमाह — अधर्म इति सार्धेन । हिंसा किलाधर्म इति सामान्यतोऽवगतम् । तद् यदा विहितोऽधर्मो दैक्षपशुहिंसादिर्यद् दुःखं करोतीत्यनूद्य तदल्पमिति साध्यते, तदापि विहितत्वेनाधर्मतैव बाध्यते तद्विशेषोऽपि दुःखनिमित्तत्वं यदर्थाक्षिप्तं तदपि तेनैव बाध्यते । न हि विहितं नाम किमपि दुःखस्य निदानं भवति । पुरुषार्थैकसाधनत्वाद् विधेः । सोऽय-

अयथार्था धियस्सर्वा इत्युक्ते ह्युभयबाधनम् ।
स्वरूपस्वविशेषाभ्यां तद्धीमिथ्यात्वसाधनात् ॥
क्षणिकात्यन्तमिथ्यात्वे विशेषो च द्वयोरिह ।
दर्शनादेकदेशस्येत्यनेनैतद् व्युदस्यते ॥ ७५ ॥
यत्रैकस्योभयोर्वापि संशयाधीविपर्ययाः ।
शैत्यान्न दाहको वह्निश्चाक्षुषत्वादनित्यता ॥ ७६ ॥
शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः ।

---

मागमेन धर्मिस्वरूपस्वविशेषबाधः । न चात्र श्रुत्युपात्त एव स्वविशेष-इति चोदनीयम् । अर्थाक्षिप्तस्याल्पतया विधानार्थमनुवादादिति ॥ ७३ ॥

उभयस्योभयविरोधमुदाहरति — अयथार्थेति । यदा हि सर्व-ज्ञानानि मिथ्येति साध्यते तदा धर्मधर्मिग्राहिणोरपि ज्ञानयोर्मिथ्यात्वात् तद्विशेषणग्राहिणोश्च मिथ्यात्वाद् भवत्युभयस्यैवोभयबाध इति । अयं च धर्मोक्त्योभयबाध इति शब्दबाध एव निवेशनीय इति समधिगतं ताव-दुभयोः स्वरूपबाध इति ॥ ७४ ॥

कौ पुनस्तद्विशेषावर्थाक्षिप्तौ बाध्येते । अत आह — क्षणिकेति । बाध्येते इति विपरिणम्य सम्बन्धो दर्शयितव्य इति । तत्र चैकदेशदर्शना-दित्युच्यते । तत्र च दर्शनग्रहणमतिरिच्यते । एकदेशादित्येव वक्तव्यम् । तद्धि लिङ्गं न पुनर्दर्शनमतो व्याख्येयमेकदेशदर्शनादित्यत आह — दर्शनादिति । अयमर्थः । नैकदेशस्सत्तामात्रेण लिङ्गम् । किन्तु स्व-प्रतिपत्तौ ज्ञातः परप्रतिपादने च ज्ञापितः । तदिदमुभयमुपादातुं दर्शन-ग्रहणम् । शक्नोति चोभयमुपादातुम्, णिज्भावाभावयोरपि निर्देशसाधा-रण्यात् । स्वप्रतिपत्तौ तावदेकदेशे दृष्टे बुद्धिरनुमानमित्यर्थः । परार्थप्रयोगे तु णिजन्तदर्शनपदमेकदेशं दर्शयित्वा या बुद्धिर्जायते सानुमानमित्युक्तं भवति । तदिदं तत्रोच्चारितदर्शनपदमर्थद्वये व्याख्येयम् । अनेन च यत्रैक-देशे वादिप्रतिवादिनोरेकस्योभयोर्वा संशयोऽर्थाविपर्ययो वा भवति सोऽसि-द्धाभिधानो हेत्वाभासो व्युदस्यते । न ह्यसौ तादृशः परस्मै दर्शयितुं शक्यते ।



कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ॥ ७७ ॥
स्वोक्ते चैवंप्रकारे स्यादसिद्धोऽन्यतरस्य तु ।
बाष्पादिभावसन्दिग्धो द्वयोरन्यतरस्य वा ॥ ७८ ॥
धूमस्त्रिधाप्यसिद्धः स्यादेवं तावत्स्वरूपतः ।
एत एव प्रकारास्स्युराश्रयासिद्धकल्पने ॥ ७९ ॥
ज्ञातेऽपि हि स्वरूपेण नातद्धर्मेऽस्ति हेतुता ।

---

स्वयं वा दृष्टो भवति । अधीरज्ञानमित्यर्थः । तत्र द्वयविपर्यस्तोदाहरण-माह — शैत्यादिति । वह्निशब्दयोर्द्वयोरपि शैत्यचाक्षुषत्वे वादिप्रति-वादिनोर्विपर्ययादसिद्ध इति ॥ ७५–७६½ ॥

अन्यतरासिद्धोदाहरणमाह — कृतकत्वेति । यदा वैशेषिको याज्ञिकं प्रति शब्दोऽनित्यः कृतकत्वात् गुणत्वाद्वेति हेतुं प्रयुङ्क्ते, तदासौ स्वरूपेण तस्यासिद्धो भवति । यदा तु स्वयमेवंप्रकारं हेतुं परं प्रति वदति तदा तस्यासिद्धिः । यथा नित्यः शब्दः द्रव्यत्वादाकाशवदिति । न हि वैशेषिकाश्शब्दं द्रव्यमभ्युपगच्छन्ति गुणत्वाभ्युपगमात् । एवंप्रकार इति । परासिद्धप्रकार इत्यर्थः ॥ ७७½ ॥

सन्दिग्धासिद्धमुदाहरति — बाष्पादीति स्यादन्तेन । यदा हि धूमो बाष्पादिभावेन सन्दिह्यते द्वाभ्यामेकेन वा किंस्विदयं रजसामुद्गमो बाष्पो वा धूमो वेति तदा द्वयोरप्यन्यतरस्य वा सन्दिग्धासिद्धो भवति । एवं तावत् सन्देहविपर्ययाभ्यामसिद्धतोदाहृता । अज्ञानेन स्वप्रसिद्धार्थ-पदप्रयोगे दर्शयितव्या । त्रिधेति । वादिप्रतिवाद्युभयैस्त्रयः प्रकारा इति । एवं तावत् स्वरूपतो हेतुरसिद्धो भवतीत्युक्तमित्याह—एवमिति ॥ ७८½ ॥

आश्रयासिद्धताप्येतैरेव ज्ञानादिभिर्वादिप्रतिवाद्युभयापेक्षैस्त्रिधा भि-द्यत इत्याह — एत एवेति ॥ ७९ ॥

ननु स्वरूपासिद्ध्या हेतुर्दुष्येत् आश्रयासिद्ध्या तु कस्तस्य दोषः अत आह— ज्ञातेऽपीति । अयमभिप्रायः—न स्वरूपेण हेतुर्गमकः, अपितु

**सर्वत्र दृष्टकार्यत्वादात्मा सर्वगतस्त्विति ॥ ८० ॥**
**बौद्धं प्रत्याश्रयासिद्धो लौकिकादेस्तु संशयः ।**
**वाङ्मात्रासिद्धिमात्रेण व्यवहाराऽकल्पनात् ॥ ८१ ॥**
**द्वाभ्यां योऽसत्त्वतो ज्ञातस्तद्वचो दूषणं मतम् ।**
**इतरत् साधनं तु स्यात् वादिना यदि साध्यते ॥ ८२ ॥**

---

पक्षधर्मतया ज्ञातः । न चात्रसिद्धाश्रयस्तद्धर्मतया ज्ञातुं शक्यते । शैत्यचा-
क्षुषत्वयोरपि पक्षधर्मत्वासिद्धचैवाहेतुत्वम् । सिद्धं हि स्वरूपेण जले शैत्यं
रूपरूपिरूपैकार्थसमवायिषु च चाक्षुषत्वम् । शब्दा(दौ) हि पक्षधर्मतया तु
तयोरसिद्धत्वमिति तद्धर्मरूपाभिप्रायेण स्वरूपासिद्धवचनम् । अत आश्रया-
सिद्धावपि पक्षधर्मत्वासिद्धेरहेतुत्वं युक्तमेवेति ॥ ७९½ ॥

तामिदानीमाश्रयासिद्धिमुदाहरति—सर्वत्रेति अर्धान्तेन । यदा
हि बौद्धं प्रति सर्वत्र कार्योपलम्भादात्मनस्सर्वगतत्वं मीमांसकास्साधयन्ति,
तदान्यतरासिद्धाश्रयो हेतुर्भवति । बौद्धस्यात्मनोऽसिद्धेरिति । यस्तु प्रमा-
णगतिमजानानो लौकिकः कश्चिदात्मनि संशेते; तस्मिन्नेव हेतावुच्यमाने
सन्दिग्धाश्रयो हेतुरित्याह—लौकिकादेरिति । आत्मनि संशय इत्यर्थः ।
आदिशब्देन सतीर्थिकानामपि येषामात्मनि संशयः त उपादीयन्ते । एवं
संशयविपर्ययाभ्यामाश्रयासिद्धिरुक्ता । अज्ञानेनाप्याश्रयासिद्धिरप्रसिद्धपद-
प्रयोगे दर्शयितव्या । यस्य हि पक्षवचनश्शब्दो न प्रसिद्धस्तं प्रत्येवंजा-
तीयके हेतावुच्यमानेऽज्ञानेनाश्रयासिद्धिरिति ॥ ८०½ ॥

ननु यद्यन्यतरासिद्ध्या हेतुर्दुष्यति, एवं तर्ह्यमूर्तत्वादात्मा निष्क्रिय
इत्येवमादेरपि हेतुत्वं न स्यात् दिगम्बराणामात्मनोऽमूर्तत्वासिद्धेः । मूर्तं
हि ते शरीरपरिणाममात्मानं मन्यन्ते । अकर्तृकत्वान्नित्यो वेद इति च बौ-
द्धानां तदसिद्धेरहेतुः । शब्दोऽनित्यः कृतकत्वादिति मीमांसकानामसिद्धेः ।
तदेवं हेतुर्नाम न कश्चित् व्यवतिष्ठते । अत आह — वाङ्मात्रेति ।
अयमर्थः—नासिद्धो ममेति वाङ्मात्राद्धेतुरसिद्धो भवति । तथा सति न
कश्चिदनुमानव्यवहारः प्रकल्पेत । द्वाभ्यां तु वादिप्रतिवादिभ्यामसत्त्वेना-



**निराकरणसिद्धौ वा दूषणं प्रतिवादिनः ।**
**सन्देहविपरीतत्वहेतू चात्र निराकृतौ ॥ ८३ ॥**
**ज्ञातसम्बन्धवचनात् प्रयत्नसंशयहेतवः ।**

---

वधारितोऽसिद्धो भवति, तस्यैव तथाविधस्यासिद्धतावचनं वादिनो दूषणं
भवति नासिद्ध इति वाक्प्रवृत्तिमात्रादिति ॥ ८१½ ॥

ननु किमिदं द्वयोरसिद्धोऽसिद्ध इति, न हि विवदमानयोरेकत्रार्थे
सम्प्रतिपत्तिर्भवति, न हि जन्मसहस्रेणापि बौद्धो वेदानामकर्तृकत्वं
मन्यते, मीमांसको वापि कण्ठगतप्राणोऽपि कृतकतां शब्दस्य । तदेवमा-
द्वयसम्प्रतिपत्तेरभावान्न हेतुभावोऽवतिष्ठते । अत आह—इतरदिति,
अयमभिप्रायः — न द्वयोस्सम्प्रतिपत्तिरित्येतावतैव साधनदूषणयोरनवक्लृप्तिः ।
यदि वादिना प्रयुक्ते साधने प्रतिवादिना चासिद्धत्व उद्भाविते वादिना तत्सा-
धनं साध्यते, ततो भवति साधनम् । यदि तु परमार्थोपपत्त्यभिधानेन प्रति-
वादिना निराक्रियते ततस्तस्य दूषणं सिध्यति । तत्प्रमाणतस्सिद्धिरेवात्रो-
पयुज्यते नोभयाभ्युपगमः । द्वाभ्यां योऽसत्त्वतो ज्ञात इत्यपि प्रमाणसिद्ध्य-
भिप्रायेणोक्तम्, नाभ्युपगममात्रापेक्षया । यदि प्रमाणेन साध्यते बाध्यते
वा तत्र प्रायेणोभयसम्प्रतिपत्तिर्दृष्टेति । असत्त्वतो ज्ञातापेक्षयेतरच्छब्दः ।
यद्वादिना सत्त्वेन ज्ञातं भवति प्रतिवादिना च वैपरीत्येन, तद्वादिना साध्य-
मानं साधनं भवति । एतच्च जल्पन्याये स्थित्वोक्तम् । वादे तु द्वयोरपि
सम्प्रतिपत्तिर्भवत्येवेति । न चैवमन्यतरासिद्धिरदूषणम्, यावत्तु वादी
न साधनं साधयति, तावदन्यतरासिद्ध्या निगृह्यते, साधिते तु तस्मिन्
दूषणं परिहृतं भवतीति ॥ ८२½ ॥

दर्शितं तावदसिद्धैकदेशशब्दयोर्व्यावर्त्यं, ज्ञातसम्बन्धपदस्येदानीं
व्यावर्त्यं दर्शयति सन्देहेति श्लोकान्तेन । सन्देहविपरीतहेत्वोर्हि न सम्ब-
न्धो ज्ञातो भवति, न हि साधारणस्संशयहेतुः प्रमेयत्वं नित्यत्वेन ज्ञातसम्बन्ध-
मिति शक्यते वक्तुम्, घटादिष्वनित्यतयापि ज्ञातसम्बन्धत्वात् । नापि
कृतकत्वं नित्यतया, तेनैवानित्यतया सम्बन्धसंवित्तेः । अतस्तज्जातीयं रू-
पं न ज्ञातसम्बन्धमिति ज्ञातसम्बन्धपदेन व्युदस्यति । अत्र चा[illegible]पदप्र-
भृति प्रातिलोम्येन वार्तिककृता लक्षणग्रन्थे विशेषणोपादानफलमुक्तम्,

सन् साध्ये तदभावे च द्वाभ्यां व्यावृत्त एव च ॥ ८४ ॥
द्वौ विरुद्धार्थसम्बन्धौ यावेकत्रैकदेशिनि ।
प्रमेयानित्यतामूर्तिधर्माः साधारणा मताः ॥ ८५ ॥
नित्याप्रयत्नोत्थयत्नोत्थानित्येषु द्विरनित्यता ।

---

तत् कस्य हेतोः । प्रतीतिक्रमानुसारेण । प्रमाता हि प्रथमं पक्षं प्रत्येति, ततो हेतुमपेक्षते, ततो दृष्टान्तवचनम् अतोऽस्य पक्षनिराकरणार्थं प्रयुक्तमसाविकृष्टपक्षेन तावदुपवर्णितम् । ततो हेतुपदस्यैकदेशदर्शनादिति, ततो ज्ञातसम्बन्धस्येति दृष्टान्तवचनम् । दृष्टान्ते हि हेतोस्सम्बन्धो ज्ञायते । अत एव दृष्टान्तदोषा अपि साध्यहेतुविकलत्वादयोऽनेन निराक्रियन्ते । तद्वैकल्येऽपि स्वयं सम्बन्धो ज्ञातुं परस्मै प्रतिपादयितुं शक्यत इति । कियन्तः पुनस्संशयहेतवः, अत आह — त्रय इति ॥ ८३½ ॥

तानेव त्रीन् प्रकारान् दर्शयति — सन्निति । साध्यतदभावयोस्सन् साधारणोऽभिधीयते । यथा प्रमेयत्वं नित्यानित्यत्वयोः । द्वाभ्यां साध्यतदभावाभ्यां व्यावृत्तोऽसाधारणः क्षितेरेव गन्धवत्त्वम् । व्यावृत्तं हि तत् सकलसजातीयविजातीयद्रव्यान्तरगुणकर्मभ्यः । द्वौ विरुद्धार्थसम्बन्धाविति । यौ विरुद्धाव्यभिचारीति परैरभिहितौ, तौ ग्रन्थान्तरसेवोदाहार्याविति नेह व्याख्यायेते इति ॥ ८४½ ॥

तत्र साधारणं तावदुदाहरणैः प्रपञ्चयति — प्रमेयेति । एते त्रि धर्मास्साध्यतदभावयोस्साधारणा इत्यर्थः ॥ ८५ ॥

केषु पुनस्साध्येषु तेषां साधारण्यमत आह — नित्येति नित्येष्वन्तेन । कथं पुनस्त्रैरूप्ये यथासङ्ख्यमत आह — द्विरनित्यतेति । अनित्यता स्वस्थाने द्विः पठितव्या । अतो यथासङ्ख्योपपत्तिः । तदयमर्थः — यदा नित्यश्शब्दः प्रमेयत्वादिति प्रयुज्यते तदा प्रमेयत्वं साध्यतदभावयोर्दृष्टमिति साधारणत्वादनैकान्ताय प्रभवति । अतो नैकान्तिकमित्युच्यते । अत एव च संशयहेतुः । संशयो हि सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च भवति । यथा स्थाणुपुरुषयोरारोहपरिणाहसामान्यदर्शनाद् भेदक-



नित्ये भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् ॥ ८६ ॥
निश्चयैकाङ्गवैकल्यादेव संशयकारणम् ।

---

धर्मानवधारणाच्च विशेषस्मृत्यपेक्षः किंस्विदयं स्थाणुराहोस्वित् पुरुष इत्यनवधारणज्ञानात्मकस्संशयो जायते । एवं प्रमेयत्वमपि नित्यानित्ययोस्सामान्यं विदितवतस्तद्विशेषस्मरणापेक्षस्तयोरेवानिर्धारणात्मकः प्रत्ययस्संशयापरनामा जायत इति प्रमेयत्वं संशयहेतुः । अयं च कृत्स्नोभयव्यापी संशयहेतुः । तथाप्रयत्नोत्थश्शब्दः अनित्यत्वादित्ययमपि साधारण एव । अप्रयत्नोत्थेषु केषुचिद्विद्युदादिषु गतत्वात्प्रयत्नोत्थेषु च सर्वेषु घटादिषु वृत्तेः । तदयं सकलविपक्षव्यापी सपक्षैकदेशगत इति वेदितव्यम् । तथा प्रयत्नोत्थश्शब्दः अनित्यत्वादिति, प्रयत्नोत्थेषु सर्वेष्वेवानित्यता दृष्टा । तदभावेऽपि कचिन्मेघादौ दृष्टा, न व्योमादौ इति, सकलसपक्षव्यापी विपक्षैकदेशवर्ती चायं साधारण इत्यवसातव्यम् । उभयैकदेशगतस्तु यथा नित्यश्शब्दः अमूर्तत्वादिति । अमूर्तता हि न सर्वनित्यव्यापिनी व्योमादिषु भावादणुषु चाभावादनित्यमपि न सर्वं व्याप्नोति घटकुड्यादिष्वभावात् कर्मादिषु भावात् । सर्वत्र चात्र द्वयवृत्तित्वमेव हेतोस्संशये कारणमव्याप्त्यंशस्तु सन्नपि न कारणमित्यतन्त्रम् । अत एव साधारणस्य चतुर्धा विभागं वदन्ति ये तेषामसावनुपयोग्येव साधनदूषणयोरित्युपेक्षणीयम्, न हि साधनवचनकाले तथाविधं हेतुं परित्यजतो वादिनस्सपक्षविपक्षयोर्व्याप्त्यंशः कश्चिदुपयुज्यते । अव्याप्यापि हि मात्रया विपक्षे वर्तमानो हेतुस्त्याज्य एव । दूषणवादिनोऽपि विपक्षवृत्तिमात्रं वचनीयमिति किं तदवान्तरविशेषाश्रयणेन । वार्तिककारेणापि सर्वसाधारणेषु द्वयवृत्तित्वमेव संशयकारणमिति दर्शयितुमुदाहरणप्रपञ्चो दर्शितः, न पुनश्चातुर्विध्यमभिमतम् । यदाह —

"न ह्येकस्योपयोगोऽस्ति दूषणोद्भावनं प्रति ।
त्यज्यते साधने चैवं साधारण्याद् विशेषतः ॥ इति ८५½ ॥

प्रपञ्चितस्साधारणः, असाधारणमिदानीं संशयहेतुमुदाहरति — नित्ये भूरिति । गन्धो हि पृथिव्याः स्वासाधारणो गुणः, न तां विहाय नित्यमनित्यं वा भावान्तरमाश्रयतीत्यसाधारण इति गमित ।

सन्दिग्धहेतुता चैषां विपक्षापेक्षयोच्यते ॥ ८९ ॥
निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः ।
व्यवच्छेदान्वयौ लब्ध्वा निष्क्रियादावमूर्तिवत् ॥ ९० ॥

---

एव तच्छब्दवाच्यो भवेत् । न च तद्धेतुरसाधारण इति फणितमेव । अधार्मिकादिवद् विपरीतवचनो नञ्, एवं सति विपर्ययवाच्योऽनध्यवसायशब्दो भवेत्, न च विपरीतावग्रहोऽसाधारणेन जन्यत इति । यदि तु न मेऽस्मिन् वस्तुन्यध्यवसायोऽस्तीत्यध्यवसायाभावावधारणमेवानध्यवसायः, स तर्हि प्रमाणाभावेनैवाध्यवसायाभावोऽवगम्यते । तत्र हेतोर्न व्यापारः । अतो जिज्ञासामात्रहेतुरसाधारण इति समर्थनीयम् । भवति हि तद्दर्शिनः कीदृग्धर्मोऽयमितो धर्माद् भावो भवेदिति जिज्ञासा । यद्यपि चासौ सुखमपि दर्शनादपि कदाचिद् भवत्येव तथापि धर्मद्वारेणापि तावद् भवत्येवेति न तद्धेतुत्वमनुपपन्नम् । आह च—

तेनाज्ञानप्रसिद्धेभ्यो जिज्ञासानन्यगामिनः ।
सामान्यात्संशयो युक्तस्तया स प्रतिसाधनात् ॥ इति ।

वस्त्विहासाधारणस्य संशयहेतुत्वमुक्तं तत्परमतम् । ज्ञातसम्बन्धपदस्य हि व्यावर्तनीयमत्र दर्शयितुमभिप्रेतम्, तत् संशयहेतुत्वेऽप्यसाधारणस्य घटत एव । भवतु तावदयं यस्य कस्यचिद्धेतुः । सर्वथा ज्ञातसम्बन्धपदेन व्युदस्यत इति तात्पर्यम् । शाक्यास्तु संशयहेतुमसाधारणं मन्यन्ते, उदाहरन्ति च शब्दानित्यत्वे साध्ये श्रावणत्वम् । यथोक्तम् —

अनैकान्तिकमेवैनं शाक्याः प्रायेण मन्वते ।
उभयस्माद्विवृत्तत्वादुभयत्रानुवृत्तिवत् ॥

इति । इदं च वार्तिककृतैव प्रदेशान्तरे स्वयमुपन्यस्य यथोक्तदूषणैर्दूषितमेवेति ॥ ८८ ॥

किं पुनरुदाहृतानां स्वाभाविकमेव संशयहेतुत्वं नेत्याह— सन्दिग्धेति ॥ ८९ ॥

कारणमाह—निर्णयस्येति लब्ध्वान्तेन । क्व दृष्टमत आह — निष्क्रियेति । अमूर्तता हि नित्यत्वे साध्ये नित्यानित्यव्योमकर्मसाधारणी संशयहेतुरासीत्, सैव तु निष्क्रियत्वे साध्ये लब्धान्वयव्यतिरेका हेतुतां



क्षित्येकदेशासिद्धत्वे गन्धवत्त्वस्य हेतुता ।
पक्षाप्रत्यक्षता वायोररूपित्वेन साध्यते ॥ ९१ ॥
स्पर्शात् प्रत्यक्षता चासौ विरुद्धाव्यभिचारिता ।

---

प्रतिपद्यते । व्याप्तं ह्यमूर्तत्वं निष्क्रियत्वेन । न ह्यमूर्तं गगनमात्मा वा परिस्पन्दते । न चैवं तद्वतां रूपादीनाममूर्तत्वं दृष्टमिति ॥ ९० ॥

असाधारणस्य निर्णये हेतुत्वं दर्शयति—क्षित्येकदेशेति । गन्धविशेषदर्शिनो हि विदितव्याप्तेः क्षित्येकदेशासिद्धत्वे भवत्यानुमानिको निर्णय इति ॥ ९०½ ॥

द्वौ विरुद्धार्थसम्बन्धावेकस्मैकदेशिनि संशये हेतुरित्युक्तम् । तत्रोदाहरणमाह— यत्रेति । यत्र हि न साक्षात्कारिज्ञानविषयो वायुः अरूपत्वादित्येकस्साधयति । अपरोऽपि स्पर्शात् तद्विपर्ययम् । तत्रासौ विरुद्धाव्यभिचारिता भवतीति शाक्यैरभिहितम् । तत्र तुल्यबलोभयहेतुसन्निपातात् संशयः । द्वयोरपि साधनयोः प्रसिद्धावयवत्वाविशेषात् । अरूपं घटरूपिसमवेतमप्रत्यक्षमिति काणादा मन्यन्ते । तथा च वायुः । अतो न प्रत्यक्षः । कर्मस्वरूपमपि रूपैकार्थसमवायाच्चाक्षुषमाचक्षते । एवं स्पर्शोऽपि वायोः प्रसिद्ध एव । प्रसिद्धव्याप्तिकश्चापरोक्षत्वेन । अतस्तुल्यबलत्वम् । ततश्च संशयः, विरुद्धयोरेकत्रोपनिपातासम्भवात्, समुच्चयानुपपत्तेः, सिद्धे च वस्तुनि विकल्पासम्भवात् बाध्यबाधकभावस्यापि तुल्यबलत्वात् । अतोऽनवस्थयोभयस्मिन् परिप्लवमाने भवति संशयः । तावान्स्यात् । तस्य बलाबलविशेषे त्वनुमानविरोधो वर्णित एव । यथा सर्वज्ञोऽस्तीति बुद्धवचनं सम्यक् तदुक्तत्वात् क्षणभङ्गादिवाक्यवदित्येकेनोक्तेऽपरः प्रब्रवीति बुद्धोऽसर्वज्ञ इति मद्वचनं सम्यक् मदुक्तत्वात् यथा ज्योतिरुष्णमापो द्रवा इति । अत्र मदुक्तत्वमुभयोरपि सिद्धम् । बुद्धोक्तता तु न नः प्रसिद्धा, अतोऽप्रसिद्धाङ्गकत्वात् पूर्वं साधनं बलवता प्रसिद्धाङ्गकेन बाध्यते । यत्तु विरुद्धाव्यभिचारीति द्वयोरेकवचनान्तमभिधानं तन्नानुमन्यामहे । विरुद्धाव्यभिचारी संशये हेतुरिति शाक्या वदन्ति । न चैकस्य संशयहेतुत्वम् अन्यतरपरिच्छेदात् । न च समुदायाभिप्रायमेकवचनम् । तस्य विरुद्धत्वाव्यभिचारिपदानास्पदत्वात् । स ह्यंशाभ्यां व्यभिचार्येव । द्वौ तु विरुद्धाव्यभिचारिणाविति वक्तव्यम् । न त्वेकवचनेन । यदि प्रतिहेतु

**केचिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥ ९१ ॥**
**साधारणत्वमंशेन समस्तं त्वाहुरनन्वयम् ।**

विरुद्धधर्मैकैको न व्यभिचरतीति विरुद्धाव्यभिचारीत्युच्यते । तद्वस्तु । न त्वेकः संशये हेतुरित्युक्तम् । अत एव वार्त्तिककारेण द्वौ विरुद्धार्थसम्बन्धौ संशयहेतू इति द्विवचनान्तेनैव नाम्ना संशयहेतुभावो दर्शितः । इहापि विरुद्धाव्यभिचारितेत्येतावदेवोक्तम् । न तु विरुद्धाव्यभिचारी संशयहेतुरिति । तदत्र योग्यतयानयोर्विरुद्धाव्यभिचारितेति व्याख्येयम् । द्वौ विरुद्धाव्यभिचारिणाविति यावदिति ॥ ९१½ ॥

इमां च विरुद्धाव्यभिचारितां संशयहेतुं साधारणासाधारणाभ्यां जात्यन्तरमेके वर्णयन्ति । अपरे पुनस्समुदायस्यांशाभ्यां साधारणपक्षनिक्षेपम् । अन्ये तु समस्तमिदं मिलितमुभयं नैकत्राप्यनुगतमित्यनन्वयमसाधारणमेवाश्रिषत इत्याह— केचिदिति । अत्र च ग्रन्थान्तरे वार्त्तिककृता साधारण्य एवास्था दर्शिता । यदाह—

"साधारण्यान्न नैतस्य भेदः कश्चन विद्यते ।
अंशाभ्यां समुदायो हि साधारणपदे स्थितः ॥"

इति । न च वाच्यं द्वयस्यानन्वयादसाधारण एवायमिति । यदि ह्येकेन द्वयं प्रयुज्येत ततो भवेदप्येवं, प्रत्येकमन्वितौ दृष्टौ द्वाभ्यां प्रयुक्तौ नानन्विताविति शक्यते वक्तुम् । अपि चासाधारणत्वे संशयहेतुभावो नोपपद्येत । तस्य निराकृतपूर्वत्वात् । अतस्साधारण एवायमिति । वयं तु जात्यन्तरमेव साधीयो मन्यामहे । यथा हि न द्वयमेकेन प्रयुक्तमिति नासाधारणत्वम् । एवं साधारणत्वमपि न स्यादेव । किं खल्वत्र साधारणम् । एकैकस्यैकैकेन व्याप्तस्यैकैकेन प्रयोगात्, अंशतस्साधारणस्य च समुदायस्याप्रयोगात् । अत एव चात्र साधारणाद् भेदेन प्रतिहेतु विरुद्धयोस्संशयहेतुत्वमुक्तम् । इतरथा तेनैव गतत्वान्न पृथगुपादीयेत । संशयजननप्रकारोऽपि चात्र भिन्न एव । साधारणो ह्युभयदृष्टस्तु प्रतीतिमादधानस्संशयहेतुरिमौ त्वेकैकस्येनोभयमुपस्थापयन्तौ संशयहेतू इति वार्त्तिककारेणापि साधारणपदे स्थित इत्युक्तम् । न ु साधारण एवेति ॥ ९२½ ॥



**प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥ ९३ ॥**
**तत्पराजयतः कार्यो निर्णयो बाधवर्जनात् ।**
**कश्चित् संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥ ९४ ॥**

कथं पुनरेवंजातीयके विषये निर्णयः, अत आह —प्रतिज्ञेति निर्णयान्तेन । पक्षबाधोक्तैः प्रत्यक्षादिभिः प्रमाणैर्यस्य साधनवाक्यस्य प्रतिज्ञा बाध्यते तत्पराजयेनेतरस्य निर्णयः कार्यः । यथैहैव तावत् उदाहरणे त्वगिन्द्रियव्यापारेण वायावपरोक्षमनुभूयमाने तेनैवानुभवेन परोक्षतापक्षो बाध्यते । न हि नस्त्वगिन्द्रियमुपस्तोयप्रत्यक्षाद्वायुप्रत्यक्षं भिद्यते । न हीहाधिष्ठानं स्पर्शमात्रमनुभूयते । अपि तु तदधिकरणं द्रव्यमपि । न हि प्रबलेन मरुताभिहन्यमानस्य जलं वा दिलिप्यतस्संविद् भिद्यते । अतोऽक्षसम्बन्धफलानुसारात् प्रत्यक्षो वायुरिति निश्चीयते । क्वचिदागमेन विषयापहारो भवति । यथा शुचि नरशिरःकपालं, प्राण्यङ्गत्वात्, शङ्खशुक्तिशकलवदिति पाशुपतेनोक्तेऽन्योऽशुचीति साधयति, प्राण्युद्भूतत्वादुच्चारादिवदिति । तत्र पूर्वप्रतिज्ञाया आगमेन विषयापहारादुत्तरार्थनिर्णयो भवति । शुचीतरविवेके ह्यागम एव शरणम् । तस्मिन् विनिषेधति न शुचित्वानुमानमात्मानं लभते । स्मरन्ति हि—

"नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत् ।"

इति । 'रुद्रो हि महाव्रतं चचार स एतच्छवशीर्षमुपदधार' इत्यर्थवादमात्रं न शवशिरोधारणविधिः । अत्र च प्रत्यक्षादीन्येव यथास्वमर्थं साधयन्तीति साधनपदेनोच्यन्त इति । कथं पुनः प्रत्यक्षादीन्येव प्रतिज्ञाबाधमुत्सहन्ते । तेष्वपि सामान्यतो दर्शनेन बाधस्य शङ्क्यमानत्वादत आह — बाधवर्जनादिति । न तावत् तेषु बाधो दृश्यते, कदाचिद् बाधसम्भावना तु न तेषां प्रामाण्यमुत्सारयतीति ॥ ९३½ ॥

अत्र भिक्षुणा 'पक्षधर्मस्तदंशेन व्याप्तो हेतुरि'त्येकवचनेन विवक्षितैकसङ्ख्य एक एव हेतुरिति दर्शितम् । अत एव विरुद्धाव्यभिचारिणोर्न हेतुत्वमनेकत्वात् तयोरिति । न चैतत् घटते । न हि प्रतिहेतु विरुद्धयो-

सङ्घाते निर्णयस्ताभ्यामूर्ध्वताकाकवत्त्ववत् ।
प्रत्येकं संहतौ वापि गमकावविरोधिनौ ॥ ९५ ॥

तस्माद्भिन्नौ विरुद्धार्थौ हेतू यात्र निदर्शितौ ।
षोढा विरुद्धतामाहुश्चतुर्धा चैकधापि वा ॥ ९६ ॥

---

त्वनेकत्वं संशयहेतुत्वे हेतुः, अपि तर्हि परस्परविरुद्धार्थोपस्थापकत्वमेव । विरुद्धौ हि द्वाभ्यां द्वावर्थावेकत्रोपस्थापिताविति तत्र संशेरते ; न तु हेत्वनेकत्वात् । संशयहेत्वोरपि प्रत्येकमवगतयोरुभयसमावेशादेव क्वचिन्निर्णयो दृष्टः । यथा-ऊर्ध्वताकाकवत्त्वयोः । केवला ह्यूर्ध्वता स्थाणुपुरुषसाधारणी नान्यतरनिर्णयाय प्रभवति । काकनिलयनसहकृता तु सैव स्थाणुरयमिति निश्चाययति । तदेकैकस्यैव संशयहेतुत्वं द्वाभ्यामेव तु निर्णय इत्यप्रयोजकं संशयहेतुत्वे द्वित्वं, विरुद्धानेकसाध्यत्वमेव संशयहेतुः । यथा खल्वेक एव साधारणस्सपक्षविपक्षयोर्वर्तमानस्संशयहेतुर्भवति । एवं विरुद्धार्थस्यापि हेतुद्वयस्यांशाभ्यामुभयवृत्तिरेव संशये कारणमिति न तद्द्वित्वेन हेतुत्वनिराकरणं युक्तमित्याह—क्वचिदिति । ननु युक्तं तावदूर्ध्वतया स्थाणुपुरुषसन्देहो भवतीति, काकवत्तामात्रेण न संशयो दृष्टपूर्वः । सत्यम् । यस्तु काकवत्तामात्रेण स्थाणुं सिषाधयिषति तस्यासौ केवला संशयहेतुः, ऊर्ध्वतासनाथा तु निर्णायिकेत्येतावदेव विवक्षितमित्यदोष इति । अपि च अविरोधिनोः प्रत्येकं संहतयोरपि क्वचिदर्थे साध्ये हेतुभावो दृश्यते । यथैकस्मिन्नेव शाब्दस्य ज्ञानस्यानुमानत्वेऽन्वयव्यतिरेकजत्वप्रत्यक्षान्यप्रमाणत्वयोः, शक्यते हि ताभ्यामेकैकश्येन समस्ताभ्यां चानुमानत्वं साधयितुम् । द्वित्वे च हेत्वाभासत्वकारणे नैकस्मिन् साध्येऽनेकहेतवः प्रयुज्येरन् । प्रयोक्तारस्त्वेकमेव साध्यं क्रियान्यदितश्चेति नानासाधनैस्साधयन्तो दृश्यन्ते । तस्माद् विरोधनिबन्धन एव संशयः, न तु नानात्वनिबन्धन इत्यभिप्रायेणाह — प्रत्येकमिति । पूर्वं तु प्रत्येकं संशयहेत्वोरेव मिलितयोर्निर्णयहेतुत्वमुक्तम् । अत्र तु प्रत्येकं गमकावपि संहतौ च गमकाविति प्रतिपादितमिति ॥ ९५ ॥

तस्माद् विरुद्धार्थावेव भिन्नौ संशयहेतुत्वेन दर्शनीयौ । यथास्माभिरुक्तं न तु भिन्नतामात्रेणेत्याह — तस्मादिति । व्याख्यातृभिःप्रकारो-



श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना ।
नित्यत्वे कृतकत्वस्य धर्मबाधाद् विरुद्धता ॥ ९७ ॥

बाधो धर्मविशेषस्य यदा त्वेवं विशिष्यते ।
अर्थवच्छब्दरूपं स्यात् प्राक् सम्बन्धावधारणात् ॥

---

ऽपि संशयहेतुः विपरीतप्रकारान् प्रतिजानाति — षोढा विरुद्धतामाहुरिति । धर्मधर्मिस्वरूपस्वविशेषोभयस्वरूपस्वविशेषैः षट्प्रकारां विरुद्धतामेके ब्रुवत इत्यर्थः । अन्ये तूभयविशेषयोः प्रत्येकपक्षानतिरेकात् चातुर्विध्यं प्रतिपन्ना इत्याह — चतुर्धा चेति । वयं तु इष्टविघातमात्रेणैकमेव प्रकारं संगिरामहे इत्याह — एकधापि चेति । पूर्वोक्तपक्षद्वयनिवृत्तावपि वाशब्दः । अपि वा शेषभाजां स्यादिति पक्षबाध एव विरुद्धत्वे कारणमित्यन्तरभेदोपन्यासेनेति । त्रिष्वपि च प्रकारेषु श्रुत्यर्थोपात्तस्य प्रतिज्ञार्थस्य बाधायां विरुद्धतामाहुरित्याह — श्रुत्यर्थोक्तस्येति । धर्मधर्म्युभयस्वरूपं श्रुत्युक्तं, तद्विशेषास्तु प्रायेणार्थोक्ताः । ते च स्वरूपस्वविशेषाः प्रतिज्ञार्थशब्देनोपादीयन्ते । सर्वे हि ते वक्तुरभिप्रेताः । न तु धर्मादिविशेषास्साक्षात् प्रतिज्ञायामन्तर्गताः । तदस्मिन् प्रतिज्ञार्थे हेतुना बाध्यमाने हेतोर्विरुद्धता भवतीति । तत्पुनरिदं विप्रतिषिद्धमिव मन्यामहे । कथं हि प्रतिज्ञार्थे हेतुना बाध्यमाने हेतुर्विरुद्धो भवति । स हि प्रतिज्ञार्थं विरुणद्धीति विरोद्धेति वक्तुमुचितः, बाधक इति वा । न चायमेव प्रतिज्ञार्थेन बाध्यते यद्विरुद्धो भवेत् प्रसिद्धत्वादस्य । प्रसिद्धं हि घटस्य कृतकत्वं; न तदप्रसिद्धया नित्यतया बाधितुं शक्यम् । अतो बाधक इत्येवायं वक्तव्यः । वार्तिककृता तु परप्रसिद्धिमात्रेण विरुद्ध इत्युक्तमिति वेदितव्यमिति । तत्र धर्मस्वरूपबाधेन तावद् विरुद्धतामुदाहरति — नित्यत्वे इति ॥ ९७ ॥

धर्मविशेषबाधस्त्वेवं प्रयुक्ते भवतीत्याह — बाध इति । तमेव प्रयोगं दर्शयति — अर्थवदिति पादत्रयेण । स्वरूपाभिधानवादिनो ह्याहुः — गौरयमिति शब्दाकारविशिष्टोऽर्थोऽवगम्यते । न च विशेषणमनभिधाय विशिष्टोऽभिधातुं शक्यत इति स्वरूपमेव तावदादौ शब्दो-

विभक्तिमत्त्वात्पश्चाद्वत् स्वरूपेणेति चाश्रिते ।
अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते ॥ ९९ ॥

तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत् ।
इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते ॥ १०० ॥
समवा(यं ? यो) यथेहायं घट इत्यादिसङ्गतिः ।

---

ऽभिधत्ते ततो विशिष्टम् । अपि चार्थशब्दो व्यभिचरति, अज्ञातसम्बन्धस्य तदनवगतेः । स्वरूपं तु न कदाचिद् व्यभिचरति सम्बन्धावधारणात्प्रागपि तदवगमात्, अव्यभिचारी च शब्दार्थ इति युक्तम् । अतः स्वरूपं तावदवश्याभिधेयं शब्दानां, तदभिधानोत्तरकालं तु विशिष्टाभिधानमपि भवतु नामेति । एवं प्रसाध्यान्ते प्रयोगमाहुः — शब्दस्वरूपं सम्बन्धावधारणात् प्रागर्थवद् विभक्तिसम्बन्धात्, अगृहीतसम्बन्धोऽपि हि स्वादिविभक्तियुक्तान् शब्दानवगच्छति । यदा च विभक्तियोगः तदार्थवत्त्वं दृष्टं यथा सम्बन्धग्रहणात् पश्चादिति । कथं पुनरेवं प्रयुज्यमाने धर्मविशेषबाधो भवत्यत आह—स्वरूपेणेति चाश्रित इति । यदा हि स्वरूपेणार्थेनार्थवत्त्वं प्रथममाश्रित्यार्थवत्तामात्रविशिष्टं साध्यते, तदार्थादिदमवगम्यते— स्वरूपार्थवत्त्वमस्य सिषाधयिषितमिति । एवं च भवत्यर्थाक्षिप्तस्य धर्मविशेषस्य बाध इति । कथं पुनस्स्वरूपेणेति चाश्रिते धर्मविशेषो बाध्यते । अत आह—अस्वरूपेति । विभक्तिमत्त्वं हि स्वरूपातिरेकेणार्थान्तरेणार्थवत्त्वमविनाभावबलेन शब्दस्यावगमयति, सम्बन्धग्रहणात्पश्चादर्थान्तरस्य दर्शनात् । अतो व्याप्तिबलेन तदेव विभक्तिमत्तया साध्यते । अतोऽर्थवत्ताया विशेषं स्वस्वरूपार्थवत्त्वं हेतुरयं विरुणद्धीति भवति धर्मविशेषबाध इति ॥ ९९½ ॥

धर्मिस्वरूपबाधोदाहरणमाह — इहप्रत्ययेति । यदा हि समवायं धर्मिणं कृत्वा तस्य द्रव्यादिव्यतिरेकस्साध्यते, इहप्रत्ययहेतुत्वं च हेतुरुच्यते इहायं घट इति, संयोगो दृष्टान्तः, तदा धर्मिस्वरूपबाध इत्यभिप्रायः ॥ १००- ॥



अत्राप्यसमवायत्वं संयोगस्यैव सिध्यति ॥ १०१ ॥
तेन धर्मिस्वरूपस्य वैपरीत्याद् विरुद्धता ।
यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥ १०२ ॥
तत्र संयोगवद्भेदात् स्याद्विशेषविरुद्धता ।
नित्यश्चात्मास्तिता कैश्चिद् यदा सौत्रान्तिकं प्रति ॥
साध्यतेऽवयवाभावाद् व्योमवद् द्वयबाधनम् ।
तदोभयविशेषस्य बाधोऽयं साध्यते यदा ॥ १०४ ॥
पारार्थ्यं चक्षुरादीनां सङ्घातत्वाच्छयनादिवत् ।
शयने सङ्घपारार्थ्यं मौलिकत्वात्तहेतुके ॥ १०५ ॥

---

कथं पुनरत्रोदाहरणे धर्मिस्वरूपबाधः, अत आह—अत्रापीति । अत्राप्युदाहरणे धर्मिस्वरूपस्य समवायात्मनो वैपरीत्यापादनाद्धेतोर्विरुद्धता भवति । इहप्रत्ययहेतुत्वं ह्यसमवायात्मन एव दृष्टमिति तादूप्यं विरुन्ध्यादिति धर्मिस्वरूपबाध इति ॥ १०१½ ॥

अस्मिन्नेव च धर्मिविशेषबाधोऽपि दर्शयितव्य इत्याह— यच्चेति । समवायो हि सत्तासामान्यवदेकरूप इति काणादा मन्यन्ते । सोऽप्यस्य विशेषः संयोगवद्भेदापत्तेर्बाध्यत इति भवति धर्मिविशेषविरुद्धो हेतुरिति ॥ १०२½ ॥

उभयस्वरूपबाधायामुदाहरणमाह — नित्यश्चात्मास्तितेति । यदा कश्चित् सौत्रान्तिकं प्रत्येवं साधयति — आत्मा नित्यः निरवयवत्वात् व्योमवदिति, तदा धर्मधर्मिद्वयस्य बाधनं भवति । सौत्रान्तिकस्य ह्यवयवाभावो व्योम्न्यभावेनैव सम्बद्धोऽभिमत इत्यात्मनोऽपि तद्वदभावं गमयेत्, आवरणाभावमात्रं हि नभः, न पुनस्तत्त्वान्तरमिति बौद्धा मन्यन्ते । अतोऽनवयवत्वादात्मनः स्वरूपस्य तद्धर्मस्य च नित्यत्वस्य बाधादुभयबाध इति ॥ १०३½ ॥

उभयविशेषबाधस्त्वेवं साध्यमाने भवतीत्याह— तदेति । यदा हि परार्थाश्चक्षुरादयस्सङ्घातत्वात् शयनादिवदिति साध्यते, तदोभयविशेषबाध इत्यर्थः । कथं पुनरत्रोभयविशेषबाधः, अत आह — शयन इति । शयनीये

आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् ।
असंहतपरार्थत्वे *इष्टे संहततापि च ॥ १०६ ॥
अनाहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ।

हि खट्वादौ महाभूतसंहतशरीरपारार्थ्येन संघातत्वादिति हेतुर्व्याप्तो दृष्ट इति संहतपारार्थ्यमेव साधयेत् । आत्मानं च प्रति पारार्थ्यं साधयितुमभिमतम्, तन्न सिध्येत् । सोऽयं तावत् पारार्थ्यस्य धर्मस्य यो विशेषोऽभिमत आत्मपारार्थ्यं स तावद् बाध्यते । चक्षुरादेरपि धर्मिणो यो विशेष आहङ्कारिकत्वं नाम सोऽप्यनेनैव हेतुना बाध्यते । संहतात्मकत्वं हि शयनादावनाहङ्कारिकत्वेन व्याप्तं दृष्टम्, भौतिका हि ते, अतस्तन्निदर्शनेन चक्षुरादयोऽपि भौतिका भवेयुः । आहङ्कारिकाणीन्द्रियाणीति कापिलास्सङ्गिरन्ते, तेषां चायं प्रयोगः । तदयमर्थः — संहतपारार्थ्यभौतिकत्वाभ्यां व्याप्तो हेतुर्यस्मिन् शयने तस्मादात्मपारार्थ्यमसिद्धमिति धर्मविशेषबाधनं तावद् भवति । धर्मिविशेषबाधोऽपि भौतिकत्वापत्त्या सूचितोऽनन्तरमेव विवरिष्यत इति न केवलमात्मपारार्थ्यं न सिध्यति, असंहतरूपात्मपारार्थ्ये चेष्टे व्याप्तिबलेनात्मनोऽपि संहतता प्राप्नोतीत्याह— असंहतेति । अनेन चानिष्टान्तरापादितेति वेदितव्यम् । एतदुक्तं भवति । नानेन हेतुनासंहतरूपात्मार्थता सिध्यति । प्रत्युत संहततैवात्मनो भवेदिति ॥ १०६ ॥

धर्मिविशेषबाधं विवृणोति — अनाहङ्कारिकत्वमिति । व्याख्यातचरं चेदम् ॥ १०६½ ॥

एवं तावद् ज्ञातसम्बन्धपदव्यावर्तनीयो विरुद्धः प्रपञ्चितः । इदानीं तद्व्यावर्त्या एव दृष्टान्ताभासा दर्शयितव्याः । तैर्हि नानुमानाङ्गसम्बन्धो ज्ञापयितुं शक्यते । अतस्तेऽपि ज्ञातसम्बन्धपदेनैव व्यावर्त्यन्ते । इदं चास्माभिः प्रागेवोक्तम् । अन्यत्राप्याह —

"ज्ञातसम्बन्धवाचा च भयोऽनानियतादयः ।
हेतुदृष्टान्तयोर्दोषा भाष्यकारेण वारिताः ॥"

* 'दृष्ट' इति व्याख्याभिमतः पाठः,



गमकस्यैकदेशस्य व्याप्तिर्गम्येति भाषितुम् ॥ १०७ ॥
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥ १०८ ॥
उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ॥ १०९ ॥
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।

इति । अतस्तन्निराकरणार्थं दृष्टान्तवचनमेव तावदवतारयति — गमकस्येति । व्याप्तिप्रदर्शनाय द्विविधो दृष्टान्तस्तावद् साधनवाक्ये दर्शयितव्यः । साध्यः पक्षः तत्साधर्म्यवैधर्म्याभ्यां यो दृष्टान्तः स प्रतिपाद्यत इत्यर्थः ॥ १०७½ ॥

तत्र साधर्म्यदृष्टान्तप्रकारमाह — तत्रेति । अस्यार्थः — उदाहरणसाधर्म्याल्लिङ्गस्य प्रसाधकत्ववचनं हेतुः । यदाहुः —

"उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ।"

इति । साध्यस्य प्रज्ञापनवचनमिति यावत् । तस्य चार्थो लिङ्गमेव । तदुद्दिश्य साध्योपादानं साधर्म्यदृष्टान्त इष्यते । यो यो धूमवान् स सोऽग्निमानिति यावदिति । किमेवमुपादीयमाने सिध्यत्यत आह— उद्देश्य इति । उक्तं व्याप्तिप्रदर्शनाय दृष्टान्तवचनमिति । एवं चोपादीयमाने उद्देश्यो धूमादिर्व्याप्यतया कथितो भवति, इतरश्चोपादेयोऽग्न्यादिर्व्यापकतयेति व्याप्त्यानुगुण्यात् सफलमेवमुपादानमित्युद्देश्योपादेययोर्व्याप्यव्यापकत्वं भवतीत्युक्तम् ॥ १०८½ ॥

कीदृशं तु तयोस्स्वरूपमत आह — यद्वृत्तेति । यद्वृत्ततद्वृत्ताभ्यां यत्तदोर्निष्पन्नानां यो य इत्यादिशब्दानामुपादानम्, तदयमर्थो भवति । यद्यद् यद्वृत्तेन संयुक्तं प्रथमं प्रयुज्यते प्रधानं च तदुद्देश्यं, तत्तद्वृत्तयुक्तं च पश्चात् प्रयुज्यमानं स सोऽग्निमानेवेति चैवकारेण युक्तं तदुपादेयम् । सर्वेष्वेव च ग्रहणीयादिसम्मार्गावघातादिषूद्देश्योपादेयेष्वयमेव विवेक इति वेदितव्यमिति ॥ १०९½ ॥

यदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥
साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।
तन्त्राज्ञानाद् यदा वक्ता सहभावविवक्षया ॥ १११ ॥
विपर्ययेण वा हेतौ न व्याप्तत्वं विवक्षति ।
विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद् यदि ॥ ११२ ॥
घटे कृतकनाशित्वे नाशि व्याप्तं कृतेन वा ।
न तदेष्टस्य हेतुत्वं स्यादनिष्टस्य चैव तत् ॥ ११३ ॥

किं पुनरेवं प्रयोगनियमे प्रयोजनम् , विवक्षापरतन्त्रा हि शब्दाः, ते यथा तथा वा प्रयुक्ता यथाभिप्रायं वर्तिष्यन्त एव । अत आह — यदतीति । न वक्त्रभिप्रायपरतन्त्राः शब्दाः, स्वाभाविक्यैव तु शक्त्या केचिदेव कांचिदेवार्थं वर्तन्ते, अतो न विवक्षानुसारेणेष्टसिद्धिर्भवतीति, वाच्य एव दृष्टान्तवचनविन्यासप्रकार इति ॥ ११० ॥

यदि तर्हि स्वतन्त्रास्शब्दाः अतथास्थितेऽप्यर्थे शब्दानुसारिणीष्टसिद्धिर्भवेदत आह — साध्यहेतुत्वमिति । अयमभिप्रायः — नार्थशक्तिरशब्दशक्तिमनुरुध्य प्रवर्तते, न च शब्दशक्तिरर्थशाकिम् , अतो न यथा वक्त्रभिप्रेतार्थानुसारिणी शब्दशक्तिः, एवं न शब्दानुसारिण्यर्थव्यवस्थेति, अर्थादीनां कृतकत्वानित्यत्वादीनां व्याप्तिशक्त्यनुरोधादेव साध्यहेतुभावो भवति न शब्दानुरोधादिति ॥ ११०२ ॥

वक्त्रनपेक्षया स्वशक्त्यैव शब्देऽर्थमाचक्षाणे यत्तावदापद्यते तद् दर्शयति —तन्त्राज्ञानादिति सार्धद्वयेन । यदा हि दृष्टान्तं वक्तुमनभिज्ञो वक्ता साध्यहेत्वोस्सहभावमात्रं विवक्षति । यथा—शब्दोऽनित्यः कृतकत्वादिति प्रयोगे, यथा घटे कृतकत्वनाशित्वे स्त इति । विपरीतावग्रहेण वा न हेतोर्व्याप्यतां विवक्षति । सत्यामपि विवक्षायां कुतश्चिद् भ्रमनिमित्तात् न व्याप्तियोग्यं शब्दं वदति । सहभावमात्रमेव तु पूर्ववद् वदेत् , विपरीतं वा भ्रान्तः यथा नाशिता कृतकत्वेन व्याप्तेति, तदा तावन्न केवलमिष्टं न सिध्यति अनिष्टमेव तु व्याप्तिविपर्ययादापद्यते । इष्टस्य



तस्माद् व्याप्यत्वरूपेण वाच्यो हेतुत्वसम्मतः ।
यदा सम्यक् प्रयुक्तेऽपि वाक्येऽर्थो न तथा भवेत् ॥
साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः ।
नित्यो ध्वनिरमूर्तत्वात् कर्मवत् परमाणुवत् ॥ ११५ ॥
घटवद्व्योमवच्चापि तदसद्वादिनं प्रति ।
धर्म्यसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् ॥ ११६ ॥
तत्सद्भावेऽपि च व्योम्नि ह्यप्रयुक्तेऽपि कीर्तिते ।
कर्माद्यालोचनाद् व्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥

कृतकत्वस्य हेतुत्वं न स्यात् । अनिष्टस्यैव तु नाशित्वस्य भवेदित्येवंजातीयकानिष्टप्रयोगनिवारणाय युक्तो दृष्टान्तप्रयोगनियम इति । एतदेवोपसंहरति — तस्मादिति । हेतुत्वसम्मतः कृतकत्वादिर्व्याप्यत्वरूपेण वाच्य इत्यर्थः ॥ ११४ ॥

अर्थानां शब्दतन्त्रत्वे यद् भवति तद् दर्शयति —यदेतिपादरहितद्वयेन । अस्यार्थः —यदा हि व्याप्तिशक्त्यनुसारेणैवार्थानां साध्यहेतुत्वं तदा यद्यपि वक्त्रा न सहभावमात्रं दर्शितं, किन्तु सम्यगेव दृष्टान्तवचनम् , अर्थास्तु न तदनुरूपव्याप्यव्यापकभावेनावस्थिता इति दृष्टान्ताभासता भवेदिति वक्ष्यमाणेन सम्बन्ध इति । यथा— नित्यो ध्वनिरमूर्तत्वादिति प्रयोगे कर्मवत् परमाणुवद् घटवद् व्योमवदिति दृष्टान्तेषु यथासङ्ख्यं परमार्थतस्साध्यहेतूभयव्याप्तिशून्यतया । कर्म खल्वनित्यमिति तत् साध्यभूतया नित्यतया शून्यं, हेतुस्त्वमूर्तत्वादिति तत्र विद्यत एव । परमाणवस्तु मूर्ता इति तेषु हेतुशून्यता , साध्यं तु नित्यत्वं तेषु विद्यत एव । घटे तु न साध्यं नित्यत्वं नाप्यमूर्तत्वं हेतुरित्युभयशून्यता । व्योम्नि तु दृष्टान्ते व्याप्तिशून्यतामुत्तरत्र स्वयमेव विवरिष्यति । अत्रैव च व्योमवदिति दृष्टान्ते तदसद्वादिनं सौत्रान्तिकं प्रति प्रयुज्यमाने धर्म्यसिद्धेरपि दृष्टान्ताभासता भवतीत्याह—तदसद्वादिनमिति ॥ ११६ ॥

व्याप्तिशून्यतां विवृणोति — तत्सद्भावेऽपीति । यद्यपि च

व्याप्त्या साधर्म्ये उक्ते च न वैधर्म्यमपेक्ष्यते ।
सहभावित्वदृष्ट्या तु यदा व्याप्तिं न लक्षयेत् ॥ ११८ ॥
परस्साधर्म्यदृष्टान्तात् तं वा नापेक्षते यदा ।
वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा ॥ ११९ ॥
विपरीतान्वयं वापि तत्समाधिस्तथा तदा ।

व्योम्नः सद्भावो भवेत्, तत्र हेतुसाध्यद्वययुक्तं नित्यत्वादमूर्तत्वाच्च । तथापि कर्मादिष्वमूर्तेषु अनित्येष्वालोच्यमानेषु हेतोर्व्याप्तिर्नास्तीति ईदृशस्यापि दृष्टान्तस्य वर्जनमेव । अयमपि न साध्यसिद्धये समर्थो यत इति ॥ ११७ ॥

व्याख्यातः साभासस्साधर्म्यदृष्टान्तः । वैधर्म्यदृष्टान्तमतः परं व्याख्यास्यति । तत्रैतदेव तावत् प्रथमं वक्तव्यम् । किं सर्वदैव साधर्म्यवद् वैधर्म्यवचनं कार्यं न वेति । तत्र तावद् व्यतिरेकप्रधानवादिनस्सर्वदा वाच्यमिति ये वदन्ति तान् प्रत्याह — व्याप्त्या साधर्म्ये उक्त इति । एवं हि मन्यते — व्याप्तिप्रज्ञापनाय हि दृष्टान्तवचनम्, सा चेत् साधर्म्यवचनेन ज्ञापिता किं वैधर्म्यवचनेन । साधर्म्यं चावश्यमेव वचनीयमन्वयप्रज्ञापनाय, तत्प्रधानत्वादनुमानस्य । व्यतिरेकस्यापि तन्मुखेनैव सिद्धेः । इतरथा दुरधिगमत्वात् । अतो यदि व्याप्त्या सहितं साधर्म्यमुक्तम्, अलं वैधर्म्यवचनेनेति । कदा तर्हि वैधर्म्यं वाच्यमत आह — सहभावित्वदृष्ट्येति पादत्रयेण । यदा हि वक्त्रा सम्यगेव दृष्टान्त उक्ते परः श्रोता जानाति — यथा हेतुसाध्ययोस्साहित्यमात्रमनेनोक्तं न व्याप्तिरिति, तदा साध्याभावे हेत्वभावं ज्ञापयितुं 'वैधर्म्येणेष्टसाधन'मिति वक्ष्यमाणेन सम्बन्ध इति । यदा खल्वभ्यस्तवैधर्म्यस्तमेवापेक्षते न साधर्म्यदृष्टान्तं तदा च वैधर्म्येणेष्टसाधनमित्याह — तं वा नापेक्षते यदेति । यदा वा वक्ता सुशिक्षितवैधर्म्यस्साधर्म्यं वक्तुमजानानस्तेन साधर्म्यदृष्टान्तेन सहभावमात्रमेव शुद्धं व्याप्तिहीनं कथयति, तदापि पर्यनुयुक्तेन तेनैव वैधर्म्येणेष्टसाधनं कार्यमित्याह — वक्ता वेति ॥ ११९ ॥

यदा वा भ्रान्तो विपरीतमन्वयं दर्शयति, तदापि तत्समाधानेच्छया पूर्वविपरीतज्ञानोपमर्दनेन वैधर्म्येणेष्टसाधनमित्याह — विपरी-



पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥ १२० ॥
साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥ १२१ ॥
तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ।
धूमभावेऽग्निभावेन व्याप्तेऽनग्निस्ततश्च्युतः ॥ १२२ ॥
अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ।
तथानग्न्यवधूमेन व्याप्ते धूमस्ततश्च्युतः ॥ १२३ ॥
अन्यत्रानवकाशत्वाद् व्याप्यते ध्रुवमग्निना ।

तान्वयमिति । नन्वन्वयवैपरीत्ये स एव यथावत् प्रतिपाद्यतां किं वैधर्म्यवचनेन । सत्यमेवमपीष्टं सिध्यत्येव, किन्तु भ्रान्तैरिदमस्माभिरुक्तं साध्याभावे हेत्वभावो विवक्षित इति वैधर्म्येणापि तावदिष्टसाधनं भवत्येवेति । यत्तु तत्पूर्वं साहित्यमात्रमुक्तं तद्वैधर्म्ये एवोपयुज्यते तस्यैवेष्टं साधयतोऽनुग्रहे वर्तते इत्याह — साहित्यमात्रमिति ॥ १२०½ ॥

एवं तावद् वैधर्म्यवचनस्यावसरो दर्शितः, तद्वचनप्रकारमिदानीं दर्शयति — व्याप्यव्यापकभावो हीति ॥ १२१½ ॥

वैपरीत्ये कारणमाह — धूमभाव इति । यदा हि धूमभावोऽग्निभावेन व्याप्तो भवति तदानग्निरन्यभावस्ततो धूमात् प्रच्युतस्सन्नधूमे धूमाभाव एव भवतीत्येवं तावद् व्याप्तो भवति । यो हि यस्मिन् सति भवति असति च न भवति स तन्नियतस्तद्व्याप्त इत्युच्यते । यथा धूमोऽग्नावेव भवन्नग्निना व्याप्त इति सिद्धोऽभावयोर्व्याप्तिविपर्यय इति ॥ १२२½ ॥

यत एव चाभावयोरीदृशो व्याप्यव्यापकभावः अत एव भावयोरभिमतव्याप्तिसिद्धिरित्याह — तथानग्न्येति । अनग्न्यावन्यभावे धूमाभावेन व्याप्ते धूमस्तत्र विरोधिव्याप्तेरलब्धावकाशोऽग्नावेव भवतीत्येवं तद्व्याप्यता तस्य सिध्यति । तथेति । यथा भावव्याप्त्यपेक्षयाभावव्याप्तिः एवमभावव्याप्त्यपेक्षया भावव्याप्तिरित्यर्थः । न चैवमितरेतराश्रयता, बीजाङ्कुरवदनादितयोपपत्तेरिति ॥ १२३½ ॥

व्यापकौ तु यदोच्येते भावाभावौ तदा ततः ॥ १२४ ॥
नैव व्याप्याद्विपक्षस्य प्रच्युतिः कथिता भवेत् ।
तस्माद् धूमेन साध्यत्वमग्नेः प्रार्थ्यते यदा ॥ १२५ ॥
तदानग्निरधूमेन व्याप्तो वाच्यो न चान्यथा ।
अनग्न्यधूमसाहित्ये व्याप्तेर्वापि विपर्यये ॥ १२६ ॥
न प्रस्तुतोपकारः स्यादन्यद्वापि प्रसाध्यते ।
यत्राप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥ १२७ ॥

---

किं पुनरभावयोर्व्याप्तिविपर्ययाश्रयणे प्रयोजनमत आह — व्यापकौ त्विति । यदा हि य एव भावो व्यापकस्तदभाव एव व्यापकतया वैधर्म्यदृष्टान्त उच्यते तदा ततो व्याप्याद् धूमादेर्नैव विपक्षस्यानग्न्यादेः प्रच्युतिः कथिता भवेत् । तत्कथनार्थं च वैधर्म्यवचनं (स) प्रयोजनं भवेत् । न हि यत्र धूमस्तत्राग्निरितिवत् यत्र धूमाभावस्तत्राग्न्यभाव इति कथ्यमाने व्याप्याद् धूमादनग्नेर्विपक्षस्य निवृत्तिर्दर्शिता भवतीति । अतो धूमेनाग्निं सिषाधयिषता वैधर्म्यदृष्टान्तेनाग्निधूमाभावयोर्व्याप्तिविपर्ययो वाच्य इत्याह — तस्मादिति वाच्योऽन्तेन । यत्राग्निर्नास्ति तत्र धूमो नास्तीत्येवं यद्वृत्ततद्वृत्ताभ्यामुद्देश्योपादेयभावो दर्शयितव्य इत्यर्थः । स चानग्निरधूमेन व्याप्त उच्यमानो नान्यथा वाच्यः, किन्तु साधर्म्योक्तिनैवोद्देश्योपादेयप्रकारेणेत्याह — न चान्यथेति । प्रकारश्चानन्तरमेवोक्त इति ॥ १२४,१२५½ ॥

अन्यथावचने दोषमाह — अनग्न्यधूमसाहित्य इति । यथैव साधर्म्यदृष्टान्ते स्वशक्त्या शब्दोऽर्थं वदति नार्थापत्तिमनुरुध्यत इति साहित्यमात्रवचने व्याप्तिविपर्यये वा नेष्टं सिध्यतीत्युक्तम्, एवमिहापि भवतीति भावः ॥ १२६½ ॥

एवं(तद्वैताव)दिहाप्यर्थो न सम्पद्यतवतीति यत्रार्थो दृष्टान्तरूपो द्वाभ्यां हेतुसाध्याभावाभ्यामेकेन वा तयोश्शून्यो भवति तत्रापि न प्रस्तुतोपकारो भवति अन्यद्वानिष्टं प्रसज्यत इत्याह — यत्रापीति । सम्यक् प्रयुक्तेऽपि वाक्येऽर्थस्यातदायत्तत्वान्नेष्टसिद्धिरिति भावः । अत्रोदाहरणमाह —



यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ।
साध्येन व्याप्तिसिद्ध्यर्थे हि व्यतिरेकोऽत्र कथ्यते ॥ १२८ ॥
यस्यार्थं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।
तेन दृष्टेऽपि साहित्ये न सर्वो गम्य इष्यते ॥ १२९ ॥
सहदृष्टिर्न सम्बन्धो व्याप्तिर्नैव च तावता ।
मूर्तानित्यत्वयुक्तेऽपि तस्मादङ्गीकृते घटे ॥ १३० ॥

---

खवदिति । नित्यो ध्वनिरमूर्तत्वादित्यत्रैव प्रयोगे यदैवं वैधर्म्यमुच्यते यन्नित्यं न भवति तदमूर्तमपि न भवति यथा परमाणुरिति तदा साध्याभावशून्यो दृष्टान्तः । परमाणोर्नित्यतया तदभावस्य तत्र दर्शयितुमशक्यत्वात् । बुद्धिवदिति तु दृष्टान्ते हेत्वभावशून्यता । बुद्धेरमूर्ततया तदभावस्य वक्तुमशक्यत्वात् । खवदिति तूभयाभावशून्यता, नित्यामूर्ते तस्मिन्नुभयाभावो दुरधिगमो यत इति ॥ १२७½ ॥

एवं साधर्म्यदृष्टान्तवद्व्याप्तिवैकल्येऽप्याभासता दर्शयितव्या । तत्सिद्ध्यर्थं हि विपक्षाद्धेतोर्व्यतिरेकः कथ्यते । यस्य तु विपक्षैकदेशादपि व्यतिरेको नास्ति, नासौ साध्येन व्याप्तो भवतीत्यसत्यां व्याप्तावनर्थकं तादृशस्य वैधर्म्यस्य वचनमित्यभिप्रायेणाह — साध्येनेति ॥ १२८½ ॥

यतश्चैवञ्जातीयको न साध्येन व्याप्यते तेन क्वचिद्भावयोस्साहित्ये दृष्टेऽपि न सर्वत्र गम्यगमकभावो भवतीत्याह — तेनेति । यद्यपि यन्नित्यं न भवति तदमूर्तमपि न भवति, यथा घटः कुम्भं चेति, क्वचिद्भावयोस्साहित्यं शक्यते दर्शयितुम् । तथापि न सर्व (:) शब्दादि (:) नित्यतया विशिष्टोऽनेन हेतुना गम्य इष्यते । किञ्चिद्ध्यमूर्तं नित्यमाकाशादि, किञ्चिदनित्यं कर्मादीति भावः ॥ १२९ ॥

किमिति नेष्यते अत आह — सहदृष्टिरिति । विपक्षैकदेशनिवृत्त्या हि सहभावमात्रं हेतोस्सिध्यति । न च तन्मात्रसम्बन्धोऽनुमानाङ्गम् । किं तर्हि, व्याप्तिः । न चासावेतावता साहित्यमात्रेण सिध्यतीति । एतदेवोदाहरणेन दर्शयति — मूर्तानित्यत्वयुक्तेऽपीति । इदं च प्रागेव व्याख्यातमिति ॥ १३०½ ॥

अत्र बौद्धा वदन्ति — किमिदं —

कर्मादौ व्याप्त्यभावेन न दृष्टान्तत्वमिष्यते ।
अशेषापेक्षितत्वाच्च सौकर्याच्चाप्यदर्शनात् ॥ १३१ ॥
साधनं यद्यपीष्टोऽत्र व्यतिरेकोऽनुमां प्रति ।
तावता[1] न ह्यनङ्गत्वं युक्तिश्शाब्देऽभिधास्यते[2] ॥ १३२ ॥

'व्याप्त्या साधर्म्ये उक्ते च न वैधर्म्यमपेक्ष्यते ।'

इत्युच्यते, न हि शतांशेनापि हेतोर्विपक्षाद् व्यतिरेके शङ्क्यमाने गमकत्वमस्तीत्यशेषविपक्षोऽनुमातुर्व्यतिरेकं ग्रहीतुमपेक्षितः । न चासौ दुरधिगमः; एकदेशस्थस्यापि सर्वादर्शनसौकर्यात् । दर्शनं हि सर्वविपक्षाणां दुष्करम्, तदभावस्तु सौकर्यमाप्त एव । न चायोग्यानुपलम्भादेवादर्शनं हेतोर्व्यतिरेकाय प्रभवतीति वाच्यम् । न हि नो विपक्षादर्शनादविनाभावनियमः । किन्तु तादात्म्यतदुत्पत्तिनिबन्धनः । विपक्षदर्शने तु हेतोः परिपन्थिन्यविनाभावो ग्रहीतुमशक्यो भवति । तच्चैकदेशस्थस्यापि तावन्नास्त्येवेति परिपन्थिनि वृत्तिमात्रे दर्शनं व्याप्रियते । यतो यदैवाग्निकार्यो धूम इत्यवगतं तदैव तदायत्तात्मलाभो नासति तस्मिन् भवतीति ज्ञायते । न चान्वयज्ञानमेव व्यतिरेकबुद्धौ निबन्धनम्, असाधारणेषु तदसम्भवात् । न हि महानसपरिदृष्टयोरग्निधूमस्वलक्षणयोस्तत्रैव निरुद्धयोरन्यत्र दर्शनमस्ति, येनान्वयोऽनुभूयेत । तत् कुतोऽन्वयः कुतस्तरां च तन्निबन्धनो व्यतिरेकः । नच विशेषेषु सामान्यं नाम किञ्चिदनुगतं स्वरूपमस्ति, यन्नियम्यनियामकतयावसीयेत, विकल्पाकारत्वात् तस्य । अतो विशेषा एव केचित् कयाचिद् व्यावृत्त्योपलक्षिताः कञ्चिद् विशेषं विपक्षव्यावृत्तिमुखेन गमयन्तीति तत्प्रदर्शनार्थं वैधर्म्यवचनमेव न्याय्यमिति । तान् प्रत्याह—अशेषेति युक्तिरन्तेन । अयमभिप्रायः—यद्यपि व्यतिरेकोऽनुमानाङ्गम् । स तु नादर्शनमात्रात् सिध्यति । तद्देशागमनादपि च तस्योपपत्तेः । नच कार्यत्वावधारणादसति कारणेऽभावः, तस्यैवासति व्यतिरेके दुरधिगमत्वात् । यद्धि यस्मिन् सति भवति, असति च न भवति तत्तत्कार्यम् । अतोऽसत्यभावोऽव-

१. एतावता न ह्यनङ्गमि'ति व्याख्यानुगुणः पाठ इति प्रतिभाति ।

२. 'हि वक्ष्यते' इति मुद्रितपुस्तकपाठः



बोधप्रसङ्गो भेदानां न चाव्याप्तेर्भविष्यति ।
अस्ति सामान्यवत्त्वेषु व्यापिता तत्र गम्यताम् ॥
॥ १३३ ॥

गन्तव्यः । ततः कार्यता तदधीने (ति)तु तस्मिन्नितरेतराश्रयता । अस्तु वादर्शनमात्राद् व्यतिरेकः, तस्य च सौकर्यं, नैतावतानुमां प्रति युक्तिरनङ्गम् । युक्तिर्योगस्सम्बन्धोऽन्वय इत्यनर्थान्तरम् । नान्वयोऽनङ्गमिति यावत् । तन्मुखेनैव सर्वप्रमातृणामनुमानोत्पत्तेः । अतस्तत्कथनार्थं साधर्म्यदृष्टान्तोऽपि वाच्य एव । नासावेकान्तेन प्रत्याख्यातुं शक्यते । इदं चान्वारुह्य वचनम् । यथोक्त एव सिद्धान्तः सम्यक् साधर्म्यप्रयोगे न वैधर्म्यमपेक्षणीयमिति । अन्वयस्यैव प्राधान्यात् तमन्तरेण व्यतिरेकासिद्धेः । अवगते हि धूमस्याग्निना सम्बन्धेऽर्थादनग्निनिवृत्तिस्सिध्यति । अतस्स तावद् विधिमुखेन प्रमुखं दर्शयितव्यः, अवसरे तु वैधर्म्यमपि कदाचिदुच्यते । अनङ्गत्वमिति तु पठतामियं व्याख्या—इदं हि लिङ्गस्यानुमायामङ्गत्वम् यदन्वयव्यतिरेकौ, ताभ्यां हि तदङ्गं भवति । अतो यथा व्यतिरेकोऽङ्गत्वम्, एवमन्वयापरनामा युक्तिरपीति । ननु लिङ्गेऽपि शब्दात्मके प्रतीत्युत्तरकालभाव्यन्वयोऽनङ्गमेवात आह — शाब्देऽभिधास्यत इति । शाब्दे ह्यनुमानाद् भिन्ने प्रतीत्युत्तरकालभाविनी युक्तिरनङ्गमिति वक्ष्यते । यथा वक्ष्यति —

नाङ्गमर्थधियामेषा भवेदन्वयकल्पना ।

इति । अनुमाने तु सर्वत्रैवान्वयः प्रतीत्यङ्गमिति । ये तु तावता नानङ्गत्वमन्वयस्येत्यध्याहृत्यात्रैवार्थे शाब्दे युक्तिर्वक्ष्यते इति व्याचक्षते, तेषामश्रुतान्वयाध्याहार एव तावदुपालम्भः । न चान्वयस्यानुमानाङ्गत्वे शाब्दे युक्तिर्वक्ष्यते । अत्रैव ज्ञातसम्बन्धपदेन तस्योक्तत्वात् । अत एवान्वयाधीनत्वमनुमानस्य च स्थितमिति वक्ष्यति । तस्माद् यथोक्तैव व्याख्येति ॥ १३२ ॥

यत्तु भेदानामेवानुमाने गम्यगमकत्वं तेषां चान्वयो न सम्भवतीत्युक्तम्, तत्राह—बोधप्रसङ्ग इति । न भेदानामनुमानबोधे गम्यगमकतायाः प्रसङ्गः । तेषां सर्वदेशकालाव्याप्तेरेकैकत्र निरुद्धत्वात् । न चाप्यविना-

केचित् साधर्म्यदृष्टान्ते व्याप्त्यापि कथिते पुनः ।
वैधर्म्योक्तिमपीच्छन्ति व्यावृत्तिनियमेच्छया ॥ १३४ ॥
हेतौ साधर्म्यदृष्टान्तात् साध्येनैवावधारिते ।

---

भावेनापरस्य तथाविधस्यैव नियमश्शक्यतेऽनुभवितुम्। न चासति तस्मिन्ननुमानाङ्गं सम्भवतीति तेषामन्वयाभावो न दोषायेति । यदि न भेदानां बोधप्रसङ्गः, कस्य तर्हि दर्शितमिदं, न भेदानुगतमेकं किमपि पारमार्थिकं रूपमस्ति । तस्य विकल्पाकारत्वात् । यद्यपि च व्याप्तिस्मरणसंविदितरूपारोपेणैवाधुनानुमानमुपजायते । तथाहि तस्य निपुणतो निरूप्यमाणस्यासम्भवाद् विभ्रम एवायम् । यद्येवमसद्रूपारोपप्रवृत्तमनुमानमप्रमाणमेव । सत्यम् । प्रतिबन्धबलेन तु किञ्चिदेव स्वलक्षणं केनापि विकल्पाकारेण सामान्यात्मना समधिगतं यदपरं विकल्पाकारोल्लिखितमेव स्वलक्षणं प्रतिलम्भयति तत्प्रमाणमित्याख्यायते । अविसंवादो हि नः प्रामाण्ये कारणमर्थक्रियास्थितिश्चाविसंवादः । यदाहुः— 'प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः । अविसंवाद' इति । भवति चानुमानेऽर्थक्रियासमर्थवस्तुलाभो वस्तुनिर्भासपुरस्सरोऽपीति प्रमाणमनुमानम् । यथोक्तम् —

"अतस्मिंस्तद्ग्रहाद् भ्रान्तिरविसंवादतः प्रमा" इति ।

अतो भेदानामेव गम्यगमकत्वम्। ते च न भाजनमन्वयस्येति युक्तमेवोक्तमत आह— अस्तीति । अस्यार्थः । भवेदेवं यदि न भेदातिरिक्तं किञ्चित् सामान्यं वस्तु भवेत् । अस्ति तु तदित्याकृतिग्रन्थे सकलपरोक्तदोषपरिहारेणोपपादयिष्यते । तस्य चानेकदेशकालव्यापिता गम्यत इति नाभाजनमन्वयस्य । न चातस्मिंस्तद्ग्रहः, पारमार्थिकत्वात् तस्य । एवं च यदनुमानप्रामाण्यसिद्ध्यर्थं परैः किमपि कष्टं कुशमवलम्ब्यते, तदपि मन्दप्रयोजनमेवेति ॥ १३३ ॥

अन्यन्मतं व्याप्त्यापि साधर्म्यदृष्टान्त उक्ते वैधर्म्यमपि वाच्यमिति, तत्तावदुपन्यस्यति— केचिदिति पादत्रयेण । किं पुनस्तदिच्छायां कारणमत आह—व्यावृत्तिनियमेच्छयेति ॥ १३४ ॥

एतदेव विवृणोति — हेताविति । एवं हि मन्यन्ते । यदा हि



व्यावृत्तिस्सर्वतः प्राप्ता साध्याभावे नियम्यते ॥ १३५ ॥
तत्तु मन्दफलं यस्मात् पक्षेऽप्येवं निरूपितम् ।
व्यापकाभावमात्रं हि व्याप्यादित्थं निवर्तते ॥ १३६ ॥
तस्माद् यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।
निवृत्तिर्नैतु दैर्घ्यादेस्तथात्रापि भविष्यति ॥ १३७ ॥
द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।

---

साधर्म्यदृष्टान्ते यत्र धूम इत्युद्दिश्य तत्राग्निरेवेति सैवकारमुपादीयते, तदा हेतौ साध्येनैवाग्निनावधारिते सर्वतोऽग्नेरन्यस्माद् व्यावृत्तिः प्राप्नोति, न चैतत् सम्भवति । साध्यधर्माधिकरणादेरप्यभावप्रसङ्गादपक्षधर्मत्वापत्तेः । पक्षाभावप्रसङ्गाच्च । अतस्साध्याभाव एव व्यावृत्तिं नियन्तुं सर्वदैव वैधर्म्यवचनमर्थवत् । सति हि तस्मिन्नग्न्यभावे धूमो न भवतीत्यावेदितं भवतीति ॥ १३५ ॥

एतदपि दूषयति— तत्तु मन्दफलमिति । तदिदं वैधर्म्यवचनमेवं क्रियमाणं मन्दफलमित्यर्थः । कथं मन्दफलमत आह—यस्मादिति । किं निरूपितमत आह — व्यापकाभावमात्रं हीति । अग्निमान् पर्वत इति पक्षवचने निरूपितमिदम्,—यथा 'नियमस्तद्विपक्षाच्च कल्प्यते नाविरोधिन' इति । अतस्साधर्म्यदृष्टान्तेऽपि व्याप्याद् धूमादेर्व्यापकाभावनिवृत्तिमात्रमेव दर्शयितव्यम्, नान्यमात्रनिवृत्तिरिति ॥ १३६ ॥

एतदेव दृष्टान्तवचनेनोपपादयन्नुपसंहरति—तस्मादिति । तदिह—

प्रतिज्ञाहेतुसाधर्म्यदृष्टान्ताख्यास्त्रयो मताः ।
वाक्यस्यावयवाः प्रायो मीमांसकमते सताम् ॥
एतच्च भाष्यकारेण स्वयमेवोपदर्शितम् ।
दृष्टान्तहेतुसाध्यार्थपदत्रयनिबन्धनात् ॥

इति ॥ १३७ ॥

अत्र भाष्यम् —'तत्तु द्विविधं प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च । तत्र प्रत्यक्षतो दृष्टसम्बन्धं यथा — धूमाकृतिदर्शना-

द्रव्याकृतिविज्ञानं, सामान्यतो दृष्टसम्बन्धं च यथा — देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम्" इति । अनेन प्रमेयद्वैविध्यादनुमानद्वैविध्यमुक्तमिति । अत्र केचिद्गीतिज्ञम्मन्या अनवधृतस्वलक्षणमेव क्वचिदनुमानेन सामान्यतो गृह्यत इति मन्यन्ते । तदुपपादनाय भाष्यकारेणेदमुक्तम् — 'तत्तु द्विविधम्, अदृष्टस्वलक्षणविषयमप्यनुमानमस्ति क्रियादिष्वि'ति । कथं पुनरदृष्टस्वलक्षणेन सम्बन्धदर्शनम्, उत्पत्तिमतः फलस्य दर्शनात् । यद्यप्यनवधृतस्वलक्षणेन वस्तुना विशेषतस्सम्बन्धोऽनवगतः, सामान्यतस्तु दृश्यते । सर्वं हि कादाचित्कं फलं कुतश्चिदागन्तुकादुत्पत्तिमतो जायमानं दृष्टम्, तन्तुसंयोगेभ्य इव पटः । अतो देवदत्तस्य भूतपूर्वपूर्वोत्तरदेशविभागसंयोगौ कदाचिदुपलभ्यागन्तुकः कोऽपि हेतुरनुमीयते । तदिदं सामान्यतो दृष्टसम्बन्धमनुमानमाचक्षते प्रत्यक्षानुपलक्षितपूर्वस्वलक्षणविषयत्वात् । अग्न्यादिषु तु प्रत्यक्षतः स्वलक्षणावधारणात् प्राक् प्रत्यक्षतो दृष्टसम्बन्धमनुमानमाहुः । न च द्रव्यमेव संयोगविभागयोः कारणमिति वक्तव्यम् । सत्यपि तस्मिन्नभावात् । न च द्रव्यान्तरागम एव शक्यते कल्पयितुं, तस्य पूर्वद्रव्यप्रत्यभिज्ञया बाधितत्वात् । न च सदृशापरापरोत्पत्तिविप्रलब्धा भेदं न बुध्यन्त इति साम्प्रतम्, दृष्टादिभेदेऽपि तद्बुद्धेरविपर्ययात् । उक्तं च विवरणकारेण — 'क्षणभङ्गस्तु प्रत्यभिज्ञानान्निराक्रियत एव । अतो दृष्टकारणासम्भवाददृष्टं किमपि संयोगविभागयोः कारणमनुमीयते । तच्च कर्मेत्याख्यायते । अत एव प्रदेशान्तरेष्वपि कर्माप्रत्यक्षमेवे'ति । भाष्यकारो दर्शयति — यथा वक्ष्यति "न हि ते प्रत्यक्षे" इति । अपूर्वसद्भावप्रतिपादनावसरे च 'न कर्मणो रूपमुपलभामहे' इति । 'यदाश्रयं देशान्तरं प्रापयति तत्कर्मेत्युच्यत' इति च । व्यक्तमेव देशान्तरप्राप्तिफलोन्नीयमानत्वमेव कर्मणो दर्शयतीति सिद्धं क्रियादीनां सामान्यतो दृष्टानुमानैकविषयत्वम् । एवं च प्रमेयद्वैविध्यादनुमानद्वैविध्योपपत्तिरिति ये वदन्ति तान् प्रत्याह — द्वैविध्यं नोपपन्नमिति । इदमुक्तप्रकारं द्वैविध्यमनुपपन्नमिति भावः । कथमनुपपन्नमत आह — यथैवेति पादत्रयेण । यथा खल्वग्निधूमाकृत्योः प्रत्यक्षयोः प्रत्यक्षदृष्टसम्बन्धो, भवति एवं गतिप्राप्त्याकृत्योः, तयोरपि प्रत्यक्षत्वात् ।



**प्रत्यक्षदृष्टसम्बन्धः गतिप्राप्त्योस्तथैव हि ॥ १३८ ॥**

प्रत्यक्षमेव हि वयं देशान्तरं प्राप्नुवन्तं देवदत्तं गच्छतीति मन्यामहे । नेयं जात्यादिविकल्पनाभ्यः कर्मकल्पना विशिष्यते । तद्वदेवेन्द्रियान्वयव्यतिरेकानुविधायित्वादपरोक्षनिर्भासाच्च । ननु देवदत्ते देशसंयोगविभागातिरिक्तमपरं कर्मणः किमपि रूपमपरोक्षमीक्षामहे । फलदर्शनेनैव तदनुमीयते । जातेर्वा व्यक्तितो व्य(तिरिक्ता)याः किं रूपमनुभूयते, यदसौ प्रत्यक्षविषयतयावसीयते । रूपमेव सा व्यक्तेः, किमस्या रूपान्तरेणेति चेत्, कर्म वा किंरूपम् । इदमपि हि ततो न भिद्यत एव । आगन्तुकं तु केवलम् । अतो जातिकल्पनावत् कर्मकल्पनामपि प्रत्यक्षपक्ष एव निक्षिपन्तः पञ्चधा सविकल्पकं प्रत्यक्षं विभजामहे । आह च —

"न हि दृष्टिपथं प्राप्तं देवदत्तं निरूपयन् ।
पठन् काव्यं स्वसंज्ञोक्तं परोक्षमिव बुध्यते ॥"

इति । फलानुमेये तु कर्मण्यादित्यवद् देवदत्तवत् प्रतीतिप्रसङ्गः । न चैष देवदत्तमिव चलन्तं स्पन्दमानमादित्यमपि पश्यतीति दृश्यते । स्थिरं हि सर्वदा तन्मण्डलमवलोक्यते । संयोगविभागौ तु तस्यापि प्रतीयेते एवेति तुल्य(व ? त्वा)त् ताभ्यामुभयत्राप्यानुमानिकः प्रत्ययो भवेत् । अपि च विभागोपक्रमे संयोगावसाने च कर्मणि तत उन्नीयमाने गच्छतीति वर्तमाननिर्भासः प्रत्ययो न भवेत्, अतीतं हि तत्, तदा कथं वर्तमानाकारबुद्धिगोचरो भवति । जलप्रवाहनिश्चलेषु मत्स्येषु निरन्तरोत्पद्यमानजलावयवसंयोगविभागावगमादानुमानिकी, गतिसंविदुपजायेत । स्थाणौ च श्येनवियुक्ते श्येन इव कर्मानुमीयेत । ततश्च सोऽपि गच्छतीति बुद्धिविषयतामापद्येत । यदि मतं न विभागमात्रात् कर्मानुमानम्, अपि तर्हि विभागपूर्वकात् संयोगादिति । एवं तर्हि यदैकः श्येनवियुक्तः स्थाणुरन्येन संयुज्यते तत्र प्रसङ्गः । चलित्वावस्थिते च देवदत्ते । यदि तूच्यते योऽयमुत्पततः श्येनस्य देशान्तरसंयोगः तस्य स्थाणुसमवेतेन कर्मणा निष्पत्त्यसम्भवान्न तत्र कर्मानुमानमिति । कल्प्यतां तर्हि श्येनेऽपि कर्म, स्थाणौ तु प्रसङ्गानतिवृत्तिरेव । नियतं हि प्रतिबद्धदृशः स्मृतप्रतिबन्धस्य प्रतिबन्धकाविज्ञानम् । अस्ति च स्थाणौ कारणप्रतिबद्धफलदर्शनमिति नानुमानोदयश्शक्यते

निरोद्धुम् । श्येनसमवायिनैव कर्मणा स्थाणावपि संयोगविभागोपपत्तौ न तद्गतकर्मानुमानमिति चेत् तन्न । न हि प्रयोजनानुसारिण्यनुमानव्यवस्था । व्याप्तं हि लिङ्गं यत्र यत्र दृश्यते तत्र तत्र व्यापकमुपस्थापयति । अर्थापत्तिर्ह्यन्यथोपपत्त्या परिह्रियते नानुमानम् । यदि त्वविच्छिन्नोत्पत्तयस्संयोगविभागाः क्रियानुमाने कारणम्, एवं तर्हि न काचिद् गतिरनुमीयेत, भविष्यत्संयोगविभागानां प्रमाणागोचरत्वात् । प्रथमं च कतिपयानामेवावगतेः । अथ स्वदेशसंयोगविभागहेतुकं क्रियानुमानम् । न च स्थाणोः श्येनो देश इत्युच्यते । एवमपि मत्स्येषु प्रसङ्गानतिवृत्तिरेव, तेषां हि जलं स्वदेश एव । परोक्षव्योमवादिनां च विहङ्गमे गच्छतीति क्रियाप्रत्ययानुपपत्तिः, व्योमसंयोगविभागयोरप्रत्यक्षत्वात् ताभ्यां तदनुमानानुपपत्तेः । न च वियद्वितताऽऽलोकावयवसंयोगविभागावगमनिबन्धनो विहङ्गमे चलतीति प्रत्ययः, सन्तमसेऽपि भावात् । न च तमो नाम किञ्चिद्वस्त्वस्ति भवत्सिद्धान्ते, भासोऽभावमात्रत्वात्तस्य । अतस्तत्संयोगविभागहेतुकोऽपि न क्रियावसायश्शक्यते समाधातुमिति न प्रत्यक्षे कर्मणि द्वैविध्योपपत्तिः । या तु 'न हि ते प्रत्यक्षे' इत्यप्रत्यक्षतोक्ता, तां तत्रैवान्यथा व्याख्यास्यामः । "रूपशब्दाविभागमि"ति च वदता सूत्रकारेण प्रत्यक्षमेव कर्मेत्यास्थितम् । अपूर्वाधिकरणे च "न कर्मणो रूपमुपलभामहे" इति वचनं यथाचोदितविततपूर्वापरीभूताभिव्यक्तावस्थितकर्मरूपानुपलब्ध्यभिप्रायमेव । इतरथा ह्युपलब्धिमात्रप्रतिषेधे शशशृङ्गादिवन्नित्याभाव एव कर्मणो भवेत् । न हि तत्र प्रत्यक्षोपलब्धिमात्रमेव प्रतिषिद्धम् । 'यदाश्रयं देशान्तरं प्रापयती'ति च न फलानुमेयत्वाभिप्रायम् । किं तर्हि? आश्रयस्य देशान्तरप्रापकत्वरूपेण न स्वरूपतः कर्मास्तीत्यपूर्वात्मना कर्मणोऽवस्थानं दर्शयति । 'इहापि देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्ये'ति वदन् देवदत्ते प्रत्यक्षतामेव गतेर्दर्शयति । अन्यथा तु देवदत्तादित्ययोरुभयोरपि कर्मणोऽनुमेयत्वात् केन विशेषेणादित्ये गत्यनुमानं सामान्यतो दृष्टतयोदाह्रियते । देवदत्तेऽपि हि सामान्यतो दृष्टादेव गतिसिद्धिः । अतो नैवंविधं ग्रन्थतो युक्तितो वा घटत इति सूक्तमनुपपन्नमिति । प्रतियोगिनोर्हि परस्परसङ्करे द्वैविध्यं भवति । इह तु यद्



**आदित्येऽनुपलब्धिश्चेन्न देशेऽप्यधुनातने ।**
**क्वचित् तत्रोपलब्धिश्चेद् देवदत्तेऽपि दृश्यताम् ॥**

**यदि धर्म्यन्तरापेक्षा तत्र सामान्यदृष्टता ।**
**स्यादग्निधूमयोस्सैव तस्मादेवं प्रचक्षते ॥ १४० ॥**

**प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।**

प्रत्यक्षदृष्टसम्बन्धस्य प्रतियोगितयोपात्तं सामान्यतो दृष्टसम्बन्धं तत्रापि गतिप्राप्त्याकृत्योः प्रत्यक्षदृष्ट एव सम्बन्ध इति न प्रतियोगिनोरसङ्कर इति ॥ १३८ ॥

यदि तु दृष्टान्ते प्रत्यक्षतायामपि पक्षीकृतादित्यगतेरप्रत्यक्षत्वात् न प्रत्यक्षदृष्टसम्बन्ध इत्युच्यते । तदेतदाशङ्कते तावद्—आदित्येऽनुपलब्धिश्चेदिति । इदानीं दूषयति — नेति । कारणमाह — देशेऽप्यधुनातन इति । देशेऽप्यधुनातने—सम्प्रति प्रमीयमाणे, अप्रत्यक्षतोपलब्धिरेवेत्यर्थः । यदि त्वग्निधूमाकृत्योः क्वचिन्महानसादौ अप्रत्यक्षोपलब्धिरिष्यते सा तर्हि देवदत्तेऽपि गतेः प्रत्यक्षत्वादस्तीत्याह— क्वचिदिति ॥ १३९ ॥

एवं तावत् प्रत्यक्षतो दृष्टता सामान्यतो दृष्टतया सङ्कीर्यत इत्युक्तम् । इदानीं सामान्यतो दृष्टतापि प्रत्यक्षतो दृष्टाभिमताग्न्याकृत्यनुमाने सङ्कीर्यत इत्याह — यदीति पादत्रयेण । यदि हि देवदत्तादिधर्म्यन्तरापेक्षैवादित्ये गत्यनुमानस्य सामान्यतो दृष्टतेष्यते, सा तर्हि महानसादिधर्म्यन्तरापेक्षयाग्निधूमयोरपि गम्यगमकत्वेनावस्थितयोः प्राप्नोत्येव । सामान्यतो ह्यविवक्षितदेशादिभेदमिदमवगतं धूमवानग्निमानिति, यथा देशान्तरप्राप्त्यधिकरणं गत्यधिकरणमिति । अतः प्रतियोगित्वरहितमेवेदमुभयमिति द्वैविध्यानुपपत्तिरित्याक्षेपः । एवमाक्षिप्य समादधाति — तस्मादेवं प्रचक्षत इति । यथोक्तद्वैविध्यासम्भवादेवं वक्ष्यमाणप्रकारेण द्वैविध्यं वर्णनीयमिति भावः ॥ १४० ॥

तत्र प्रत्यक्षसम्बन्धं तावदुदाहरति—प्रत्यक्षेति युज्यतेऽन्तेन । यदा हि ययोरेवाग्निधूमविशेषयोः, गोमयेन्धनोऽयमग्निः—गोमयमिन्धनमस्येति

गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥ १४१ ॥

तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।
यदाग्निर्बुध्यते तस्य पर्वबोधात् पुनः पुनः ॥ १४२ ॥

सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४३ ॥

आकृत्योरेव चैवेष्टा व्यवच्छेदेन केनचित् ।
हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥ १४४ ॥

---

बहुव्रीहिः, तज्जन्योऽयं धूमविशेष इति च प्राक् प्रत्यक्षेण मतिं कृत्वा पुनश्च कियता विलम्बेनान्यत्र क्वचित् गत्वा गतस्सन् तद्देशस्थेन तेनैव धूमविशेषेण तमेवाग्निविशेषं बुध्यते, तदा तत्प्रत्यक्षदृष्टसम्बन्धमनुमानं भवतीत्यर्थः । अनेन च विशेषदृष्टमेव प्रत्यक्षदृष्टशब्देनोच्यत इति व्याख्यातम् । प्रत्यक्षशब्देन हि विशेषो लक्ष्यते । प्रत्यक्षेण ह्ययमेवंविधोऽग्न्यान्तरविशेषो गोमयेन्धनतज्जन्यत्वादिरूपश्शक्यतेऽवगन्तुम् । न प्रमाणान्तरेण । तद्द्वारेण त्वनुमानस्यापि तादृशो विशेषो विषयो भवतीति युक्तैव प्रत्यक्षशब्देन विशेषलक्षणा । विशेषदृष्टं च सामान्यतो दृष्टस्य भवति प्रतियोगीति द्वैविध्योपपत्तिरिति भावः । ननु विशेषदृष्टं नाम (न) प्रमाणभेदः । न चेदं प्रमाणम्, गृहीतविषयत्वात् । तद्देशस्थितेनैव हि धूमेन तस्मिन्नेव देशे स एव गोमयेन्धनजन्याग्निरनुमीयते । अतो देशभेदाभावादप्रामाण्यमेव, अत आह — तस्येति पादद्वयेन । तस्यैवंविधस्य प्रत्यक्षदृष्टस्य सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता भवति । यद्यपि देशभेदो नास्ति । कालभेदात्तु संशयानस्य संशयोच्छेदद्वारेण प्रामाण्यमविहतमिति । एतच्च विन्ध्यवासिनापि विशेषदृष्टत्वेनोदाहृतमित्याह — विशेषदृष्टमिति ॥ १४३ ॥

यदि विशेषदृष्टोदाहरणमिदं कथं तर्हि भाष्ये आकृतिग्रहणम् । एवं हि विशेष एव दर्शयितव्यो भवेत् । अत आह—आकृत्योरेवेति । अयमर्थः — केनचिद्गोमयेन्धनत्वादिनावान्तरविशेषेणोपदर्शितयोराकृत्यो-



अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मितौ ।
सामान्यदृष्टमेकान्तादत्रेत्यादि त्व उच्यते ॥ १४५ ॥

प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।
वस्तुत्वं चात्र हेतुर्वा द्वयस्याप्यभिधीयते ॥ १४६ ॥

---

रेवात्र हेतुसाध्यत्वम् । एवं ह्यत्र प्रत्ययः । स एवायमद्य यावदनुवर्तमानो गोमयेन्धनविकारस्य धूमस्याकारो दृश्यते । अत एव तदिन्धनयोनिरग्निरनुवर्तेत इत्यतो नानुपपन्नमाकृतिग्रहणमिति ॥ १४४ ॥

यद्येवमविवक्षितावान्तरविशेषमग्निधूमान्तरमेव सामान्यतो दृष्टोदाहरणतया वाच्यम् । किमादित्योदाहरणेन । अत आह—अग्निधूमान्तरत्वे चेति । यथा ह्यग्निधूमाकृत्योस्तृणदारुगोमयेन्धनादिजन्मा सुव्यक्तो विशेषः सर्वप्रमातृस्वसंवेद्यो भवति, नैवं गतिप्राप्त्याकृत्योः । अतः प्राप्त्याकृतिमात्राद् गत्याकृतिमात्रानुमानमादित्य एकान्ततस्सामान्यतो दृष्टसम्बन्धमिति युक्तमेवादित्योदाहरणमिति ॥ १४५ ॥

किं पुनस्सामान्यतस्सम्बन्धग्रहणे प्रमाणम् । नह्यगृहीतयोस्सम्बन्धिनोस्सम्बन्धग्रहणमस्ति । न च सामान्ययोः प्रत्यक्षग्रहणं सम्भवति । तस्य स्वलक्षणैकविषयत्वात् । नानुमानमनवस्थापातात् । अत आह—प्रत्यक्षविषयत्वमिति । अवेदनपक्षा, यद्यनुमानेन सामान्यग्रहणमिष्यते । तस्मात्तु सविकल्पकसिद्धौ प्रत्यक्षविषयत्वमुपपाद्यान्त उपसंहृतं 'प्रत्यक्षत्वतस्सिद्धं सामान्यस्ये'ति । ननु वस्त्वेव न सामान्यं किञ्चिदस्ति नाम । तस्य भिन्नाभिन्नत्वानिरूपणादत आह— वस्तुत्वं चेति । वस्तुत्वमप्याकृतिग्रन्थे विस्तरेण प्रतिपादयिष्यते । प्रत्यक्षविषयताप्रतिपादनेन च प्रत्यक्षेऽपि प्रसाधितप्रायमेव । अत्र च 'अस्ति सामान्यवस्तुष्वि'त्यन्वयोपपादनाच्च सामान्यस्य वस्तुत्वमुपन्यस्तमेव । अयं तु हेतुकथनार्थः पुनरुपन्यास इति । यस्तु हैतुको न हेतुमन्तरेण प्रमाणान्तरसिद्धावाध्रियते । तं प्रति हेतुमेवोभयमुपपादयिष्याम इत्याह—अत्रेति ॥ १४६ ॥

धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।
अभावान्यप्रमाणत्वात् स्वार्थे श्रोत्रादिबुद्धिवत् ॥ १४७ ॥

सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यतापि च ।
अभावान्यप्रमेयत्वादसाधारणवस्तुवत् ॥ १४८ ॥

तत्र वस्तुत्वप्रसाधनार्थं तावद् हेतुमाह — धूमादग्न्यनुमानस्येति । बौद्धा ह्यवस्तुसामान्यालम्बनमनुमानमाचक्षते । सामान्यस्य विकल्पाकारमात्राभ्युपगमात् । अत एव भ्रान्तिरेवानुमानं, सम्बन्धबलेन स्वलक्षणरूपमुपस्थापयतीति प्रमाणमित्याहुः । तानेव प्रतीदमुच्यते — वस्त्वालम्बनमनुमानमभावान्यप्रमाणत्वात् यथा स्वार्थे श्रोत्रादिबुद्धिः । या हि स्वविषये श्रोत्रादिभिरिन्द्रियैर्बुद्धिर्जन्यते, सा वस्त्वालम्बनैव । येन च यदिन्द्रियं सन्निकृष्यते स तस्य स्वार्थः प्राप्यकारित्वादिन्द्रियाणाम् । तदिह मृगतृष्णादिज्ञाननिराकरणार्थं स्वार्थविशेषणम् । अविशेषेणोपादाने तु नाभावान्यप्रमाणत्वस्य वस्त्वालम्बनतया व्याप्तिः कथिता भवेत् । भ्रान्तीनामुभयविकलत्वात् । न हि ताः प्रमाणम् । न च वस्त्वालम्बनाः । अन्यसम्प्रयुक्तेन्द्रियस्य हि ता अन्यविषया जायन्ते । ईदृशमेव ज्ञानमवस्त्वालम्बनं, न पुनरत्यन्तासदर्थम् । एवं वस्त्वालम्बनत्वेऽनुमानस्य साधिते अर्थात् सामान्यं वस्तित्वमुक्तं भवति । इदं चानवस्त्वालम्बनत्वमनुमानस्यार्थपदं प्रयुञ्जानेन भाष्यकारेण निराकृतम् । अनर्थविषयमनुमानमिति बौद्धा मन्यन्ते । यद्वदिति(?) स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तमाना भ्रान्तिरप्यर्थसम्बन्धेन प्रवृत्तेस्तदव्यभिचारात् प्रमाणमनुमानमिति, तेषामिदमुत्तरम् अर्थस्सामान्यमनुमानस्य विषयो बाह्य एव । न विकल्पाकारमात्रमित्याकृतिग्रन्थे विस्तरेण प्रतिपादयिष्यत इति ॥ १४७ ॥

एवमर्थाद् वस्तुत्वं प्रसाध्याहत्य प्रसाधयति — सामान्यस्य च वस्तुत्वमिति । सामान्यं वस्तु अभावान्यप्रमेयत्वादसाधारणवस्तुवदिति वक्ष्यमाणेन सम्बन्ध इति । प्रत्यक्षविषयतामिदानीं प्रयोगेण दर्शयति — प्रत्यक्षेति पादत्रयेण । यदभावान्यप्रमेयं तत् प्रत्यक्षेण गृह्यत एव । यथा सौगतानामेवासाधारणं वस्त्विति ॥ १४८ ॥



सामान्यं नानुमानेन विना यस्य प्रतीयते ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥ १४९ ॥

असामान्यस्य लिङ्गत्वं न च केनचिदिष्यते ।
न चानवगतं लिङ्गं किञ्चिदस्ति प्रकाशकम् ॥ १५० ॥

तस्य चाप्यनुमानेन स्यादन्येन गतिः पुनः ।
तदुत्पत्तिश्च लिङ्गात् स्यात् सामान्यज्ञानसंहृतात् ॥ १५१ ॥

तस्य चाप्यनुमानत्वाद् भवेल्लिङ्गेन चोद्भवः ।
अनुमानान्तरादेव ज्ञानेनैवं च कल्पने ॥ १५२ ॥

लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥ १५३ ॥

अथ सामान्यभूतेऽपि लिङ्गेऽन्यस्माद् गतिर्भवेत् ।
प्रमाणादप्रमाणाद् वा तथा लिङ्गिगतिर्भवेत् ॥ १५४ ॥

बौद्धानामेव तु सामान्यमनुमानैकविषयं मन्वानानामनवस्था प्रसज्यत इत्याह — सामान्यमिति पञ्चभिः । निगदव्याख्यातो ग्रन्थः ॥ १४९—१५३ ॥

ननु यदि तूच्यते लिङ्गभूतसामान्यग्रहणार्थमनुमानापेक्षायामनवस्था भवति, न तद्ग्रहणार्थमनुमानमपेक्ष्यते, धूमादिस्वलक्षणदर्शनप्रभवविकल्पवेद्यत्वात्तस्य । न चासावप्रमाणम्, अर्थक्रियासमर्थवस्तुप्रतिलम्भात् । न च प्रमाणमनर्थविषयत्वात् । अतोऽनिर्वचनीयविकल्पसिद्धत्वात् लिङ्गस्य नानवस्था भवतीत्याशङ्क्याह — अथेति । अयमभिप्रायः — न तावत् प्रमाणमप्रमाणं च ज्ञानं सम्भवति । विरुद्धस्वभावयोरेकत्र प्रतिषेधेऽन्यतरापत्तेरपरिहार्यत्वात् । अप्रमाणस्य च प्रमेयव्यवस्थापनाशक्तेरवश्यं प्रमाणमेव तज्ज्ञानमभ्युपगन्तव्यम् । प्रत्यक्षानुमानाभ्युपगमाच्च प्रमाणान्तरमेवापद्येत ।

एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते ।
प्रमाणान्तरमेव स्यात् सामान्यस्यावबोधकम् ॥
अप्रमाणावबुद्धाद्धि लिङ्गाल्लिङ्गिनि या मतिः ।
सापि मिथ्या भवेन्नित्यं बाष्पज्ञाताग्निबुद्धिवत् ॥ १५६ ॥
नन्वप्रमाणभूतापि सम्बन्धस्मृतिरिष्यते ।
यथा लिङ्गिगतौ हेतुस्तथा लिङ्गगतिर्भवेत् ॥ १५७ ॥
तत्र यत्पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ।
तदुपस्थानमात्रेण स्मृतेः स्याच्चरितार्थता ॥ १५८ ॥

---

प्रमाणान्तरं च यथा तल्लिङ्गसंवेदने प्रमाणमिष्यते, एवं लिङ्गिन्यपि प्राप्नोति । एवं च वक्ष्यमाणप्रसङ्गो भवेत् । प्रमाणादप्रमाणाद्वेति वदन्ननिर्धारितोभयरूपतां विकल्पस्य दर्शयतीति ॥ १५४ ॥

अस्तु तर्हि लिङ्गिनोऽपि तथैवावगमः, को दोषः, अत आह—एवमपीति । अयमभिप्रायः—अनवस्थामपि प्रसञ्जयतामस्माकमनुमानोच्छेदापादनमभिमतम् । प्रमाणान्तराभ्युपगमेऽपि चानुमानोच्छेदो भवत्येव । तदेव हि प्रमाणं तदा सर्वस्य लिङ्गलिङ्गिसामान्यस्यावबोधकं भवेदिति ॥ १५५ ॥

यदि त्वेकरूपाभ्युपगमेऽप्रमाणत्वमेव लिङ्गज्ञानस्येष्यते, ततोऽप्रमाणावगताल्लिङ्गाल्लिङ्गिज्ञानमपि मिथ्या भवेत् । बाष्पादिव धूमसंविदिताद्दग्निज्ञानम् । एवं च नानुमानमिति । स एवानुमानस्य नित्योच्छेद इत्यभिप्रायेणाह— अप्रमाणावबुद्धादिति ॥ १५६ ॥

अत्र चोदयति— नन्विति । यथा ह्यप्रमाणमेव सम्बन्धस्मरणं प्रमाणकारणमिष्यते तथा लिङ्गज्ञानमपि भविष्यतीत्यर्थः ॥ १५७ ॥

परिहरति—तत्रेति । स्मृतिर्हि पूर्वज्ञानाद् भवन्ती तदुपस्थापनद्वारेणानुमायामुपयुज्यते । तच्च प्रमाणमेवेति तदनुसारी निर्णयो युक्त इति ॥ १५८ ॥



न तु लिङ्गगतौ किञ्चित् प्रमाणमुपपद्यते ।
तदभावात् स्मृतिश्चात्र न कथञ्चित् प्रवर्तते ॥ १५९ ॥
स्मार्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुतेऽप्यस्ति नूनं स्मरणशक्तता ॥ १६० ॥
न चासाधारणोऽर्थात्मा सामान्यज्ञानकारणम् ।
यस्मान्नास्याविनाभावस्तेन दृष्टः कथञ्चन ॥ १६१ ॥

---

न चैष प्रकारो लिङ्गगतौ सम्भवतीत्याह—न त्विति । न ह्यत्र प्रागपि लिङ्गावगमे प्रमाणं किञ्चिदुपपद्यते, यत् प्रमाणज्ञानेनोपस्थाप्यत इति । न च लिङ्गज्ञानमपि स्मृतिरेवेति वाच्यम् । पूर्वप्रमाणाभावादेवेत्याह—तदभावादिति ॥ १५९ ॥

ननु निर्विकल्पकगृहीतधूमादिस्वलक्षणपरिप्रापकतया लिङ्गज्ञानमपि स्मृतिरेव । अतोऽत्रापि निर्विकल्पकप्रमाणान्तरतो निर्णयो युक्त एव । अत आह—स्मार्तमिति । यथा सम्प्रति सम्बन्धज्ञानं गृहीतप्रापकतया स्मरणम्, एवमेतदपि लिङ्गज्ञानं निर्विकल्पकगृहीतप्रापकतया तदभेदेन स्मार्तमिति यो वदति तस्य वन्ध्यासुतेऽपि स्मरणशक्तिरनिवारिता । गृहीतविषया हि स्मृतिरिति स्थितिः । न च लिङ्गसामान्यज्ञानं निर्विकल्पकगृहीतस्वलक्षणालम्बनमिति कथं स्मृतिः । यदत्र प्रकाशते तन्न गृहीतं, यच्च गृहीतं तन्न प्रकाशत इति न स्मृतित्वम् । अगृहीतगोचरायां तु स्मृतौ वन्ध्यासुतेऽपि स्मरणप्रसङ्ग इति ॥ १६० ॥

नन्वनुमानेन लिङ्गसामान्यज्ञानेऽनवस्था भवति, यदि सामान्यात्मकमेव लिङ्गं तद्ग्रहणार्थमिष्यते, तस्यानुमानवेद्यत्वात् । असाधारण एवार्थात्मा सामान्यज्ञाने लिङ्गं भविष्यति, स च प्रत्यक्ष एवेति नानवस्था । अत आह—न चेति । किं न कारणमत आह—यस्मादिति । दृष्टाविनाभावं लिङ्गं भवति । न चास्य तेन सामान्येनाविनाभावः कथञ्चिद्देशतः कालतो वा दृष्टः । असाधारणस्य भावान्तरेष्वनुत्पत्त्यसम्भवादेकत्र दृष्टस्य च तत्रैव निरुद्धत्वादिति ॥ १६१ ॥

स्याद्वा सम्बन्धदृष्ट्यासौ सामान्यं कृतकत्ववत् ।
नह्यसाधारणं वस्तु पूर्वत्रेह च विद्यते ॥ १६२ ॥

न चाप्यव्यपदेश्यस्य विकल्परहितस्य च ।
विना पूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥ १६३ ॥

कल्प्यन्ते च विशेषा ये तेऽप्यलिङ्गमनन्वयात् ।
एतस्मादेव हेतोः स्यात् तज्ज्ञानस्याप्यलिङ्गता ॥ १६४ ॥

सामान्यरूपतायां वा तथैवानवधारणम् ।

---

सम्बन्धदर्शनाभ्युपगमे वा कृतकत्वादिवत् सामान्यरूपतापत्तिरित्याह—स्याद्वेति । अत्र कारणमाह—नहीति ॥ १६२ ॥

इतश्चासाधारणोऽर्थात्मा न लिङ्गमित्याह—न चेति । धूमादिर्हि धूमोऽयमित्यादिविकल्पास्पदीकृतोऽग्न्यादेर्लिङ्गमिति दृष्टम् । असाधारणस्तु केनचिद्रूपेणाप्यव्यपदेश्यः कथं लिङ्गं भवेदिति । लिङ्गत्वं नोपपद्यत इति वक्ष्यमाणेन सम्बन्ध इति । ननु तिरश्चामसत्येव शब्दोल्लेखेऽसाधारणरूपदर्शिनामेवानुमानं दृष्टमतो नाव्यपदेश्यत्वादलिङ्गत्वमत आह—विकल्पेति पादत्रयेण । अयमभिप्रायः — मा नाम तिरश्चां शब्दोल्लेखो भवेत्, अर्थविकल्पस्तु तेषामपि पूर्वापरानुसन्धानात्मकोऽस्त्येव । अतो युक्तमेव तेषामनुमानेऽव्यपदेश्यस्यापि लिङ्गत्वम् । असाधारणस्तु पूर्वापरानुसन्धानाद् विनार्थविकल्परहितोऽपीति कथं लिङ्गम् । न हि सोऽयमित्यनारूढो बुद्धौ धूमोऽग्नेर्लिङ्गं भवति । न चैवमसाधारणे सम्भवति, पूर्वापरानुसन्धानागोचरत्वात् तस्येति ॥ १६३ ॥

अस्मन्मतेऽपि येऽसाधारणात्मानो धूमादयो विशेषा विकल्प्यन्ते तेऽप्यन्वयाभावादलिङ्गं, किमङ्ग पुनर्निर्विकल्पकैकगोचरोऽसाधारणोऽर्थात्मा इत्याह—कल्प्यन्त इति । अन्वयाभावादेवासाधारणज्ञानमपि लिङ्गिसामान्यज्ञाने न लिङ्गमित्याह—एतस्मादेवेति ॥ १६४ ॥

यदि त्वन्वयसिद्ध्यर्थमसाधारणस्य सामान्यरूपतेष्यते, ततो लिङ्गसामान्यग्रहण इवानवस्थाप्रसङ्गात् तस्याप्यनवधारणमित्याह—



क्वचिद्वा दृष्टसम्बन्धे सर्वः प्रत्यायको भवेत् ॥ १६५ ॥

सम्बन्धानुभवोऽवश्यमेषितव्यश्च लिङ्गिनः ।
अनुमानप्रवृत्तेस्तु प्राग्ज्ञानं तत्र नास्ति ते ॥ १६६ ॥

नचापि वासनामात्राल्लिङ्गज्ञानस्य सम्भवः ।
लिङ्गिज्ञानं च तद्वत् स्यात् त्रिरूपाल्लिङ्गतो न तत् ॥ १६७ ॥

---

सामान्येति । यदि तु कस्मिंश्चिदेवासाधारणे सामान्येन ज्ञातसम्बन्धेऽन्यदर्शनादपि सामान्यमनुमीयते । एवं तर्हि सर्व एव सर्वस्य प्रत्यायको भवेत् । अविशेषादित्याह—क्वचिद्वेति ॥ १६५ ॥

एवं तावन्न लिङ्गावधारणे प्रमाणमस्तीत्युक्तम् । इदानीमन्वयग्रहणकाले लिङ्गिज्ञानेऽपि न किञ्चित् प्रमाणमस्तीत्याह—सम्बन्धानुभवेति । नागृहीते लिङ्गिनि तत्सम्बद्धं लिङ्गं शक्यतेऽवगन्तुम् । न चानुमानप्रवृत्तेः प्राक् तस्मिन् सामान्यात्मनि भवतः किञ्चित् प्रमाणमस्त्य[illegible]कमिव प्रत्यक्षम्, अतो लिङ्गिन्यप्यवगम्यमानेऽनवस्थाप्रसङ्ग इत्यभिप्रायः ॥ १६६ ॥

नन्वनादिकालीनवासनामात्रनिबन्धन एवायं लिङ्गलिङ्गिसंव्यवहारः, किं लिङ्गातिनिर्बन्धेन । काचिदेव हि वासनोद्भूता किञ्चिल्लिङ्गाकारं विकल्पमाविर्भावयन्ती किञ्चिदेवानुमानसंव्यवहारं प्रवर्तयति । यथाहुः—'सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन, न बहिस्सदसत्त्वमपेक्षते' इति, अत आह—न चापीति । न वासनामात्रनिर्मितं लिङ्गज्ञानम् । वासना हि पूर्वानुभवाहितसंस्कारः । नासौ लिङ्गसामान्यस्य शशविषाणादिवदत्यन्तासतः सम्भवतीति कथं वासनामात्राल्लिङ्गज्ञानस्य सम्भव इति । तन्निबन्धने च लिङ्गज्ञाने इष्यमाणे तद्वदेव लिङ्गिज्ञानोपपत्तेरनर्थकं त्रिरूपाल्लिङ्गतोऽर्थदृगनुमानमित्यनुमानप्रामाण्याश्रयणमित्याह—लिङ्गिज्ञानं चेति ॥ १६७ ॥

यत्राभावस्य लिङ्गत्वं न चासावानुमानिकः ।
प्रमाणान्तरगम्यत्वात् तत्र दोषो न जायते ॥ १६८ ॥

प्रत्यक्षावगताल्लिङ्गाद् यस्य लिङ्गिगतिर्भवेत् ।
तस्य नातोऽधिकं किञ्चित् प्रार्थनीयं प्रसज्यते ॥ १६९ ॥

यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि ग्रहणं भवेत् ।
तत्रापि मौलिकं लिङ्गं प्रत्यक्षादेव गम्यते ॥ १७० ॥

लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।
प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥ १७१ ॥

---

नन्वियमनवस्था मेघाभावेन वृष्ट्यभावानुमाने भवतोऽपि समानैव, मेघाभावस्यानुपलब्धिलिङ्गत्वात् । सजातीयलिङ्गान्तरापेक्षायामनवस्थापद्यते । अत आह—यत्रेति । यत्र हि वृष्ट्यभावे मेघाभावो लिङ्गं नासावनुमेयः, अभावाख्यप्रमाणान्तरगम्यत्वात् । अतो नात्र तुल्यजातीयापेक्षानिबन्धनोऽनवस्थादोषो जायत इति ॥ १६८ ॥

प्रत्यक्षसामान्यवादिनां तु न नः काचिदनवस्थेत्याह—प्रत्यक्षावगतादिति । अतः प्रत्यक्षादित्यर्थः ॥ १६९ ॥

अनुमितानुमाने तर्ह्यनवस्था, अत आह—यत्रापीति । प्रत्यक्षा हि देशान्तरप्राप्तिर्मौलिकं मूले भवं लिङ्गं, तेन गतिमनुमायादित्ये गतिसाधनेऽनुमीयमाने नानवस्थेत्यभिप्रायः ॥ १७० ॥

नन्वनित्यश्शब्दः कृतकत्वात्, कृतकत्वं च तत्र दर्शनादित्येवं कर्मानन्तरभावितया कृतकत्वे साध्यमाने कर्मणोऽपि हेत्वन्तरादनुमानेऽनवस्था भवेदत आह—लिङ्गत्वमिति ।

"कृतकत्वानुमाने हि कर्मैके तत्र दर्शनाद्" ।

इति कारकव्यापारानन्तरभावित्वं लिङ्गमुक्तम् । तत्र च कारकविशिष्टा क्रिया तद्विशिष्टं वा कारकमनन्तरभावितो विशिष्टलिङ्गमापतति । उभयं



एवं शब्दोपमानादौ सामान्याश्रयता यतः ।
तद्दौस्थित्येन दौस्थित्यं सर्वत्रातः प्रसज्यते ॥ १७२ ॥
तस्मात्प्रत्यक्षपूर्वत्वं प्रमाणान्तर इष्यते ।
प्रत्यक्षत्वं च सामान्ये नान्यथा हि गतिर्भवेत् ॥ १७३ ॥
प्रत्यक्षालम्बनत्वं च विशेषस्य कथं भवेत् ।
यदा वस्त्वन्तरापेक्षः सामान्यांशः स कीर्त्यते ॥ १७४ ॥
रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया ।
स्वविशेषानपेक्ष्याथ नीलादीनां समानता ॥ १७५ ॥

---

च तत्प्रत्यक्षम् । क्रियायास्तावत् प्रत्यक्षत्वमनन्तरमेव साधितम् । कारकमपि तद्वत् प्रत्यक्षमेव । शक्तिस्तु परोक्षा । सा च न तावदिह लिङ्गम् । न चानुमेया । अतः क्रियाकारकयोरुभयोरपि प्रत्यक्षत्वान्न दूरगमनम् । अनुमेयकर्मवादिनामपि हि फलाव्यवस्थानान्नानवस्था, नितरामस्माकमिति ॥ १७१ ॥

एवं तावदनुमानस्यासति सामान्यस्य वस्तुत्वे प्रत्यक्षत्वे च दौस्थित्यमुक्तम् । इदानीं सर्वमेव प्रमाणजातं सामान्यस्य दौस्थित्ये दुःस्थितमापद्येत तेषामपि सामान्याश्रयत्वात् । न च तदप्रमाणं वक्ष्यमाणन्यायादित्यभिप्रायेणाह—एवमिति ॥ १७२ ॥

अतोऽवश्यं प्रमाणान्तराणां प्रत्यक्षपूर्वकत्वमेष्टव्यं सामान्यस्य च प्रत्यक्षत्वम्, इतरथा त्वनवस्था प्राप्नोतीत्युपसंहरति— तस्मादिति ॥ १७३ ॥

एवं तावत् सामान्यस्य प्रत्यक्षत्वं वस्तुता चोपपादिता इदानीं विशेषा एव प्रत्यक्षेण गृह्यन्त इति ये वदन्ति, तान् प्रत्याह—प्रत्यक्षेति । विशेषो हि यदि तावदवयवी द्रव्यमभिमतः, स चावयववस्त्वन्तरापेक्षसामान्यांशोऽस्माभिः कीर्त्यत इति कथं प्रत्यक्ष इति ॥ १७४ ॥

यदि त्ववयविरूपादय एव विशेषा इष्यन्ते, तदप्ययुक्तम् । तेऽपि हि स्वविशेषनीलाद्यपेक्षया सामान्यमेवेत्याह—रूपादय इति ।

ते चापि तावत् सामान्यं यावत् स्युः परमाणवः ।
द्व्यणुकस्यापि यद्रूपं तद्धि साधारणं द्वयोः ॥ १७६ ॥
न चान्त्येन विशेषेण व्यवहारोऽस्ति कस्यचित् ।
न च प्रत्यक्षता तस्य सङ्घाते केवलस्य वा ॥ १७७ ॥
भेदेनागृह्यमाणस्य नाभेदो ग्राह्यतां व्रजेत् ।
न च भिन्नेष्वभिन्नत्वबुद्धेर्ग्राह्यत्वसम्भवः ॥ १७८ ॥

---

यदि तु नीलादय एव विशेषा इति मतम् । तन्न । तेषामप्यवान्तरनीलाद्यपेक्षया सामान्यरूपत्वादित्याह—स्वविशेषानिति ॥ १७५ ॥

यदि त्वेकभ्रमरादिद्रव्यनीलिमैव विशेष इष्यते, तन्न । तस्यापि पक्षादिस्वावयवाश्रितनीलविशेषापेक्षया सामान्यरूपत्वात् । पक्षनीलिम्नोऽपि तदवयवनीलापेक्षया सामान्यमेव । एवं च अपरमाणुभ्यः प्रसङ्गो दर्शयितव्य इत्याह—ते चापीति । निर्भागा हि परमाणव इति तद्रूपमसाधारणमेवेति । तेभ्यस्तु प्राक् द्व्यणुकरूपमपि द्वयोस्साधारणमित्याह—द्व्यणुकस्यापीति ॥ १७६ ॥

नन्वस्तु परमाणुरूपमेव विशेषः, स एव नः प्रत्यक्षो भविष्यतीत्यत आह—न चान्त्येनेति । व्यवहारार्थं हि प्रमाणमनुसिषते, न व्यसनितया । न चान्त्येन विशेषेण व्यवहारः कस्यचिदस्तीति किं तत्प्रत्यक्षतयेति । ननूपेक्षाफलमपि प्रमाणं भवत्येव, अत आह—न चेति । न नः परमाणूनां रूपं स्थूले वर्तमानानां तन्तूनामिव पटे प्रत्यक्षं विभक्तानां वेति न कथञ्चिद् विशेषविषयता प्रत्यक्षस्येति ॥ १७७ ॥

ननु परमाणव एव भिन्नास्सञ्चिता गृह्यन्ते न कार्यद्रव्यमेकम् । अतः कथं तत्सावयवेषु सामान्यमित्युच्यते । सञ्चिता एव चानन्यवृत्तितया विशेषासाधारणादिपदवाच्या इति ते प्रत्यक्षा भविष्यन्ति । मा नामैकैकतः परमाणुरक्षगोचरो भवेदत आह—भेदेनेति । एको हि सर्वदा सर्वेषां च भावः प्रकाशते न परमाणुभेदाः । न च भेदेनागृह्यमाणोऽभेदो गृह्यत इति साम्प्रतम् । संविद्विरोधादिति भावः । अन्वयमेव भेदा-



समुदायो न चाप्यस्ति भवतां न च सर्वदा ।
सर्वेषामसतार्थेन प्रत्ययोत्पत्तिसम्भवः ॥ १७९ ॥
न चैकजातियोगेन विनास्ति समुदायता ।
समुदायेऽपि चाणुत्वं नैतेषामपगच्छति ॥ १८० ॥
सामान्यमित्यदृश्येऽपि तेन सामान्य एव नः ।
व्यासङ्गिनी भवत्येषा धीर्विनाप्येककल्पनात् ॥ १८१ ॥

---

ग्रहो योऽयमभिन्नप्रकाशः, किं भेदग्रहणेनात आह—न च भिन्नेति । नाभिन्नाकारबुद्धिबोध्यो भेदः, भेदाभेदविवेकानुपपत्तेरिति भावः ॥ १७८ ॥

नन्वसत्यप्येकस्मिन् समुदायालम्बनोऽयमभिन्नावभासो भविष्यतीत्यत आह—समुदाय इति । ये हि सामान्यमेव सर्वजगत्संविदितमपलपन्ति कुतस्तेषां समुदायो नामार्थान्तरं, यदालम्बनोऽभिन्नप्रतिभासो भविष्यति । अपि च सर्वदा सर्वे चैकं द्रव्यमवबुध्यन्ते कथं तदन्यथा भविष्यतीत्याह—न च सर्वदेति ॥ १७९ ॥

किञ्चायं समुदायोऽपि नैकजात्या विनोपपद्येत । न हि नानाजातीयेषु वृक्षघटलोष्टेषु कस्यचित् समुदायबुद्धिरस्ति । अतस्समुदायेऽपीष्यमाणेऽणुत्वसामान्यमभ्युपगन्तव्यमापद्येत भवतामित्याह—न चेति । हेतौ चः ॥ १८० ॥

ननु नानेकावयववृत्त्यनुसन्धानेन विना तत्सामान्यरूपं द्रव्यमभ्युपगन्तुं शक्यम् । न चैन्द्रियकं ज्ञानमेता(वि? व)ति समर्थमविकल्पकत्वात् । अत आह—सामान्यमितीति । यद्यप्यनेकानुगमकल्पतेस्तन्नानावयवव्यासङ्गि द्रव्यं सामान्यमित्येवं विकल्प्य न गृह्यते । तथापि तदेकरूपं तावन्निर्विकल्पकेनापि गृह्यत एवेति नापह्नोतुं शक्यत इति व्यासज्यवृत्त्यवयविसामान्यन्यायेन प्रतिव्यक्तिवर्तिनोऽपि गोत्वादिसामान्यस्यैन्द्रियकत्वं दर्शयितव्यम् । तदपि सामान्यमित्यनेन रूपेणाग्राह्यं वस्तुतस्सामान्यमेव गृह्यते । शब्दादिस्मरणोत्तरकालं त्वनेकानुगमावमर्शात् सामान्यमिति विकल्प्य गृह्यते । इदं च सविकल्पकसिद्धावुक्तमेव । अतो नैवं वाच्यम्—अस्त्ववयविसामान्यस्य स्वलक्षणापरनाम्न इन्द्रियैर्ग्रहणम्, न तु प्रतिव्यक्तिनिवेशिन इति ॥ १८१ ॥

o

व्यासज्य वर्तमानस्य सामान्यस्य यथेन्द्रियैः ।
ग्रहणं तद्वदेव स्यात् प्रतिव्यक्तिनिवेशिनः ॥ १८२ ॥

मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः ।
यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद् भवान् ॥ १८३ ॥

समूहरूपं प्रत्यक्षमहश्यैः परमाणुभिः ।
योऽपह्नुते शशस्यापि सोऽभावं शृङ्गतो वदेत् ॥ १८४ ॥

---

उभयत्रापि प्रत्ययाविशेषादित्याह—व्यासज्येति । तदनेनैतदापादितम्—किमिदं मुधैव सामान्यस्य प्रत्यक्षता नेष्यते, विशेषमपि हि प्रत्यक्षमिच्छद्भिर्बलात्सामान्यमेव प्रत्यक्षमाश्रयणीयम्, सर्वस्य हि सुनिपुणं निरूप्यमाणस्य रूपादेस्सामान्यरूपत्वाद्, द्रव्यस्य च नानावयवसाधारणस्य तद्रूप्यात्, स्वतन्त्रं परमाणुसञ्चयमात्रस्य चानुपलम्भाद् द्रव्यापलापे च प्रत्यक्षविरोधात् । अतोऽवयविसामान्यं तत्समवेतानि च गोत्वादिसामान्यानि सर्वाण्येव प्रत्यक्षाणि न विशेषा एवेति तात्पर्यम् । एवम्परत्वादेव च प्रदेशान्तरसिद्धसामान्यावयविसामान्यप्रत्यक्षताप्रतिपादनेन न पुनरुक्तता चोदनीयेति ॥ १८२ ॥

ननु भवद्भिर्मीमांसकैस्तावदवश्यमभ्युपगन्तव्याः परमाणवः । अतस्तेषामेवोभयसिद्धानां परस्परैकाकारबुद्धिजननशक्तिमात्रमेवोपकल्पितम् । किं धर्मिकल्पनया । लघीयसी हि तत्कल्पनातो धर्मकल्पना । अत आह — मीमांसकैश्चेति । अयमभिप्रायः । यद्धि प्रमाणेनोपनीयते, तदस्माभिरिष्यते, न च स्थूलं हित्वा परमाणव एवाक्षजायां बुद्धौ भासन्ते, यत्तानुपेत्य स्थूलमवजानीमहे । तदानुगुण्येन तु यवणवो व्या(प्र?पा)द्यन्ते, भवन्तु, न तद्बलेन मूलभूतं स्थूलमपलपितुमुत्सहामह इति ॥ १८३ ॥

प्रत्यक्षं तु स्थूलमदृश्यैः परमाणुभिः निह्नुवानस्य शशोऽपि तद्विषाणधिया निह्नोतव्यः प्राप्त इत्याह — समूहरूपमिति ॥ १८४ ॥



समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका ।
यदि नामावगम्येत परमाण्वस्तिता पुनः ॥ १८५ ॥

तस्माद् यद् गृह्यते वस्तु येन रूपेण सर्वदा ।
तत्तथैवाभ्युपेतव्यं सामान्यमथवेतरत् ॥ १८६ ॥

सत्तादिसामान्यमपेक्ष्य सर्वं
गोत्वाद्यसाधारणतामुपैति ।
तस्मादसाधारणमक्षगम्यं
वदन् न सामान्यमपह्नुवीत ॥ १८७ ॥

सामान्यरूपेण न गृह्यते चेत्
किं वास्त्यसाधारणबुद्धिरत्र ।

---

किमिदानीं शशविषाणकल्पाः परमाणवः । नेत्याह — समूहेति । अत्र कल्पनालाघवेन प्रत्यक्षसिद्धो धर्मी परित्यागमर्हति । सिद्धे च स्थूले तदनुगुणाः परमाणव इति केन नेष्यते । सिद्ध्युपायस्तु तेषामन्यो नास्तीति परमाणवो नावश्यमिष्यन्त इत्युक्तं भवति ॥ १८५ ॥

अतो यदेव वस्तु सामान्यविशेषयोरपरोक्षं गृह्यते, तत् तथैवापरोक्षमेवाभ्युपगन्तव्यम्, न तु विशेष एव प्रत्यक्षो न सामान्यमिति वाच्यमित्युपसंहरति — तस्मादिति ॥ १८६ ॥

अस्तु वासाधारणमेव प्रत्यक्षं, तथापि न सामान्यस्य प्रत्यक्षतां निहोतुं शक्यते । गोत्वादिसामान्यानामपि सत्तादिपरसामान्यापेक्षयासाधारणत्वात् । अतो यद्यसाधारणं प्रत्यक्षमित्याग्रहो भवतामेवमपि न गोत्वादिसामान्यमप्रत्यक्षमिति प्रत्यक्षसामर्थ्यसिद्धत्वान्न शक्यमपह्नोतुमित्याह— सत्तादीति ॥ १८७ ॥

यदि तूच्यते प्रत्यक्षेण गृह्यमाणमपि सामान्यं न सामान्योल्लेखेन गृह्यत इति (न) प्रत्यक्षमिति, तदेतदाशङ्कते — सामान्येति । परिहरति — किं वेति । एवं ह्यसाधारणमपि न प्रत्यक्षं भवेत् । तत्रापि निर्विकल्पका-

यद्वस्तु लोकः प्रतिपद्यतेऽस्मिन्
द्विधापि तच्छक्यत एव वक्तुम् ॥ १८८ ॥

इति अनुमानवार्तिकम् ॥

## अथ शब्दपरिच्छेदः ।

प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।
तदतिस्वरितेनेह किं शास्त्रादभिधीयते ॥ १ ॥

वस्थायां परव्यावृत्त्यकल्पनादसाधारणोल्लेखो नास्त्येवेति । यदि तु ताद्रूप्येणाविकल्पितमपि स्वरूपेण विकल्पकोऽवबुध्यत इति तत्प्रत्यक्षम् । एवं तर्हि द्व्याकारमेव संमुग्धं वस्तु लोकः प्रतिपद्यत इति परीक्षकैरुभयथापि तत् शक्यत एव वक्तुमिति सिद्धं द्व्याकारमेव वस्तु प्रत्यक्षेण गृह्यत इति । सिद्धं च सामान्यतस्सम्बन्धदर्शनमित्यभिप्रायेणाह — यद्वस्तु लोकः प्रतिपद्यतेऽस्मिन् द्विधापि तत् शक्यत एव वक्तुमिति । अस्मिन्निति प्रत्यक्षज्ञान इत्यर्थः ॥ १८८ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकाया-
मनुमानपरिच्छेदः समाप्तः ॥

---

### अथ शब्दपरिच्छेदः ।

अत्र प्रत्यक्षानुमानयोरपरीक्ष्यत्व उक्ते शास्त्रस्याप्यपरीक्ष्यताप्रतिपादनार्थं भाष्यम् — "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्" इति । ननु वृत्तिकारमते न परीक्षितव्यं निमित्तमिति प्रतिज्ञाय

१. 'किं वा शास्त्रेऽभि' मुद्रितपुस्तके पाठान्तरम्



प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि तदन्तर्गतं च शास्त्रमित्युक्तेः प्रत्यक्षाव्यभिचारेण परीक्षामाशङ्क्य तदव्यभिचार उक्तेऽनन्तरमेव शास्त्रस्यापरीक्षा प्रतिपाद्यत इति युक्तम्, तद्धि प्रकृतम्, किमनुमानेन व्यवधीयते । सत्यमेवम् । अयं तु तन्त्रान्तरानुसारेण क्रम आश्रितः । तथा हि नाप्रत्यक्षं प्रमाणमिति लोकायतिका मन्यन्ते । ते हि वैशेषिकाद्याश्रितप्रत्यक्षानन्तरानुमानप्रामाण्यप्रतिपादनेन प्रतिबोध्यन्ते । एवं हि वैशेषिकाः पठन्ति — द्विविधं प्रमाणमालोचिताध्यवसानमनालोचितानुगमनं चेति । तथान्येऽपि प्रत्यक्षमनुमानं च द्वे एव प्रमाणे इति । यथाक्षपादीयैरपि प्रत्यक्षानन्तरमनुमानं लक्षितम् — तत्पूर्वकं त्रिविधमनुमानमिति । तेनेहापि तावत् प्रत्यक्षानन्तरमनुमानं वर्णितम् । ततो महाविषयतया प्रकृतत्वेन पुरुषार्थौपयिकत्वेन च शास्त्रम् । तदनन्तरं च यत्र क्वचन वाच्ये बहूनां प्रसिद्धमित्युपमानमुक्तम् । न्यायविस्तरे हि प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमित्युक्तम् । ततः पाराशर्यमतेनार्थापत्तिरुक्ता । तदुत्तरकालमेव तन्मतानुसारिणा कृतकोटिनोक्तत्वात् । अभावप्रमाणस्य तु भावप्रमाणाभाव एवात्मेति तदुत्तरः प्रस्तावः । किं पुनस्तन्त्रान्तरानुसारस्य प्रयोजनम् । उच्यते । प्रसिद्धत्वेन ह्यपरीक्षा प्रतिपाद्यते । तन्त्रान्तरेष्वेवमिमानि प्रमाणानि प्रसिद्धानीति प्रसिद्धिप्राबल्यं कथितं भवति । व्युत्थिताश्च तेन तेन साक्षिणा प्रतिपादिता भवन्ति ॥

अत्र च शब्दविज्ञानादित्युच्यते, तत् कथं विगृह्यते । किं शब्दाद्विज्ञानं शब्दस्य वा विज्ञानमिति । पूर्वत्र समासानुपपत्तिः । भयेन हि पञ्चमी समस्यते । उत्तरत्र तु सविकल्पकप्रत्यक्षेऽपि शास्त्रत्वप्रसङ्गः, शब्दविज्ञानादेव हि गौरित्येवमादयोऽसन्निकृष्टार्थविकल्पा भवन्ति । अत्रोच्यते । षष्ठीसमास एवायम् । न च सविकल्पके प्रसङ्गः, न हि तच्छब्दप्रमाणादुत्पद्यते, अपि तु शब्दसहायादिन्द्रियात् । यथैव हि गन्धसहकृतमिन्द्रियं तैलाद् विलीनं घृतं विविनक्ति । एवं शब्दसहकृतं जात्यादीन् । तथा चाक्षसम्बन्धफलमपरोक्षावभासिता । त(त्र ? च) सविकल्पकेऽस्तीत्युक्तं प्रत्यक्षान्ते । अतो यदेव शब्दशक्तिविमर्शोत्थं विज्ञानमसन्निकृष्टार्थगोचरं तच्छाब्दम् । अत एव न पदार्थमात्रज्ञानं शाब्दम् । न हि तदसन्निकृष्टार्थगो-

सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥ २ ॥

यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।
अविशिष्टं विशिष्टस्य न तत् शास्त्रस्य लक्षणम् ॥ ३ ॥

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ ४ ॥

---

चरम् । वक्ष्यति हि— 'स्मारकान्न विमृश्यत' इति । किं नाम तर्हि शाब्दम्, वाक्यार्थज्ञानमिति वदामः । न (नु) तत्पदार्थज्ञानादुत्पद्यते, न शब्दज्ञानात् । न । अवान्तरव्यापारत्वात्पदार्थप्रतिपादनस्य शब्दानाम्, पाक इव काष्ठानां ज्वलनस्य । वक्ष्यति हि—

पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।

इति । अतो न किञ्चिदनुपपन्नमिति ।

इदं तु वक्तव्यं किमिदं सामान्यलक्षणावसरे विशेषलक्षणं प्रणीयते शब्दविशेषो हि शास्त्रम् । तद् यदि वक्तव्यम्, एवमपि सामान्यलक्षणमुक्त्वा (वक्ष्यते ? लक्ष्येत) । यत् पुनरतित्वरितेनैव सामान्यलक्षणावसरे विशेषो लक्ष्यते तदसाम्प्रतम् । न हीह प्रत्यक्षादीनां चाक्षुषत्वादयो विशेषा लक्ष्यन्ते । ततः प्रत्यक्षादिषु सामान्यतो वक्तुमारब्धेषु मध्ये शब्दमात्रस्यैव लक्षणं वक्तुं युक्तम्, न शास्त्रस्येति । तदेतदाह — प्रत्यक्षादिष्विति ॥ १ ॥

दूषणान्तरमाह — सामान्येति । निर्ज्ञातसामान्यलक्षणो हि तद्विशेषं बोधयितुं शक्यो नेतरः । न ह्यलक्षिते द्रव्ये तद्विशेषाः पृथिव्यादयो लक्षयितुं शक्यन्त इति ॥ २ ॥

एवं तावत् शास्त्रमिति लक्ष्यनिर्देशोऽनुपपन्न इत्युक्तम् । शब्दविज्ञानादित्यादि लक्षणमपि लक्ष्यविशेषे न सङ्गच्छत इत्याह — यच्चोक्तमिति ॥ ३ ॥

कीदृक् तर्हि शास्त्रलक्षणमत आह—प्रवृत्तिरिति । प्रवृत्तिनिवृ-



स्वरूपकथनं यत्तु कस्यचित् तत्र दृश्यते ।
तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥ ५ ॥

भावनायां समस्तायां वाक्यादेवोपजायते ।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद्यतः ॥ ६ ॥

---

त्युपदेशकं हि नित्यं वेदवाक्यमनित्यं धर्मशास्त्रादिकं शास्त्रमुच्यते न शब्दमात्रमिति ॥ ४ ॥

ननु स्वरूपमात्राभिधायिनामपि क्षेपिष्ठादिवाक्यानां शास्त्रत्वमिष्यते, किमुच्यते प्रवृत्तिनिवृत्त्यङ्गं शास्त्रमिति । अत आह— स्वरूपेति । तदङ्गत्वेनेति । विधायकवाक्यैकदेशत्वेनेत्यर्थः । अस्ति हि तत्रापि "वायव्यं श्वेतमालभेत भूतिकाम" इति विध्युद्देशः । तेनैकवाक्यभूतो "वायुर्वै क्षेपिष्ठे"त्येवमादिः । अतो युक्तं तस्यापि शास्त्रत्वमिति ॥ ५ ॥

नन्वर्थवादा न तावत् साक्षात् क्रियां प्रतिपादयन्ति । नापि तदंशम् । त्रयोऽपि हि तदंशाः साध्यं साधनमितिकर्तव्यता चेति । न चैषामन्यतममभीभिरभिधीयते । अतोऽक्रियार्थानामेकवाक्यतामेव न मन्यामहे । अत आह—भावनायामिति शास्त्रमित्यन्तेन । अयमभिप्रायः— यद्यपि न क्रियां गमयति, न च क्रियासम्बद्धं किञ्चित् साधनादि, तथापि विधिना शब्दभावनापरनामधेयेन सहैषामेकवाक्यता । विधिर्हि पुरुषं प्रवर्तयितुं विषयप्राशस्त्यज्ञानमपेक्षते । तच्चार्थवादाश्शक्नुवन्ति कर्तुमिति तत् कुर्वतामेषामस्ति प्रवृत्तिनिवृत्त्योरुपयोगः । अतस्समस्तायां त्र्यंशपूर्णायामेव भावनायां महावाक्यादेव सार्थवादकात् पुरुषः प्रवर्तते निवर्तते वा न विध्युद्देशमात्रादिति सार्थवादकमेव वाक्यं शास्त्रमिति । एतच्चार्थवादाधिकरणे प्रपञ्चयिष्यामः । दर्शितं च किञ्चिद् विधिविवरणे इत्यलमनेनातिपरिस्पन्देनेति । यत एव सार्थवादकात् प्रवृत्तिनिवृत्तिज्ञानम्, अत एव विधिवाचिनः प्रत्ययमात्रस्य पदमात्रस्य वा यजेतेत्येवमादिकस्य विधिश्रुतावपि न शास्त्रत्वम् । यत्र हि त्र्यंशभावनावचनमप्यनान्तरवाक्यमनपेक्षितार्थवादकं न प्रवृत्तौ समर्थं, कथमिव तत्र पदप्रत्यययोश्शक्तिर्भविष्यतीति दुरधिगममित्याह— न पदाद्यत इति ॥ ६ ॥

अपरीक्षाभिषेणापि लक्षणानि वदन्नयम् ।
न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ॥ ७ ॥

तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् ।
वेदं व्याख्यातुकामस्य तन्नातीवोपयुज्यते ॥ ८ ॥

प्रत्यक्षाद्युपयोगं तु वर्णमात्रादितः पुरः ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥ ९ ॥

---

एवं लक्ष्यलक्षणानुपपत्त्या दूषितं भाष्यमुपपादयति — अपरीक्षेति । अयमभिप्रायः — वेदव्याख्या हि प्रकृता, अतो यदेव तदुपयोगि तदेव वाच्यमित्यतिक्रम्यापि सामान्यप्रक्रमं विशेषमेव लक्षितवान् । न हीह लक्षणकरणमेव स्वरूपेण विवक्षितम् । अपरीक्षाच्छलेन हि लक्षणानि प्रणीयन्ते । तत्रापि यदेव प्रकृतोपयोगिशास्त्रलक्षणं तदेव कृतम् । स्वतन्त्रो वेदः अपुरुषतन्त्रत्वादिति ॥ ७ ॥

यदि स्वतन्त्रोपयोगित्वनिरपेक्षाणि न जल्पति, ततः किमत आह— तत्रेति । यदा ह्ययं जल्पाक इव नानुपयुक्तं भाषत इति स्थितम्, तत्र यदि लोकवाक्यस्थितं शब्दलक्षणं कथयेत् तदस्य वेदं व्याचिख्यासोरनुपयुक्तं स्यादिति ॥ ८ ॥

ननु यद्यनुपयुक्तं न लक्षणीयं, किमिति तर्हि प्रत्यक्षादि लक्ष्यते न हि तेषां वेदोपयोगो दृश्यते अत आह— प्रत्यक्षादीति । अयमभिप्रायः — वेदस्वरूपावधारण एव तावन्महानुपकारः प्रत्यक्षस्य, नहि तदन्तरेण पुरः — प्रथममेव स्वाध्यायग्रहणकाले वर्णमात्राद्यवधारयितुं शक्यते, तदा चानवधृतं शास्त्रार्थज्ञानवेलायामस्मृतत्वान्नोपयुज्येतैव । अतः पुरस्तात् परस्ताच्च वर्णमात्रादितः कृते प्रत्यक्षाद्युपयोगं मत्वा तल्लक्षणं कृतम् । अनुमानमपि प्रतीकविनियुक्तमन्त्रशेषानुमान उपयुज्यते । यथा देवस्य त्वेति निर्वपतीति । उपमानमपि सौर्यादिकर्मणां प्रकृतिविशेषोपमाने । अर्थापत्तिरप्यश्रुतवाक्यैकदेशकल्पनायाम् । अभावोऽपि पदवाक्येयत्तावधारणे द्रव्यदेवताद्यभावेन च कर्मणामव्यक्तचोदनात्वावधारण उपयुज्यत इति द्वयोरादिशब्दयोरर्थ इति ॥ ९ ॥



यत्तु गामानयेत्यादिवाक्यस्थं शाब्दलक्षणम् ।
तस्य नेहोपयोगोऽस्ति तस्माच्छास्त्रगतं कृतम् ॥ १० ॥

विशेषश्च न सामान्यमन्तरेणास्ति कश्चन ।
तस्मात् तमप्युदाहृत्य सामान्यं लक्षयेत् सुखम् ॥ ११ ॥

सामान्यरूपमप्येतदधिकाराद् विशिष्यते ।
चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ॥ १२ ॥

यथा च चोदनाशब्दो वैदिक्यामेव वर्तते ।

---

न चैवंजातीयकः कश्चिदुपयोगो गामानयेत्यादिवाक्यस्थस्य शब्दलक्षणस्यास्तीति तदुपेक्ष्यैव शास्त्रगतमेव लक्षणं प्रणीतमित्याह— यत्त्विति ॥ १० ॥

यत्पुनरलक्षिते सामान्ये न विशेषो लक्षयितुं शक्यत इत्युक्तं तत्परिहरति— विशेषश्चेति । सामान्यलक्षणे हि विशेषो न सिध्यति, व्यभिचारात् । विशेषस्तु सामान्याव्यभिचारीति तस्मिन् लक्षिते तदन्तर्गतं सामान्यं सुखमेव लक्षितं भवेत् । यदा हि विधायकविज्ञानादसन्निकृष्टेऽर्थे विज्ञानं शास्त्रमित्युक्तं तदार्थाद् विधायकविशेषरहिताच्छब्दमात्रज्ञानाच्छाब्दमिति शक्यमवगन्तुमिति न पृथगुच्यत इति ॥ ११ ॥

ननु नेदं विशेषलक्षणं विशेषोपादानाभावादित्युक्तम् । अत आह— सामान्येति । नावश्यमुपात्तमेव विशेषणं भवति, किन्तु अधिकारलभ्यमपि, यथाग्नेयादिषु वक्ष्यते, त(द्व)दिहापि चोदनालक्षणाधिकाराच्छब्दविज्ञानादित्युक्तेऽपि विधायकविशेषणं प्रत्येष्यत इति । ननु यदि प्रकृतोपयोगि वक्तव्यं, एवं तर्हि चोदनालक्षणमेव वाच्यम्, किं शास्त्रलक्षणेनात आह— चोदनेति । पर्याया एत इति भावः ॥ १२ ॥

अयं चाधिकारतो विशेषलाभो जैमिनेरप्यनुमतश्चोदनाशब्दमविशेषितं द्वितीये सूत्रे प्रयुञ्जानस्येत्याह — यथा चेति । एवं हि मन्यते—यद्यपि चोदनाशब्दः प्रवर्तकवाक्यमात्रवचनः, तथापि प्रथमसूत्रेऽथशब्देन वेदा-

**शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥ १३ ॥**

**प्रत्यक्षाद्यपरीक्ष्यत्वे तदन्तर्भावहेतुकम् ।**
**शास्त्रस्याप्यपरीक्ष्यत्वमनयैव धियोदितम् ॥ १४ ॥**

---

ध्ययनानन्तर्यस्योपात्तत्वात् तदधिकारादेव चोदनाशब्दो वैदिक्यामेव चोदनायामवतिष्ठते, एवमिहापि शास्त्रलक्षणे चोदनाप्रामाण्याधिकारात् शब्दविज्ञानार्थज्ञानशब्दौ विशिष्टशब्दार्थपरौ, विधायके शब्दशब्दो विधेये चार्थशब्द इति ॥ १३ ॥

यद्यपि वृत्तिकारमतोपन्यासावसरे 'प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि तदन्तर्गतं च शास्त्रम्' इति भाष्यकारेणोक्तं तथापि विशेषणापरीक्षाप्रतिज्ञानं प्रकृतोपयोगित्वाभिप्रायेणैवेति दर्शयति—प्रत्यक्षादीति । इदं तु चिन्तनीयम् । यदि विधायकशब्दजनितं विज्ञानं शास्त्रम्, किमिदानीमङ्गानि मीमांसा कर्मानुशासनानि च न शास्त्राणि, लौकिकानि च गामानयेत्यादिवाक्यानि शास्त्राणि । यद्येवं महान् लोकविरोधः । न हि लौकिका गामानयेत्यादिषु शास्त्रशब्दमुपचरन्ति । स्ववचनविरोधश्च । यतो गामानयेत्यादिवाक्यस्यैव शाब्दलक्षणमिति हि वदन्ति । मीमांसादिषु वेदवत् ततोऽपि वा प्रातिशयं शास्त्रशब्दोपचारमुपलभामहे । अपि चायं शास्त्रशब्दो रूढो वा स्याद् यौगिको वा, सर्वथा न वेदाङ्गादिषु वर्तितुमर्हति । अस्ति हि तेषु यथायथमर्थानुशासनं, रूढिश्च सातिशयेति वर्णितम् । अत्राभिधीयते । योगरूढिरियं पङ्कजादिवत्, अतो न तावद्गामानयेत्यादिष्वतिप्रसज्यते । तत्रापि योगे लौकिकानां तेष्वप्रयोगात् । पुरुषार्थोपदेशानेव लौकिकाश्शास्त्रमिति मन्यन्ते । तथा चाङ्गानीति तेषां शास्त्रत्वम् । ननु विधायकं शास्त्रमिति शास्त्रलक्षणम्, न च तानि कञ्चिद् विदधति । नैवम् । सर्वेषामेवानुष्ठानोपदेशपरत्वात् । व्याकरणे हि यत्साधुभिर्यापेत तदभिरित्युपदिश्यते । मीमांसायामपि प्रत्यधिकरणं न्यायव्युत्पादनेनानुष्ठानोपदेश एव सर्वत्र । अतो यच्छास्त्रं तत्प्रवृत्तिनिवृत्त्युपदेशकमेवेति नियमः, न पुनस्तदुपदेशकं शास्त्रमेवेति लौकिकी प्रसिद्धिरिह भाष्यकारेणानूदिता, न पुनस्तन्निरपेक्षं शास्त्रलक्षणं प्रणीतम् । अतो यदसन्निकृष्टार्थ-



**तत्रानुमानमेवेदं बौद्धवैशेषिकैः श्रितम् ।**
**भेदः साङ्ख्यादिभिस्त्विष्टो नतूक्तं भेदकारणम् ॥ १५ ॥**

**पूर्वसंस्कारयुक्तान्त्यवर्णवाक्यादिकल्पना ।**
**विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता ॥ १६ ॥**

---

परं पुरुषश्रेयोविधायकं वाक्यं लोके शास्त्रमिति प्रसिद्धं तच्छास्त्रम् । पुनरसन्निकृष्टार्थगोचरं विधायकमविधायकं वा तच्छाब्दमिति विवेकः । ...त्रापि शब्दतज्ज्ञानादिषु विवक्षातः प्रमाणविकल्पा दर्शयितव्याः । ...यं ज्ञानमेव प्रमाणमित्यभिनिवेष्टव्यम् । पूर्वप्रमाणे चोत्तरं वाक्यार्थज्ञानं फलं तत्प्रामाण्ये च हानादिबुद्धिरिति विवेक इति ॥ १४ ॥

इदं च शास्त्रमनुमानादभिन्नमिति प्रमाणद्वयवादिनो मन्यन्ते, तान्निराकर्तुकामस्तेषां मतमुपन्यस्यति — तत्रेति । इदं च प्रतिज्ञामात्रमेवोक्तम्, तदीयाभेदहेतूपन्यासस्तु परोक्तभेदहेतुनिरासावसरे करिष्यत इति । किं पुनरभेदोपन्यासनिरासयोः प्रयस्यते, नन्वयं साङ्ख्यादिभिरेव ...वादिभिरभेदो निराकृत एव, अत आह—भेद इति । न तैस्सम्यग्भेदकारणमुक्तमित्यर्थः ॥ १५ ॥

तानेव तदुक्तान् भेदहेतून्निराकर्तुमुपन्यस्यति— पूर्वसंस्कारैरित्यन्तेन । एवं हि तैरुक्तम् — शाब्दे हि पूर्वसंस्कारयुक्तोऽन्त्यो वर्णो, ...र्यं, आद्योऽपि वा वर्णः, सर्वे वा प्रत्येकं, सहिता वा, तेषामेव क्रमः ...र्तां वा वाक्यत्वजातिरेव सावयवी वा निर्धूतनिखिलवर्णादिविभागः ...धी वा पदान्येव वा संहतार्थमभिदधति । एते च पदेष्वपि विकल्पा ...यितव्याः । तथा विवक्षाप्रयत्नादयश्च शब्दनिष्पत्तिहेतव इति । सर्वे ...र धूमादौ न दृष्टमिति तद्वैधर्म्याद(न)नुमानत्वमिति । अत्र दूषणमाह— ...मेति । बौद्धेन शाब्दमनुमानादभिन्नमन्वयव्यतिरेकाभ्यामुत्पत्तेः, धूमाद्यनुमानवदित्युक्ते, यदेतद् धूमादिवैधर्म्येण प्रत्यवस्थानम्, इयं ...र्म्यसमा नाम जातिः, विकल्पसमा वा । का पुनर्जातिः । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । वादिना हि प्रयुक्ते प्रयोगे प्रसङ्गो जायते, स जायत इति जातिरित्युच्यते, स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम् ।

यैरुक्ता तत्र वैधर्म्यविकल्पसमजातिता ।
धूमानित्यविषाण्यादिविशेषान्न हि भिन्नता ॥ १७ ॥

यत्रोदाहरणसाधर्म्येण वादिना हेतुरुक्तः, तत्र यदा प्रतिवादिनो वैधर्म्येण प्रत्यवस्थानं भवति । यथा — क्रियावानात्मा क्रियाहेतुगुणयोगात् लोष्टवदिति वादिनोक्ते, प्रतिवादिनो वैधर्म्येण प्रत्यवस्थानं भवति — यथा क्रियावद् द्रव्यमविभु दृष्टम् , यथा लोष्टम् , न तथाऽऽत्मा, तस्मान्निष्क्रिय इति । सेयं वैधर्म्यसमा जातिरित्युच्यते । तथा धर्मान्तरविकल्पात् । यदा प्रतिवादिना साध्य (ध) र्मस्यापि विकल्प आपाद्यते, असौ विकल्पसमा नाम जातिरुच्यते । यथाऽस्मिन्नेव प्रयोगे प्रतिवादी वदति, क्रियाहेतुगुणयुक्तं किञ्चिदविभु दृष्टं यथा लोष्टम् , किञ्चिद् विभु यथात्मा, एवं किञ्चित् क्रियावद् भविष्यति किञ्चिदक्रियावदिति । एवमिहापि परेणाभेदसाधने उक्ते धूमादिवैधर्म्यमात्रेण प्रत्यवस्थाने वैधर्म्यसमा नाम जातिरापाद्यते । धूमादग्न्यनुमानं हि वाक्यविकल्पादिरहितम् । न च तथा शाब्दम् । अतो नानुमानमिति । तथा विकल्पसमाप्येवं दर्शयितव्या । अन्वयव्यतिरेकजमेव किञ्चिद् वाक्यविकल्पादिमद् दृष्टं यथा शाब्दम्, किञ्चिच्च न, धूमादिनाग्निज्ञानम् । एवं किञ्चिदनुमानं भविष्यति, किञ्चिदननुमानमिति । जातिद्वयप्र(तिपादनात्प्र)त्युत्तरं च साधकमिति न वचनीयमिति ॥ १६½ ॥

कथं पुनरियं जातिः, एवं हि साधनमिदम्— शाब्दमनुमानाद् भिन्नं तद्वैधर्म्यात् प्रत्यक्षवदिति, अत आह—धूमेति । न तावत् त्रैलक्षण्यप(रित्यागेन) वैधर्म्यं तैरुक्तम् । किञ्चिद् विशेषणमात्रेण तु वैधर्म्यमविशिष्टमर्थात्मकानामनुमानानामिति तेषामप्यनुमानाद् भेदो भवेत्, न चासावस्ति, न हि धूमादीनां .... .... .... ... ... .... .... .... त्रैलक्षण्यमित्यननुमानता भवति । त्रैलक्षण्यापरित्यागादनित्यत्वं कृतकत्वे हेतुरिति । त्रैलक्षण्यपरित्यागप्रतिपादने (प्य? ह्य)नुमानाद् भेदः सिध्यतीति ॥ १७ ॥



त्रैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते ।
तावद्विशेषमात्रेण वदतो जातिता भवेत् ॥ १८ ॥

यथेष्टविनियोगेन प्रतीतिर्यापि शब्दतः ।
न धूमादेरितीहापि व्यभिचारोऽङ्गवृत्तिभिः ॥ १९ ॥

त्रैलक्षण्यमात्रेण तु भेदं वदतो वैलक्षण्यवचनस्य जातितैवापद्येतेत्याह— त्रैलक्षण्येति ॥ १८ ॥

यदपि चेदमपरं शाब्दानुमानयोर्वैलक्षण्यमुक्तम् — धूमादयो हि स्वाभाविकेनैव प्रतिबन्धेन प्रतिबन्धकबुद्धिमनुमाने जनयन्ति, शब्दात्तु यथेष्टविनियुक्तादेवार्थप्रत्ययो दृश्यते, अतो भेद इति, तत्राप्याह— यथेति । अयमभिप्रायः — अत्रापि यदि किञ्चिद्वैधर्म्यमात्रेण भेद उच्यते, अतो जातिरेव । अथायं प्रयोगः— शाब्दमनुमानाद् भिन्नं यथेष्टविनियोगेनार्थप्रतिपादनादक्षवद् । अक्षं हि चक्षुरादि यत्रैव व्यापार्यते, तदेव प्रतिपादयतीति । तदयुक्तम् । तत्रापि स्वाभाविक्यैवात्मशक्त्या रूपादिप्रतिपादनात् । अथ स्वगोचरे यथेष्टविनियोगेन प्रतिपादनं हेतुरुच्यते, अतो लिङ्गमपि परार्थप्रयोगे यमेव प्रति प्रयुज्यते तमेव प्रतिपादयतीति समानम् । अथ यथेष्टविनियोगः सङ्केतोऽभिधीयते, ततोऽप्यसिद्धो भवति, यत्रैव सङ्केत्यते तमेव गमयतीति, ततो दृष्टान्ताभावः, न हि शब्दादन्यत् सङ्केतानुविधानेनार्थं बोधयति । अथावीतहेतुरयम् । अनुमानं हि यथेष्टविनियोगाननुविधायिप्रतिपादनम्, न चेदं तथा, अतो भिन्नमिति । तन्न । व्यतिरेकमात्रस्यागमकत्वादन्वयव्यतिरेकी हि हेतुरिष्यते । न चायं हेतुरनुमानादभेदेन व्याप्तः क्वचिदवगतः, शब्दातिरेकिणः कस्यचिद् यथेष्टविनियोगेनाप्रतिपादनात् । अथास्ति हस्तसङ्केतादीनां यथासमयं प्रतिपादनमित्युच्यते । तत् तर्हि प्रमाणान्तरमनुमानं वा । न तावत् प्रमाणान्तरम्, तल्लक्षणाभावात् । अतो व्याप्तिबलेन ज्ञायमानमनुमानमेव तत् । एवं च सति तेनैव व्यभिचार इति नानुमानाद् व्यावृत्तिर्हेतोस्सिध्यति । तदिदमुक्तं व्यभिचारोऽङ्गवृत्तिभिरिति । अङ्गानां हस्तादीनामाकुञ्चनप्रसारणाद्या वृत्तयोऽङ्गवृत्तय इति ॥ १९ ॥

हस्तसंज्ञादयो येऽपि यदर्थप्रतिपादने ।
भवेयुः कृतसङ्केतास्ते तल्लिङ्गमिति स्थितिः ॥ २० ॥

पुरुषाक्षिप्ततायां च तथैव व्यभिचारिता ।
पदवैदिकवाक्यानां न सत्त्वव्यापिता भवेत् ॥ २१ ॥

---

एतदेव विवृणोति — हस्तेति । हस्ताद्यङ्गाश्रितवृत्तय एवार्थविशेषज्ञानाङ्गतया हस्तसंज्ञेत्युच्यन्ते । कथं पुनरिदमनुमानम्, न हि हस्तादिसन्निवेशास्सङ्ख्याविशेषादिभिरर्थैर्व्याप्ताः । तैर्विनापि कदाचिद्भावात् । किन्तु अङ्गुल्यादिसन्निवेशात्सङ्केतकालभाविशब्दस्मरणेनार्थं प्रतिपद्यमानाः शब्दादेव प्रतिपद्यन्ते । तन्न । अन्तरेणापि शब्दसङ्के(त ? तं) व्यवहार एवाव्युत्पन्नस्याङ्गुल्यादिसन्निवेशदर्शिनस्तदर्थावगतेः । न चात्र व्यभिचारः । न हि यादृशे सन्निवेशे व्याप्तिरवगता तादृशस्य व्यभिचारो दृश्यते । तदिदं 'तेन धर्म्यन्तरेष्वेवे'त्यत्र वर्णितम् । अतोऽनुमानमेवेदम् । तदिदमुक्तं — ते तल्लिङ्गमिति स्थितिरिति । सर्वं चेदमन्वारुह्य वार्तिककारेण दूषणं दत्तम् । न हि यथेष्टविनियोगेन शब्दादर्थप्रतीतिर्भवति । गवादिशब्दा हि निजशक्त्यनुसारेणैव स्वार्थं प्रतिवेदयन्ति । यदृच्छाशब्दास्तु हस्तसंज्ञादितुल्यास्ते सङ्केतानुसारेणार्थं बोधयन्तोऽनुमानमेवेति किं तद्भेदप्रतिपादनेनेति ॥ २० ॥

इदमपरं भेदकारणं, शब्दाद्धि पुरुषापेक्षोऽर्थनिश्चयः, लिङ्गं तु स्वमहिम्नैवार्थं निश्चाययति, अतस्तद्वैलक्षण्याद् भेद इति । अयमपि अवीतहेतुः । एवं च वक्तव्यम् — न पुरुषापेक्षोऽनुमानेऽर्थनिश्चयः, न च तथा शब्द इत्यतो भिद्यत इति । एतदपि दूषयति — पुरुषेति । व्यतिरेकहेतुर्व्यतिरेकपुरस्कारेणैवार्थं साधयति, प्राणादय इवानात्मकाद् देहाद् व्यावृत्तमात्मानम् । पुरुषापेक्षिता त्वनुमानेऽप्यर्थनिश्चयाङ्गभङ्गवृत्तिषु दृष्टा । यादृशो हि सङ्केतो यदर्थप्रतिपादने पुरुषैः कृतः, तमेव परपुरुषापेक्षया बुध्यन्ते । अतोऽत्रापि व्यभिचारितेति । अपि चाव्यापकत्वादासिद्धो हेतुरित्याह — पदेति । पदानि हि स्वमहिम्नैवार्थं प्रतिपादयन्ति न पुरुषापेक्षया ।



सम्बन्धानुभवश्चायं सोऽन्यत्रापि विलक्षणः ।
एतस्मिन् पुरुषापेक्षो देशापेक्षोऽग्निधूमयोः ॥ २२ ॥

कालाद्यपेक्षया चान्य उक्ता चान्यैरभिन्नता ।
आप्तवादाविसंवादसामान्यादनुमानतः ॥ २३ ॥

---

वेदवाक्यान्यपि न स्वार्थप्रतिपादनाय पुरुषमपेक्षन्ते, स्वरूपावधारणमात्र एव तेषामाप्तापेक्षेति ॥ २१ ॥

ननु नागृहीतसम्बन्धं पदं प्रत्यायकं भवति । न च पुरुषानपेक्षा सम्बन्धावगतिरस्ति । वेदवाक्यान्यपि नागृहीते पदपदार्थसम्बन्धे स्वार्थं प्रतिपादयन्ति । अतोऽयं पदपदार्थसम्बन्धः पुरुषापेक्ष एवेति नाव्यापकत्वम् । अत आह — सम्बन्धेति । अयमभिप्रायः — अर्थप्रतिपादने तावदनपेक्षमेव पदं वैदिकानि च वाक्यानि । सम्बन्धानुभवश्च यथेह पुरुषापेक्षस्तथान्यत्राप्यनुमानेऽसौ विलक्षणो दृश्यत एवेति । वैलक्षण्यमेव दर्शयति — एतस्मिन्निति अन्योऽन्येन । एतस्मिन्निति । हस्तसंज्ञादौ पुरुषापेक्षः, पौरुषेयो हि समयः । अग्निधूमयोस्तु देशापेक्षः । चन्द्रोदयसमुद्रवृद्ध्योस्तु कालापेक्षः । आदिशब्देनावस्थापेक्षितां दर्शयति । तदनेनैतदुक्तं भवति — अनुमानेऽप्यनेकप्रकारस्सम्बन्धावगमो देशाद्यपेक्षया भेदात् । एवमिहापि पुरुषापेक्षो भविष्यति । अनुमानेऽपि तदपेक्षस्सम्बन्धबोधो दृष्ट इति । अपि च परोक्तभेदहेतुनिरासोऽपि तैर्न कृत इत्याह — उक्ता चेति ॥ २२½ ॥

तमेवाभेदहेतुमुपन्यस्यति — आप्तवादेति । अयमर्थः — यथा धूमादिषु भेदहानेन सामान्यधर्मयोर्व्याप्तिरवगम्यते, एवं शब्देऽप्याप्तवादाविसंवादसामान्ययोर्व्याप्तिरवगता । (आप्तवादाविसंवादेति ?) एवं च विदित्वा वेदेऽपीश्वराप्तवादत्वादविसंवादोऽनुमीयते, अतोऽनुमानमेवेदम् । यावच्चाविसंवादो नानुमीयते तावदर्थगोचरं ज्ञानमुत्पन्नमप्यनिश्चायकत्वादप्रमाणमेव । सामान्यशब्दः प्रत्येकमभिसम्बध्यते । ल्यब्लोपे पञ्चमी ।

न चापूर्वादिशब्दानां भेदात् तत्रैव भिन्नता ।
न चेहाश्वादिशब्देभ्यो भेदस्तेषां प्रतीयते ॥ २४ ॥
न चाप्यज्ञातसम्बन्धं पदं किञ्चित् प्रकाशकम् ।
सम्बन्धानुभूत्यातो न स्यादनुमानता ॥ २५ ॥
तुल्याकारतयाप्यत्र शब्दज्ञानार्थलिङ्गिनाम् ।
अग्निधूमेष्वदृष्टत्वाच्च भेदस्तन्निवारणात् ॥ २६ ॥

---

तदयमन्वयो भवति — यद्यप्याप्तवादाविसंवादविशेषाणां भेदाच्च सम्बन्धोऽवगन्तुं शक्यते, तथापि तयोस्सामान्यप्रतीत्यानुमानता शक्यते वक्तुम्, सामान्ययोर्व्याप्तिसम्भवादिति ॥ २३ ॥

नन्विदमस्ति भेदकारणम्, अनुमानं सम्बन्धावधारणाधीनम्, शब्दास्त्वपूर्वादयस्सम्बन्धज्ञानानपेक्षा एव स्वार्थं प्रतिपादयन्तीति, अतो भिद्यते इत्यत आह — न चेति । गवादयस्तावत् विदितसम्बन्धा एवार्थं प्रतिपादयन्तीति तेषां दुर्वारमनुमानत्वम्, यदि त्वपूर्वादिदृष्टान्तेन तेषामपि भेदोऽभिधीयते । तन्न । शक्नोति हि वक्तुमितरोऽपि तेषामनुमानत्वं सम्बन्धाधीनबोधकत्वाद् धूमादिवदिति । अपि चापूर्वशब्दा अपि नाश्वादिशब्देभ्यो विशिष्यन्ते, पदत्वेनाभेदादित्याह— न चेति ॥ २४ ॥

किमतो यद्येवमत आह — न चेति । यतः खल्वेतानि पदानि, न च पदमज्ञातसम्बन्धं प्रकाशकमस्ति । अतोऽमीभिरपि विदितसम्बन्धैरेवार्थो वेदनीयः, पदत्वात् । कथं पुनः प्रमाणान्तरादृष्टपूर्वेणापूर्वस्वर्गादिना सम्बन्धोऽनुभवितुं शक्यते । न शक्येतापि, यदि प्रमाणान्तरागोचरता भवेत् । अपूर्वं तु श्रुतकर्मफलसम्बन्धान्यथानुपपत्तिप्रमाणकम् । स्वर्गश्च निरतिशयानन्दस्वभावो वैदिकवाक्यशेषेभ्योऽवगम्यत इति तथावगतयोस्सम्बन्धग्रहणोपपत्तिरिति । अतो यत् परैरुक्तं शब्दो नानुमानं सम्बन्धानपेक्षत्वादक्षवदिति तद्धेतोरसिद्धया दूषितमित्याह— सम्बन्धेति ॥ २५ ॥

भेदकारणान्तरमुपन्यस्य दूषयति—तुल्येति । शब्दः प्रत्यासत्त्या तज्ज्ञानमर्थश्च तद्वीश्चेति विग्रहः । अयमप्यवीतहेतुर्दर्शयितव्यः । तन्निराकरणं चाध्यासनिराकरणोक्तमनुसन्धातव्यम् । अतस्तुल्याकारस्समानं द्विमिति ॥ २६ ॥



प्रतिबिम्बेष्वनैकान्तो बिम्बं यादृग्धि दर्पणे ।
तादृङ्मुखादि बुध्यन्ते न चात्रानुमानता ॥ २७ ॥
प्रत्यक्षता (त ? य)दाप्यत्र तदान्यैर्व्यभिचारिता ।
यत्र पादादि बिम्बेन गतानामनुमीयते ॥ २८ ॥
एकवाक्यात् सकृच्छ्रोतान्नाप्यनेकस्य तत्क्षणम् ।
स्याद्विरुद्धाविरुद्धस्य बोधादेतस्य भिन्नता ॥ २९ ॥

---

अपि च विवक्षानिवृत्तेरनैकान्तिको हेतुरित्याह — प्रतिबिम्बेष्विति । एकान्तो निर्णयः, सोऽस्य कार्यं, तन्नास्तीत्यनेकान्त इति । कथमनेकान्तः, अत आह—बिम्बमिति । यादृशं हि दर्पणे बिम्बमुपलभ्यते तादृशमेव मुखादि बुध्यते, अतोऽस्त्यत्रापि गम्यगमकयोस्सादृश्यमिति प्रतिबिम्बेषु वर्तमानो हेतुरनैकान्तिको भवतीति । ननु नेदमनुमानम्, आदर्शतेजसा हि प्रतिहतेन नायनेन तेजसा प्रकाशितं प्रत्यक्षमेव मुखमवगम्यत इति शब्दाधिकरणे वक्ष्यते । अत आह—न चेति । अयमभिप्रायः — यदा ह्ययं प्रत्यक्षेष्वङ्गुल्यादिष्वादर्शवर्तिना प्रतिबिम्बेन तादृक्त्वे विदितव्याप्तिर्भवति, तदा मुखमप्यादर्शगतं बिम्बानुरूपमनुमिनोति । इतरथा त्वङ्गुलिसन्निकर्षोऽप्यन्यरूपमन्यादृक्तया बोधयतीति सम्भावयेत् । अतो न तादृक्त्वं निश्चिनुयादिति ॥ २७ ॥

अस्तु वेदं प्रत्यक्षं, किमिति सूक्ष्मेक्षिकया, विशदतरमेवानुमानमुपदर्शयामः, यत्र गम्यगमकयोस्सादृश्यमवगम्यत इत्याह—प्रत्यक्षतेति । गतानामित्यनुमानविषयलिङ्गधर्मप्रत्यक्षतां दर्शयतीति ॥ २८ ॥

यदपीदमुक्तम्— शब्दे हि सकृदुक्तमेव वाक्यं सहसा नानार्थान् प्रतिभासयति विरुद्धानविरुद्धांश्च, चोदनालक्षणोऽर्थो धर्मः, श्वेतो धावतीति च यथा, नैवमनुमाने । धूमो हि येनैव विदितव्याप्तिस्तमेकमेव धियमादधाति । अतश्शब्दानुमानयोर्भेदः । प्रयोगश्च भवति — शब्दोऽनुमानाद् भिन्नः, एकदा नानार्थप्रतिभासादक्षवदिति । अवीतहेतुर्वा, लिङ्गमेकमेव

लिङ्गस्यापि हि तद्रूप्यं दृष्टं हेतुविरुद्धयोः ।
विरोधाच्चानुमानं चेत् स्यादनागमतापि ते ॥ ३० ॥

यत्र चैकार्थता वाक्ये तत्र स्यादनुमानता ।
सकृदुच्चरिते चास्मिन् विवक्षैकैव दृश्यते ॥ ३१ ॥

यस्त्वनिर्धारितार्थानामनेकप्रतिभोद्भवः ।
स लिङ्गेऽप्यस्फुटे दृष्टस्तस्मान्नैतेन भिद्यते ॥ ३२ ॥

---

प्रकाशयति, यथा धूमादि, न च तथा शब्दः, अतो भिद्यत इति । तदुपन्यस्य दूषयति — एकवाक्यादिति । अनेनापि प्रकारेण न भिद्यतेऽर्थ इति ॥ २९ ॥

किमिति न भिन्नता, अत आह—लिङ्गस्यापीति । अनैकान्तिको हेतुरिति भावः । हेतुर्हि धूमोऽग्नित्वमुष्णत्वं दाहकत्वमिन्धनविकारत्वं च एकदैव प्रतिपादयति । तथा विरुद्धः—नित्यश्शब्दः कृतकत्वादिति, विवक्षानुसारेण तावन्नित्यतां प्रतिपादयति, व्याप्तिबलेन चानित्यत्वमतोऽनैकान्तिको हेतुरिति । ननु न विरुद्धोऽनेकमर्थं प्रतिपादयति, व्याप्तिबलेन हि लिङ्गं प्रतिपादकं भवति । अतः कृतकत्वमनित्यत्वेन व्याप्तमिति तदेव गमयति, विरुद्धार्थव्याप्तिस्त्वेकस्य विरोधादेव न सम्भवतीति । तत्तावदाशङ्कते — विरोधादिति । उत्तरमाह— स्यादिति । विवक्षितार्थप्रतिपादने हि शब्दस्य शक्तिरवगता, अतस्सोऽप्येकदैकमर्थं प्रतिपादयति, अर्थान्तरे त्वसावपि विरोधादनागमक एवेति ॥ ३० ॥

भूयसां चैकार्थानां वाक्यानां नानेन हेतुना भेदस्सिध्यतीत्याह — यत्र चेति । न केवलं विरुद्धमनेकं शब्दो न प्रतिपादयति, किन्तु अविरुद्धमपि । उक्तमिदं — विवक्षिते शब्दः प्रमाणमिति । सकृदुच्चरिताच्च वाक्यादेकैव वक्तृगामिनी विवक्षोन्नीयत इति । तदनुसारेणार्थोऽप्येक एव बुद्धो भवति । अतो न क्वचिदनेकार्थप्रतिपादनमित्यसिद्धो हेतुरित्याह— सकृदिति ॥ ३१ ॥

नन्वस्ति तावदनेकार्थप्रतिभानं शब्दात्, प्रमाणं त्वेकत्र भवतु नाम, एतावता च सिद्धमनुमानाद् वैधर्म्यमत आह — यस्त्विति । यथा हि



दृष्टान्तानभिधानं च धूमादौ व्यभिचारितम् ।
प्रसिद्धत्वाद्धि तत्रापि न दृष्टान्तोऽभिधीयते ॥ ३३ ॥

अनभ्यस्ते त्वपेक्षन्ते शब्दे सम्बन्धिनः स्मृतिम् ।
अत्र प्रयुक्त इत्येवं बुध्यन्ते हि चिरात् क्वचित् ॥ ३४ ॥

परोक्ता हेतवश्चात्र नाभेदस्य निवारिताः ।
शब्दानुमानयोरैक्यं धूमादग्न्यनुमानवत् ॥ ३५ ॥

अन्वयव्यतिरेकाभ्यामेकप्रत्यक्षदर्शनात् ।
सम्बन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यतः ॥ ३६ ॥

---

न्याय्यवचनव्यक्तिपरिचयात् पूर्वं शब्दादनेकार्थाः परिप्लवन्ते, तथा लिङ्गेऽपि धूमादावस्फुटविदितेऽनेकार्थप्रतिभानं दृष्टमेव । भवति हि दूराद् धूमोऽयमाहोस्विद् धूलिसन्तान इति संशयानस्याग्निवातावर्तयोरनवस्थितो वितर्क इति ॥ ३२ ॥

तथा शब्दे दृष्टान्तानभिधानमपि धूमादौ व्यभिचारान्न भेदहेतुरित्याह— दृष्टान्तेति । कथं व्यभिचारः, अत आह— प्रसिद्धत्वादिति ॥ ३३ ॥

नन्वप्रसिद्धे तावदस्ति दृष्टान्तापेक्षा, शब्दे तु तदपि नास्तीत्यत आह— अनभ्यस्त इति । अपेक्षामेव दर्शयति — अत्रेति । यत्र त्वप्रसिद्धपदार्थगोचरस्संशयो भवति, तत्र यावदयं शब्दोऽमुष्मिन्नर्थे वृद्धैराचरित इति चिरेण प्रणिधाय न बुध्यते, न तावत् तमर्थं निश्चिनुयादिति । तदेवं तावद् भेदवादिभिर्न भेदहेतवस्सम्यगुक्ता इति दर्शितम् ॥ ३४ ॥

बौद्धोक्ताभेदहेतुनिरासोऽपि तैर्न कृत इत्याह— परोक्ता इति । तानेवाभेदहेतूनुपन्यस्यति— शब्दानुमानयोरिति सार्धद्वयेन । अस्यार्थः— यथा धूमादग्न्यनुमानमन्वयव्यतिरेकजम्, एकस्य च धूमस्य प्रत्यक्षदर्शनात्,

प्रत्यक्षान्यप्रमाणत्वात् तदहृष्टार्थबोधनात् ।
सामान्यविषयत्वाच्च त्रैकाल्यविषयाश्रयात् ॥ ३७॥
केश्चिन्मीमांसकैरुक्तो भेदोऽत्र विषयान्तरात् ।
पूर्वाभ्यां ह्यपरिच्छिन्ने शास्त्रमर्थे प्रवर्तते ॥ ३८ ॥

---

सम्बन्धपूर्वकं च भवति, एवं शब्दादपि ज्ञानं जायमानमेवं जायते । प्रत्यक्षाच्च तदन्यत् प्रमाणं, प्रत्यक्षादृष्टं चार्थं बोधयति, सामान्यविषयं च शाब्दं, त्रैकाल्याश्रयं च । अतो न भिद्यते । इदं च साधनवाक्यस्यार्थकथनम् । साधनप्रयोगास्त्वेवं दर्शयितव्याः—शाब्दं ज्ञानमनुमानमन्वयव्यतिरेकजत्वात् धूमाद्यनुमानवदिति । एकप्रत्यक्षदर्शनोत्पत्तेः, तद्वदेव सम्बन्धपूर्वकत्वं (वा ? च) हेतुः । तावेव साध्यदृष्टान्तौ । न च प्राग्व्यसन्वयव्यतिरेकजत्वात् सम्बन्धपूर्वकत्वं न भिद्यते, अन्वयव्यतिरेकात्मकत्वादनुमानसम्बन्धस्येति । पूर्वं हि सम्बन्धविशेषजत्वं हेतुरुक्तः इदानीं त्वविवक्षितविशेषं सम्बन्धसामान्यपूर्वकत्वमिति । एवमुत्तरेष्वपि त्रिषु पूर्ववत्साध्यदृष्टान्तयोजना कार्या । चतुर्थे त्वग्न्यनुमानं प्रदर्शनमात्रम् । भविष्यद्वृत्तवृ(त्त ? ष्ट)नुमाने अपि दर्शयितव्ये इति ॥ ३५—३७ ॥

मीमांसकैकदेशिनां भेदहेतुमिदानीं दूषयितुमुपन्यस्यति — केश्चिदिति । विषयान्तरमेव दर्शयति — पूर्वाभ्यामिति । अयमभिप्रायः—यद्यदपरिच्छिन्ने प्रवर्तते तत् ततो भिद्यते, अनुमानमिव प्रत्यक्षात् । शास्त्रं च पूर्वद्वयापरिच्छिन्नेऽर्थे प्रवर्तते । ततस्ताभ्यां भिद्यते । किं पुनः प्रत्यक्षाद् भेदप्रतिपादनेन प्रयोजनम्, न हि तद्भेदः कैश्चिदाश्रितः, यन्निराक्रियते । उच्यते । अस्त्येव केषाञ्चिद् विभ्रमः, श्रोत्रव्यापाराश्रयाज्जायमानमिदं शाब्दं श्रोत्रप्रत्यक्षमेव, तदन्वयव्यतिरेकानुविधानात् । अत एव बधिरस्य न भवतीति । तदनेन प्रत्यक्षतो भेदप्रतिपादनेन निराक्रियते । एवं हि मन्यते — विद्यमानोपलम्भनं प्रत्यक्षमिति दर्शितम् । इदं तु शाब्दं त्रिकालार्थविषयमतः कथं प्रत्यक्षेऽन्तर्भविष्यति । बधिरस्तु शब्दाश्रवणादर्थं न जानाति, नार्थाश्रवणात् । प्रयोगश्च भवति — शाब्दं प्रत्यक्षाद् भिन्नं, तदपरिच्छिन्नविषयत्वाद् अनुमानवदिति ॥ ३८ ॥



तत्रापि नागमत्वं स्यात्पुरुषोक्तेस्तथास्तु चेत् ।
प्रत्ययः किन्निमित्तोऽर्थे वक्तृबुद्धेः कुतो त्वसौ ॥ ३९ ॥

---

तदिमं प्रत्यक्षतो भेदमभ्युपेत्यानुमानाद् भेदकारणं निराकरोति—तत्रापीति । एवं हि मन्यते — यद्यनुमानापरिच्छिन्नविषयतया भेदोऽभिधीयते, तर्हि पुंवाक्यानामनागमत्वम्, प्रमाणान्तरपरिच्छिन्नविषयत्वात्, वेदवाक्यान्येव तु मानान्तरानिषयार्थानि भिद्यन्ते इत्यव्यापको हेतुरिति । किं पुनरिदमनिष्टमापादितम्, नन्विष्यत एव पुंवचसामनागमत्वम्, आगमो हि शास्त्रम्, अप्राप्ते शास्त्रमर्थवदिति वक्ष्यति । इमानि पुनः प्रमाणान्तरप्राप्तविषयप्रतिपादकानीत्यनुवादवाक्यान्येव । अत एव शास्त्रमेव वेदवाक्यं भिन्नतया पक्षीकृतं 'शास्त्रमर्थे प्रवर्तत' इति । तद्भेदस्यैवोपयोगादिति भावः । तदेतदाह — तथेति । अत्र दूषणमाह — प्रत्यय इति । एवमयं पुंवचनाप्रामाण्यवादी वक्तव्यः । किमस्ति तेभ्योऽर्थप्रत्ययो न वा, न तावन्नास्ति, सर्वलोकव्यवहारोच्छेदप्रसङ्गात् । सतस्तु नानिमित्तोत्पत्तिस्सम्भवतीति निमित्तं वाच्यम् । न च शब्दादन्यन्निमित्तमस्योपपद्यत इति जातमसन्दिग्धमबाधितं च ज्ञानान्तरेण प्रमाणमेव पुंवचनजनितं ज्ञानमिति नास्यानागमत्वाभ्युपगमो युक्त इति । इतरस्त्वनुमानान्तर्भावाभिप्रायेणाह — वक्तृबुद्धेरिति । अयमभिप्रायः —विसंवादभूयिष्ठानि हि पुंवचनानि, तन्नैतानि श्रुतमात्राण्येवार्थं निश्चाययन्ति । न चानिश्चितोऽर्थो ज्ञातो भवति, निश्चयस्यैव ज्ञानत्वात् । अतः प्राङ्निश्चयोत्पत्तेर्ज्ञानाभाव एवेति किं निमित्तप्रयत्नेन । यदा तु वक्तैवमवधारितव्याप्तिर्भवति — 'न चायमनवगतं ब्रवीती'ति, तदा तद्वाक्यादेव ज्ञानकार्यात् कारणभूतं ज्ञानमनुमाय ज्ञानस्यार्थाव्यभिचारेणार्थो निश्चीयते । तस्यां चावस्थायां ज्ञानलिङ्गावगतत्वादर्थस्य वाक्यमनुवादकमेव । अतो नागम इति । सिद्धान्तवादी त्वाह — कुतो न्वसाविति । अयमभिप्रायः — अवगता हि बुद्धिरर्थं निश्चाययति । न चास्याः किञ्चिदवगमे कारणमस्तीति वक्ष्याम इति ॥ ३९ ॥

न शब्दार्थस्य सा लिङ्गं न शब्दोऽस्याः कथञ्चन ।
विशेषो गम्यते ताभ्यां न चैतस्यानुमेयता ॥ ४० ॥
तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।
पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥ ४१ ॥

---

अतः स्वयमेवानवगता नार्थस्य लिङ्गमित्याह — नेति । ननूक्तं कार्यात् शब्दादनुमास्यते, अत आह — न शब्द इति । यथा नोभयमुभयत्र लिङ्गं, तथा दर्शयति — विशेष इति । अनुमानं हि व्याप्तिबलेन भवति, इह च वाक्यसामान्यं ज्ञानसामान्येन व्याप्तमवगतमिति ततस्तत् सिध्येद्, ज्ञानमात्राचार्थमात्रम्, न चेह तथा, ज्ञानार्थविशेषयोरनुमित्सितत्वात् । तयोश्च सम्बन्धग्रहणाभावेनाननुमेयत्वात् । ननु यत्रासौ वाक्यं प्रयुङ्क्ते तदेव ज्ञात्वा प्रयुङ्क्त इति विज्ञानविशेषेणैव सम्बन्धोऽवगतः । अतस्स एवानुमास्यते । यद्येवम्, अवगतस्तर्हि प्रागेव वाक्यादर्थः, न ह्यन्यथा यत्र प्रयुङ्क्त इति शक्यते वक्तुम् । अपि चाविदिते प्रथममर्थे कथं ज्ञानमनुमातव्यम् । किमज्ञासीदयं वक्ता किञ्चिदिति, आहोस्विदिममर्थमिति, नाप्रतिपन्नमिदमा शक्यते प्रतिनिर्देष्टुम् । न चार्थोपरागमन्तरेण ज्ञानस्य विशेषस्सम्भवति योऽनुमीयते । न चाकर्मकं ज्ञानमात्रमनुमीयते । न च ततोऽर्थविशेषस्सिध्यति । न चानिश्चितं ज्ञानं, संशयात्मनो विज्ञानाविधाया दर्शितत्वात् । न चैवं पुंवाक्येभ्यस्सन्देहः । या तु क्वचिद् व्यभिचारादप्रामाण्याशङ्का सा आप्तत्वादिना निराक्रियत इत्युक्तम् । यदि त्वेवं ज्ञानविशेषावगतिरुच्यते, स एवमवधारितो भवति — नायमनन्वितार्थानि पदानि प्रयुङ्क्ते, न चानवगतान्वयानि, तन्नूनममीषामनेनान्वयो ज्ञात इति । किमिदानीं विदितपदपदार्थसङ्गतिः श्रोता पुंवाक्यादर्थं न बुध्यत एव । यद्येवमनुत्तरा गुरवः । जाता तु बुद्धिरसन्दिग्धाविपर्यस्ता च न वेदवाक्यजनितायाः धियो विशिष्येत । शङ्कामात्रं तु कथञ्चिद् वेदेऽपि वाक्यत्वादिना भवतीति न तावता तदप्रामाण्यम् । ताभ्यामिति । बुद्धिशब्दाभ्यामित्यर्थः ॥ ४० ॥

अतो वक्त्रभिप्रायावगतौ प्रत्यक्षादिप्रमाणासम्भवात् तदनवगमे



न चाप्यननुमेयत्वमागमार्थस्य शक्यते ।
लिङ्गं हि शब्द एवास्य धूमोऽग्नेरिव कल्पते ॥ ४२ ॥
न चाप्यननुमेयत्वात् प्रमाणान्तरगम्यता ।
रूपस्याश्रावणत्वेन न ह्यप्रत्यक्षतेष्यते ॥ ४३ ॥
एवं स्थिते स्वयूथ्या नः केचिन्नातिप्रयत्नतः ।
अनुमानविशेषोऽयमीदृग्धर्मस्य बोधकः ॥ ४४ ॥
भविष्यत्यर्थरूपं तु लिङ्गं धर्मे निराकृतम् ।

---

वाक्यार्थानुमानानुपपत्तेरश्रोतुराप्तपूर्वमर्थं ज्ञापयन्ती पुरुषोक्तिर्वेदवदागम एवेत्याह — तेनेति ॥ ४१ ॥

यदपि चेदमुच्यते । वेदस्तावद् भिन्नविषयतया प्रमाणान्तरमेवेति, तदपि मनोरथमात्रमेवेत्याह — न चापीति । न शक्यते वक्तुमित्यभिप्रायः । किमिति न शक्यते । अत आह — लिङ्गमिति । यदा पूर्वोक्तैर्हेतुभिरविशेषेण सर्वमेव शाब्दमनुमानादभिन्नमित्युक्तं, तदा कथं तद्गोचरस्याननुमेयत्वं भविष्यतीति भावः ॥ ४२ ॥

नन्वर्थात्मना तावल्लिङ्गेनाननुमितपूर्वमर्थं वेदो बोधयतीति प्रमाणान्तरं भविष्यतीत्यत आह — न चेति । धूमवत्त्वकृतकत्वादीनां हि सत्यप्यवान्तरभेदे यथैव त्रैलक्षण्यापरित्यागेनानुमानत्वमेवमिहापि स्यात् । यदि तु तदेव नास्तीत्युच्यते, तत् तर्हि वचनीयम्, किमवान्तरभेदोपन्यासेनेति ॥ ४३ ॥

अन्ये तु प्रक्षीणशक्तयोऽभेदमेवाश्रित्यैकदेशिनः प्रत्यवस्थिताः, तद् दर्शयति — एवं स्थित इति । अयं हि तेषामभिप्रायः — चोदनाप्रामाण्यं हि प्रतिज्ञातं, तच्चानुमानत्वेऽपि वेदवचसस्सिध्यत्येव । यथैव हि शब्दमध्याद् वेदः प्रमाणम् । एवमनुमानेभ्यो वेदानुमानमिति किमतिप्रयत्नतो भेदप्रतिपादनेनेति । ननु "भविष्यत्वाद् धर्मो नानुमीयते" इत्युक्तं भाष्यकारेण । अतोऽनुमानत्वाभ्युपगमे तद्विरोधो भवेद् अत, आह — भविष्यतीति । अर्थरूपलिङ्गाभिप्रायेण तन्निराकृतमित्यर्थः ॥ ४४½ ॥

संज्ञानुमानतेच्छा तु न दुष्येदागमेऽपि नः ॥ ४५ ॥
लक्षणेन त्वभिन्नत्वं यदि शब्दानुमानयोः ।
वेदज्ञानाप्रमाणत्वं स्यादतल्लक्षणत्वतः ॥ ४६ ॥
आप्तवादाविसंवादसामान्यान्नृवचस्सु हि ।
लक्षणेनानुमानत्वात् प्रामाण्यं सिद्धिमृच्छति ॥ ४७ ॥
वेदे त्वाप्तनराभावात् सम्बन्धानुभवाद्दते ।
लक्षणं नानुमानस्येत्यप्रामाण्यं प्रसज्यते ॥ ४८ ॥
नन्वेकदेशसत्यत्वे तस्य स्यादनुमानता ।
वेदत्वादग्निहोत्रादौ वायुक्षेपिष्ठवाक्यवत् ॥ ४९ ॥

---

एतदपि दूषयति — संज्ञेति । यदि पश्चान्मानसामान्यादनुमानत्वं तदस्तु, न च तदभ्युपगमे दोष इत्यर्थः । लक्षणैकत्वेन त्वभेद इष्टेऽनुमानलक्षणाभावात् प्रमाणान्तरानभ्युपगमाच्चाप्रामाण्यमेव वेदवचसामापद्यत इत्याह — लक्षणेनेति ॥ ४६ ॥

ननूक्तं लक्षणैकत्वमाप्तवादाविसंवादसामान्यादित्यत्राह — आप्तवादेति । पुंवाक्यानामनेन प्रकारेणानुमानत्वात् प्रामाण्यं सिद्ध्यति न वेदवचसामिति भावः ॥ ४७ ॥

किमिति न सिद्ध्यति । अत आह — वेदे त्विति । आप्तनराभावात् तावदाप्तवादत्वेनाविसंवादादनुमानम् । न चातीन्द्रियैरर्थैर्वेदानां सम्बन्धानुभवस्सिध्यतीत्यप्रमाणमेव भवेयुः । नाप्तसन्दृब्धा वेदा इति वेदाधिकरणे वक्ष्यतीति ॥ ४८ ॥

ननु प्रमाणान्तरसङ्गतार्थानि वेदैकदेशभूतानि क्षेपिष्ठादिवाक्यानि दृष्ट्वा इतराण्यप्यग्निहोत्रादिवाक्यानि वेदत्वात् सत्यार्थान्यनुमास्यन्ते । अतोऽस्ति लक्षणेनानुमानत्वमित्याह — नन्विति ॥ ४९ ॥



नादित्ययूपेऽनैकान्त्यात् तद्वद्वा गौणता भवेत् ।
ततः प्रत्यनुमानानामेवं पूर्वोक्तया दिशा ॥ ५० ॥
तस्माल्लक्षणभेदेन यदि शब्दप्रमाणता ।
तथा लोके च वेदे च सिद्धा वेदप्रमाणता ॥ ५१ ॥
तेन चाप्तोपदेशत्वं न स्यादागमलक्षणम् ।
नाप्तस्य सम्भवो वेदे लोके नास्मात् प्रमाणता ॥ ५२ ॥
पुरस्ताद्वर्णितं ह्येतत् तस्मात् शब्देन या मतिः ।
तस्याः स्वतः प्रमाणत्वं न चेत् स्याद्दोषदर्शनम् ॥ ५३ ॥

---

एतदपि दूषयति — नादित्येति । आदित्ययूपवाक्ये वर्तमानो वेदत्वहेतुरनैकान्तिक इति । ननु नेदं वाक्यमसत्यार्थम्, आदित्यशब्दो हि सारूप्याद् गौणो यूपे वर्तत इति तत्सिद्धिसूत्रे वक्ष्यते, अत आह — तद्वदिति । कर्मफलसम्बन्धवाक्यान्यपि तद्वदेव गौणानि भवेयुरिति । अपि च प्राक् स्वमहिम्ना वेदप्रामाण्यबलेनाप्रामाण्यानुमानानि प्रत्युक्तानि । अनुमानत्वाभ्युपगमे तुल्यबलतया तान्यपि दुर्वारप्रसराणीत्याह — तत इति ॥ ५० ॥

अतो लक्षणभेदेनैव शब्दस्य प्रमाणान्तरत्वे इष्यमाणे वेदाः प्रमाणं भवन्ति । लोकवेदयोश्च सममेव प्रमाणता सिद्धेत्याह — तस्मादिति ॥ ५१ ॥

लक्षणमपि यथा परैराश्रितम् — 'आप्तोपदेशश्शब्द' इति, तथाप्याप्ताभावान्न प्रामाण्यं वेदस्येति तन्नाश्रयणीयमित्याह — तेनेति वेदान्तेन । लोकेऽपि नाप्तत्वं प्रामाण्ये कारणमित्याह — लोक इति ॥ ५२ ॥

कारणमाह — पुरस्तादिति । आप्तत्वेन ह्यपवादाशङ्कानिराकरणमात्रम् । प्रामाण्यं तु सर्वसंविदां सहजमेवेति स्वतःप्रामाण्यवादे वर्णितमिति । किं तर्ह्यागमलक्षणमत आह — तस्मादिति । निर्दोषशब्दजनितं विज्ञानं प्रमाणमिति ॥ ५३ ॥

अनुमानेन चैतस्य प्रामाण्यं केवलं समम् ।
पदे तावत्कृतो यत्नः परैरित्यत्र वर्ण्यते ॥ ५४ ॥
विषयोऽन्यादृशस्तावद् दृश्यते लिङ्गशब्दयोः ।
सामान्यविषयत्वं च पदस्य स्थापयिष्यति ॥ ५५ ॥
धर्मी धर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।
न तावदनुमानं हि यावत् तद्विषयं न तत् ॥ ५६ ॥
सामान्यादतिरिक्तं तु शाब्दे वाक्यस्य गोचरः ।
सामर्थ्यादनुमेयत्वादश्रुतेऽपि पदान्तरे ॥ ५७ ॥

---

एवञ्जातीयकस्य शब्दस्य चानुमानेन प्रामाण्यमेव समं, न लक्षणमित्याह — अनुमानेनेति ॥ ५३½ ॥

स्वमतेनेदानीं पदस्यानुमानाद् भेदं वदिष्यंस्तत्प्रतिपादने कारणमाह — पद इति । यद्यपि पदस्य पदार्थे प्रमाणत्वान्न तद्भेदप्रतिपादनमुपयुज्यते, तथापि परैः पदान्युदाहृत्य विचारः कृत इति तद्भेदमेव प्रतिपादयामः । अत्रेति । पद इत्यर्थः ॥ ५४ ॥

तदिदानीं भेदकारणमाह — विषय इति । विषयभेदमेव दर्शयति — सामान्येति । आकृत्यधिकरणे हि पदस्य सामान्यविषयत्वं स्थापयिष्यत इति ॥ ५५ ॥

अनुमानं तु धर्मविशिष्टधर्मिविषयमित्यनुमानपरिच्छेदे साधितमित्याह — धर्मीति । लिङ्गमस्यास्तीति लिङ्गी । तस्य विशिष्टस्य प्रसाधकं लिङ्गमस्तीति । नन्वनुमाने व्याप्तिबलेन धर्मसामान्यमनुमीयत इत्यत आह — न तावदिति । यावत् तदनुमानं तद्विषयं विशिष्टविषयं न भवति तावदनुमानमेव न भवति, न धर्ममा(त्रं ? त्रविषयं) सिद्धत्वादित्युक्तमिति ॥ ५६ ॥

ननु पदमपि विशिष्टगोचरं दृष्टं यथा — को राजा यातीति पृष्टे परः प्रतिब्रवीति, पाञ्चालराज इति । तदा केवलादेव पाञ्चालराजपदात् क्रियाविशिष्टः पुरुषोऽवगम्यते, अत आह — सामान्यादिति । यदेव



सङ्ख्यादिमान् पदार्थश्चेन्न तावत् सोऽव्ययादिषु ।
यत्रापि ते प्रतीयन्ते तत्र व्यक्तेर्विशेषणम् ॥ ५८ ॥
पदान्तराभिधेयस्य तादर्थ्याच्च क्रियात्मनः ।
वाक्यार्थेऽपि पदं यत्र गोमदादि प्रयुज्यते ॥ ५९ ॥
सत्यप्यत्र विशिष्टत्वे सिद्धत्वान्नैव पक्षता ।
तावानेव हि तत्रार्थो यः पूर्वमवधारितः ॥ ६० ॥

---

किञ्चित् शाब्दे सामान्यादतिरिक्तमवगम्यते स वाक्यस्यैव विषयः । वाक्यमेव हि तदनुषक्तयातिपदं पाञ्चालराजो यातीति । नन्वस्तु श्रुतस्यानुषङ्गः, अश्रुतेऽपि पदान्तरे पदादेकस्माद् विशिष्टबोधो दृष्टः, यथा — द्वारमित्युक्ते विव्रियतामिति, अत्र कथमत आह — सामर्थ्यादिति । कारकं हि क्रियया विदितव्याप्तिकम्, व्याप्तिसामर्थ्यादेव क्रियापदमनुमापयति । अनुमितक्रियापदाद् वाक्यादेव तत्रापि विशिष्टार्थप्रत्यय इति ॥ ५७ ॥

अत्र चोदयति — सङ्ख्येति । परिहरति — न तावदिति । यत्र हि सङ्ख्यादयोऽवगम्यन्ते तत्र कथमत आह — यत्रापीति । सम्भवव्यभिचाराभ्यां हि विशेषणमर्थवद् भवति । आकृतिस्तु न तावदेकत्वं व्यभिचरति, द्वित्वादयस्त्वेकत्वान्न सम्भवन्तीति तदाक्षिप्ताया व्यक्तेरेव विशेषणं सङ्ख्यादय इति ॥ ५८ ॥

तदेवं तावदनुरञ्जनेन व्यक्तेर्विशेषणमित्युक्तम्, तादर्थ्येन तु क्रियां भावनां सङ्ख्यादयो विशिंषन्ति । तत्र हि श्रुत्यादिभिर्विनियुज्यन्ते । यथा पशोरेकत्वेऽरुणादिषु च वक्ष्यत इत्याह — पदान्तरेति । पदान्तरेणात्यन्तविप्रकृष्टविशेषणतां दर्शयतीति ॥ ५८½ ॥

यत्तर्हि वाक्यार्थवृत्तिविशिष्टविषयं गोमदादिपदं तदनुमानं भविष्यतीत्यत आह — वाक्यार्थ इति । यद्यपि तावदिदं विशिष्टार्थगोचरम्, तथापि नानुमानत्वम् । सिद्धो हि धर्मी केनचिद् धर्मेणासिद्धेन विशिष्टसाध्यमानः पक्षो भवति । इह तु पदोच्चारणात् प्राङ् न किञ्चित् प्रतिपन्नम् । उच्चरिते तु पदे विशिष्टः प्रतिपन्न एवेति किं साध्यमिति । सिद्धत्वमेव

भेदबुद्धेश्च वैधर्म्यं प्रकृतिप्रत्ययार्थयोः ।
विशेषणविशेष्यार्थस्वातन्त्र्यग्रहणं न च ॥ ६१ ॥
विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः ।
अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ६२ ॥
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।
पक्षे धूमविशेषे च सामान्यं हेतुरिष्यते ॥ ६३ ॥

---

दर्शयति — तावानिति । न तावदगृहीतसम्बन्धश्शब्दाद् विशिष्टं प्रत्येति । गृहीतसम्बन्धस्तु प्रतिपद्यमानो व्युत्पत्तिकालावगताच्च किञ्चिदधिकं प्रत्येतीति कथमनुमानं भवतीति ॥ ६० ॥

अपि चात्र भिन्नयोरेव प्रकृतिप्रत्ययात्मनोः पदभागयोर्भिन्नावेवार्थौ प्रतिपन्नौ विशेषणविशेष्यभावमनुभवत इति सिद्धं वैधर्म्यमित्याह — भेदबुद्धेरिति । इदं तु पाचकादिशब्देषु युक्तं वक्तुम्, तत्र हि (धातुना) पाकः प्रत्ययेन च कर्तृमात्रमुपात्तम् । आर्थस्तु विशिष्टप्रत्ययः । गोमदादौ तु तदस्यास्तीति विशिष्ट एवार्थे तद्धितः स्मर्यत इति कुतो वैधर्म्यम्, उक्तमत्र 'तावानेव ही'ति व्युत्पत्तिकालावगतादनधिकविषयत्वम्, इदं तु पाचकादिशब्दार्थ(मे ? ए)वोक्तमिति । किञ्चानुमाने स्वतन्त्रगृहीत एव पर्वतादिविशेष्यः स्वतन्त्रस्मृतेनाग्न्यादिना विशेषणेन विशिष्टोऽवगम्यते । शब्देनोभयोः स्वतन्त्रग्रहणमस्तीत्याह — विशेषणेति । ग्रहणमुपलक्षणार्थं, स्मरणं चेत्यर्थः ॥ ६१ ॥

वैधर्म्यान्तरमाह — विशेष्येति ॥ ६१½ ॥

अत्र चोदयति — अथेति । अत्रापि शब्दस्यैव प्रथमावगतस्यार्थविशिष्टत्वेन साध्यत्वान्न क्रमव्यतिक्रमो भविष्यतीति ॥ ६२ ॥

अत्र दूषणमाह — प्रतिज्ञार्थेति । प्रतिज्ञार्थः पक्षः, स च धर्मविशिष्टो धर्मी, विशिष्टापेक्षया धर्म्येकदेश उच्यते । स एव हेतुः प्रसज्यते । शब्दो हि धर्मितयोपात्तः स एव हेतुरिति । ननु यदा दूराद् धूमस्याधारविशेषो न लक्ष्यते तदा धूमोऽग्निमत्तया साध्यते, हेतुश्च भवति । तद्वदिहापि भविष्यत्यत आह — पक्ष इति । धूमविशेषो हि सम्प्रति



शब्दत्वं गमकं नात्र गोशब्दत्वं निषेत्स्यते ।
व्यक्तिरेव विशेष्या[1]तो हेतुश्चैका प्रसज्यते ॥ ६४ ॥
भवेत् व्यञ्जकभेदाच्चेन्न त्वेवं प्रत्ययोऽस्ति नः ।
कथं वास्य विशिष्टत्वं न तावद् देशकालतः ॥ ६५ ॥
तत्प्रतीतिविशिष्टश्चेत् परं किमनुमीयते ।
न प्रत्यायनशक्तिश्च विशेषस्यानुमीयते ॥ ६६ ॥

---

दृश्यमानः पक्षः, पूर्वावगतस्सपक्षः तदनुगतं च सामान्यं हेतुरिति पक्षसपक्षहेतुविभागोपपत्तिरिति ॥ ६३ ॥

नन्विहापि शब्दविशेषं पक्षीकृत्य शब्दत्वं हेतुं वक्ष्यामः, अत आह — शब्दत्वमिति । अर्थविशेषो ह्यनुमित्सितः, न चास्य शब्दत्वं गमकमनैकान्तिकत्वादिति । नन्ववान्तरसामान्यं तर्हि गोशब्दत्वं हेतुर्भविष्यत्यत आह — गोशब्दत्वमिति । अतोऽत्रैकैव व्यक्तिरर्थेन विशेष्या हेतुतया चाभिधातव्येति दुष्परिहरं प्रतिज्ञार्थैकदेशत्वमित्यभिप्रायेणाह — व्यक्तिरिति ॥ ६४ ॥

ननु व्यञ्जकभेदाभिन्नैकैव व्यक्तिः पक्षीकरिष्यते इत्याह — भवेदिति । परिहरति — न त्विति । नौपाधिको भेदो वस्तु भिनत्ति, तत्प्रत्ययानपायादिति भावः । अपि च विशिष्टता सम्बन्धे सति भवति, तदिह कीदृशोऽर्थशब्दयोस्सम्बन्ध इत्याह — कथं वेति । न तावत् शब्ददेशेऽर्थो दृश्यते, मुखे हि शब्दः, भूमावर्थः । नापि शब्दकाले, कलौ कृतयुगार्थस्याभावादित्याह — न तावदिति ॥ ६५ ॥

यथार्थप्रतीत्या विशिष्टश्शब्दस्साध्यते, अस्ति हि सा शब्दकाल इति तदेतदाशङ्कते तत्प्रतीतिरिति । एतदपि दूषयति — परमिति । प्रतीत्या विशिष्टेऽनुमीयमाने सा तावत् पूर्वसिद्धा ग्रहीतव्या । सा चेत् ज्ञाता किमपरमनुमीयत इति । ननु सम्प्रत्युपलभ्यमानं द्रुतादिविशेषं पक्षीकृत्य तस्य प्रत्यायनशक्तिविशिष्टता साध्यते, सपक्षं च व्युत्पत्तिकाला-

---

1. 'विशिष्याते' इति मुद्रितपुस्तकपाठः

विशेषाणां न शक्तिर्हि सैकदेशेऽग्निजातिवत् ।
सामान्यस्यैव शक्तत्वे पक्षो हेतुस्तथैव च ॥ ६७ ॥

तस्मादर्थविशिष्टस्य न शब्दस्यानुमेयता ।
कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥ ६८ ॥

न क्रियाकर्तृसम्बन्धादृते सम्बन्धनं क्वचित् ।
राजा भर्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥ ६९ ॥

---

पगतविशेषम्, उभयानुगतं गोशब्दसामान्यं हेतुं करिष्यामः, न प्रतिज्ञार्थैकदेशता भविष्यतीत आह — न प्रत्यायनेति अयमभिप्रायः — न द्रुतादिविशेषाणां देशादिनिबन्धनोऽर्थेन सम्बन्धो विद्यते । प्रत्यायनशक्तिविशिष्टता चापि तेषां न सम्भवतीति ॥ ६६ ॥

किमिति न सम्भवतीत आह — विशेषाणामिति । यथा पक्षीकृतस्य महतो धूमस्यैकदेशेऽधस्तादग्निरस्तीति तद्विशिष्टो धूमस्साध्यो भवति । नैवं द्रुतादिविशेषाणां प्रत्यायनशक्तियोगः । तेषां व्यभिचारेणाप्रत्यायकत्वादिति । यत्तु तेषां सामान्यं गोशब्दस्य प्रत्यायनशक्तिविशिष्टः, तत्र च पक्षे स एव पक्षो हेतुश्चेत्युक्तमेवेत्याह सामान्यस्येति ॥ ६७ ॥

अतोऽर्थविशिष्टश्शब्दो नानुमेय इत्युपसंहरन्नाह — न स्मादिति ॥ ६७½ ॥

एवं तावत् शब्दो न पक्ष इत्युक्तम् । यदि स्वयं पक्षीकृत्य शब्दो हेतुरित्युच्यते । तदप्ययुक्तम् । अपक्षधर्मत्वादित्याह — कथं चेति । कथं च निरूप्यत इति भावः ॥ ६८ ॥

किमिति न निरूप्यतेऽत आह — न क्रियेति । कस्याञ्चित् क्रियायां कर्तृतया सम्बद्धं किञ्चित् कस्यचित् सम्बन्धी भवति, क्रियाकारकसम्बन्धपूर्वकत्वात् शेषसम्बन्धानां स्वस्वाम्यादीनामिति । तत्र स्वस्वामिसम्बन्धस्तावत् क्रियाकारकसम्बन्धपूर्वक इत्याह — राजेति । प्रथमं हि भरणक्रियायां कर्तृकर्मभावमापन्नौ राजपुरुषौ स्वस्वामिसम्बन्धमनुभवत इति ॥ ६९ ॥



वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।
देशोऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥ ७० ॥

कार्यकारणभावादौ क्रिया सर्वत्र विद्यते ।
न चानवगताकारस्सम्बन्धोऽस्तीति गम्यते ॥ ७१ ॥

न चास्त्यसति सम्बन्धे षष्ठीतत्पुरुषोऽपि वा ।
तस्मान्न पक्षधर्मोऽयमिति शक्या निरूपणा ॥ ७२ ॥

निवृत्तेऽन्यत्र सम्बन्धे येऽपि तद्विषयात्मना ।
वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ॥ ७३ ॥

---

एवमवयवावयविसम्बन्धोऽपि क्रियागर्भ इत्याह — वृक्ष इति । वृक्षोऽवयवी ह्यवयवेषु तिष्ठतीति प्रतीतिः । कदाचित्त्ववयवा एव शाखादयस्तस्मिन्निति प्रतीतिः । तदेवं स्थितिक्रियाकर्तृभावनिबन्धनोऽवयवावयविसम्बन्ध इति । एवं संयोगोऽपि क्रियागर्भ एवेत्याह — देश इति । अग्निमद्देशे भवने कर्ता भवन् धूमोऽग्निमतो देशस्य संयोगी भवतीति ॥

एवं कार्यकारणभावादयोऽपि सम्बन्धाः क्रियाकारकसम्बन्धपूर्वका इत्याह — कार्येति । किण्वं हि सुराया बीजं सुरात्मके परिणामे कर्तृभवत्सुरायाः कारणमित्युच्यते । तथा समूहसमूहिसम्बन्धोऽपि । सेनाकार्यं प्रतिपक्षजयमंशेन कुर्वन् हस्ती सेनायास्सम्बन्धितयोच्यत इति । शब्दार्थयोस्तु न कश्चिदेवमाकारस्सम्बन्धस्यावगम्यते । न चानिरूपिताकारस्सम्बन्धोऽस्तीति शक्यते वक्तुमित्याह — न चेति ॥

न च सम्बन्धमन्तरेण पक्षस्य धर्म इति विग्रहगता षष्ठी पक्षधर्म इति च तत्पुरुषसमासो वा घटत इत्याह — न चास्तीति । वृत्तिविग्रहावपि नोपपन्नाविति । उपसंहरति — तस्मादिति ॥ ७२ ॥

अन्ये तु शब्दोऽर्थविषय इत्येवं तद्धर्मतामाहुः । यथानुपलब्धिरभावे प्रमेय इति वक्ष्यते । तदेतदुपन्यस्यति — निवृत्त इति ॥ ७३ ॥

तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम् ।
न तद्देशादिसद्भावो नाभिमुख्यादि तस्य वा ॥७४॥

तस्मादुत्पादयत्येष यतोऽर्थविषयां मतिम् ।
तेन तद्विषयश्शब्द इति धर्मत्वकल्पना ॥ ७५ ॥

तत्र वाचकतायां च सिद्धायां पक्षधर्मता ।
न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥ ७६ ॥

गमकत्वाच्च धर्मत्वं धर्मत्वाद् गमको यदि ।
स्यादन्योन्याश्रयत्वं हि तस्मान्नैषापि कल्पना ॥

न चागृहीतसम्बन्धाः स्वरूपव्यतिरेकतः ।
शब्दं जानन्ति येनात्र पक्षधर्ममतिर्भवेत् ॥ ७८ ॥

---

एतदपि नोपपन्नमित्याह — तैरपीति । न केनापि प्रकारेण विषयविषयिभावो घटत इत्यर्थः । यथा न घटते तदेतदाह — न तदिति ॥ ७४ ॥

सर्वप्रकारासम्भवात् पारिशेष्येण तद्विषयबुद्धिजनकतया तद्विषयता वक्तव्या, एवं च तद्विषयबुद्धिजनकत्वस्य वाच्यवाचकभावमन्तरेणानुपपत्तेस्तदभ्युपगमः कार्यः । तत्सिद्धौ च न प्रतीत्यङ्गं पक्षधर्मता । न चापक्षधर्मजनिता प्रतीतिरनुमानमित्याह — तस्मादिति द्वयेन ॥ ७५,७६ ॥

यदि तु पक्षधर्मतैव तद्विषयबुद्धिजनने हेतुरिष्यते । ततस्तद्व्यतिरेकेण पक्षधर्मताया एवानुपपत्तेरितरेतराश्रयत्वमतो नेयमपि कल्पना घटत इत्याह —गमकत्वादिति ॥ ७७ ॥

इतश्च न पक्षधर्मतेत्याह — नचेति । अनवगतवाच्यवाचकसम्बन्धाः स्वरूपातिरेकेण न शब्दं कस्यचिद् धर्मतया जानन्ति । येन पक्षधर्मबुद्धिश्शब्दे भवेदिति ॥ ७८ ॥



न च स्वरूपमात्रेण धूमादेः पक्षधर्मता ।
न चापि पूर्वसम्बन्धमपेक्ष्यैषा प्रसज्यते ॥ ७९ ॥

धूमवानयमित्येवमपूर्वस्यापि जायते ।
पक्षधर्ममतिस्तेन भिद्यतोत्तरलक्षणात् ॥ ८० ॥

न त्वत्र पूर्वसम्बन्धादधिका पक्षधर्मता ।
न चार्थप्रत्ययात् पूर्वमित्यनङ्गमियं भवेत् ॥ ८१ ॥

न च धर्मी गृहीतोऽत्र येन तद्धर्मता भवेत् ।
पर्वतादिर्यथा देशः प्राग्धर्मत्वावधारणात् ॥ ८२ ॥

यश्चात्र कथ्यते धर्मी प्रमेयोऽस्य स एव नः ।
न चानवधृते तस्मिन् तद्धर्मत्वावधारणात् ॥ ८३ ॥

---

स्वरूपमात्रविज्ञानं तु न धूमादौ पक्षधर्मतायां हेतुः, अपि तु धर्मिसम्बन्धः । न चासावस्तीत्यभिप्रायेणाह — नचेति । नन्वत्राप्यर्थेन धर्मिणा प्रथमं व्युत्पत्तिकाले सम्बन्धोऽवगत एव, आह— न चापीति ॥ ७९ ॥

पूर्वसम्बन्धनिरपेक्ष एवायमव्युत्पन्नसम्बन्धस्यापि पक्षधर्मसम्बन्धो भासते, न चात्र तथेत्याह — धूमवानिति मतिरन्तेन । यत एव तन्निरपेक्षोऽयं पक्षधर्मसम्बन्धः, अत एव तदुत्तरस्मात् सपक्षसत्त्वलक्षणाद् भिद्यते, अन्यथा तदभेद एव स्यादित्याह — तेनेति । त्रीणि हेतोर्लक्षणानि पक्षधर्मता सपक्षे सत्ता विपक्षाद् व्यावृत्तिः । तत्र च पक्षधर्मताया उत्तरं सपक्षसम्बन्धमुत्तरलक्षणमपदिशतीति ॥ ८० ॥

शब्दे त्वेवं नास्तीत्याह— न त्वत्रेति । पूर्वसम्बन्धापेक्षया चेयमवगम्यमानार्थप्रतीत्युत्तरकालमवगम्यते । अतो न तदङ्गमित्याह— नचेति ॥

इतश्च न पक्षधर्मतेत्याह — न च धर्मीति । अर्थादन्यस्तावद् धर्मी न प्रमीयत इति भावः ॥ ८२ ॥

यस्त्वसावर्थो धर्मितया कल्पनीयः, यद्धर्मतयावगतश्शब्दः पक्ष॰

प्राक् स चेत् पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानिता ॥ ८४ ॥

अन्वयो न च शब्दस्य प्रमेयेन निरूप्यते ।
व्यापारेण हि सर्वेषामन्वितत्वं प्रतीयते ॥ ८५ ॥

यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः ।
न त्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चयः ॥

न तावद्यत्र देशोऽसौ तत्काले वावगम्यते ।
भवेन्नित्यविभुत्वाच्चेत् सर्वार्थेषु च तत्समम् ॥ ८७ ॥

तेन सर्वत्र दृष्टत्वात् व्यतिरेकस्य चागतेः ।
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ ८८ ॥

अथैवं देशकालाभ्यामसत्यत्वप्रकल्पने ।
वाचकप्रत्ययं कश्चिद् ब्रूयादर्थधियान्वितम् ॥ ८९ ॥

---

धर्मो भवति, परस्तादपि स तावानेव प्रमातव्यः । तद् यदि पक्षधर्मत्वमवगन्तुमसौ प्रथममेवावगम्यते, ततो गृहीते तस्मिन् किं परमाविना पक्षधर्मादिज्ञानेन यतो नानुमानतेत्याह— पक्षेति द्वयेन ॥ ८३;८४ ॥

अन्वयमिदानीं दूषयति— अन्वय इति । कथं न निरूप्यते, अत आह— व्यापारेणेति ॥ ८५ ॥

एतदेव दर्शयति— यत्रेति । इह त्वेवं नास्तीत्याह — न त्विति ॥ ८६ ॥

कथं नेत्यत आह — न तावदिति । इदं च पूर्वमेवोक्तमिति । ननु वैभवाच्छब्दस्य नित्यत्वाच्चार्थस्य शब्दार्थयोरवश्यतेऽन्वयो दर्शयितुमित्याह — भवेदिति । परिहरति— सर्वार्थेष्विति ॥ ८७ ॥

किमतो यद्येवमत आह — तेनेति ॥ ८८ ॥

प्रकारान्तरेण सम्बन्धमाशङ्कते — अथैवमिति ॥ ८९ ॥



नैवमप्यस्ति दृष्टो हि विनाप्यर्थधिया क्वचित् ।
वाचकप्रत्ययोऽस्माभिरव्युत्पन्ननरान् प्रति ॥ ९० ॥

द्वितीयादिप्रयोगे च भवेदन्वयकल्पना ।
शतकृत्वः प्रयुक्तेऽपि न च दृष्टार्थधीः क्वचित् ॥

ननु ये ज्ञातसम्बन्धास्तेषां दृष्टोऽन्वयः स्फुटः ।
यद्येवमन्वयात्पूर्वं सम्बन्धः कोऽपि कल्पितः ॥ ९२ ॥

नाङ्गमर्थधियामेषा भवेदन्वयकल्पना ।
अन्वयाधीनजन्मत्वमनुमानस्य च स्थितम् ॥ ९३ ॥

ज्ञाते प्रतीतिसामर्थ्ये तद्वशादेव जायते ।
पश्चादन्वय इत्येष कारणं कथमुच्यते ॥ ९४ ॥

---

एतदपि दूषयति— नैवमिति । कारणमाह— दृष्टो हीति (अस्मा)भिरन्त्येन । क दृष्टः, अत आह — अव्युत्पन्नेति ॥ ९० ॥

ननु द्वितीयादिप्रयोगे शब्दार्थप्रत्यययोरन्वयो ग्रहीष्यत इत्याशङ्कते — द्वितीयादीति । एतदपि दूषयति—शतकृत्व इति । शतकृत्वः प्रयोगेऽप्यजिज्ञासुर्न सम्बन्धं बुध्यते । अविदितसम्बन्धश्च नार्थं प्रत्येतीति ॥ ९१ ॥

ननु ज्ञातसम्बन्धस्य तावन्न शब्दज्ञानमर्थज्ञानं व्यभिचरति । तस्यैव चानुमानत्वमिष्यत इत्याह — नन्विति । परिहरति — यद्येवमिति । यदि ज्ञातसम्बन्धस्यान्वयः, अन्य एव तर्हि सम्बन्धश्शब्दार्थयोरभ्युपगम्यत इति ॥ ९२ ॥

ततः किमत आह — नाङ्गमिति । यदि नाङ्गं, किं जातमत आह — अन्वयेति । असत्यन्वये ज्ञानं नानुमानमिति भावः ॥ ९३ ॥

अन्वयस्तु पूर्वावगतप्रतीतिसामर्थ्यानुसारेणैव जायमानो नार्थप्रतीतौ कारणमित्याह — ज्ञात इति ॥ ९४ ॥

तस्मात्तन्निरपेक्षैव शब्दशक्तिः प्रतीयते ।
न च धूमान्वयात्पूर्वं शक्तत्वमवगम्यते ॥ ९५ ॥

व्यतिरेकोऽप्यविज्ञातादर्थात् शब्दधियो यदि ।
सोऽपि पश्चात् स्थितत्वेन नार्थप्रत्ययसाधनम् ॥ ९६ ॥

सम्बन्धं यं तु वक्ष्यामस्तस्य निर्णयकारणम् ।
स्यादन्वयोऽतिरेकश्च न त्वर्थाधिगमस्य तौ ॥ ९७ ॥

तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद् भवेत् ।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ ९८ ॥

सति चास्य प्रमाणत्वे भेदाभेदनिरूपणा ।
युक्ता न तु पदज्ञानात् पदार्थोऽत्र प्रमीयते ॥ ९९ ॥

---

उपसंहरति—तस्मादिति । अनुमाने तु नान्वयात्पूर्वं गमकत्वसिद्धिरित्याह — न चेति ॥ ९५ ॥

व्यतिरेकमिदानीं दूषयति — व्यतिरेक इति । न ह्यनवगतेऽर्थे तज्ज्ञानेन विना शब्दज्ञानं भवतीति व्यतिरेकश्शक्यतेऽवगन्तुम् । अवगतश्चेदर्थः किं व्यतिरेकाश्रयणेनेति ॥ ९६ ॥

किमिदानीमनुपयोगिनावन्वयव्यतिरेकौ शब्दे नेत्याह— सम्बन्धमिति । शक्तिनि(ष्कर्षे त)योर्व्यापारो वाच्यवाचकरूपश्शब्दार्थयोः सम्बन्ध इति ॥ ९७ ॥

एवं च त्रैलक्षण्यपरित्यागेनाननुमानत्वं प्रसाध्य प्रयोगेण दर्शयति — तस्मादिति । शब्दो नानुमानं त्रैरूप्यरहितत्वात् प्रत्यक्षवत् । तादृग्विषयवर्जनात् । तद्वदेव तादृक् । विषयवर्जनं च 'सामान्यविषयत्वं ही'त्यादिना वर्णितमेवेति ॥ ९८ ॥

इदं च पदस्यानुमानाद् भेदप्रतिपादनं प्रौढिप्रदर्शनार्थमस्माभिः कृतम् । न तु पदं प्रमाणमित्याह — सतीति ॥ ९९ ॥



पदं प्रयुज्यमानं हि चतुर्धार्थे प्रयुज्यते ।
प्रत्यक्षे च परोक्षे च ज्ञातेऽज्ञातेऽपि वा पुरा ॥ १०० ॥

तत्र यत्पूर्वविज्ञाते प्रत्यक्षे च प्रयुज्यते ।
प्रमिते च प्रयुक्तत्वादनुवादोऽभिकाङ्क्षं विना ॥

अदृष्टपूर्वे त्वज्ञानं सम्बन्धप्रत्ययोऽपि वा ।
सम्बन्धो नच तस्यार्थो योऽर्थः स त्वक्षगोचरः ॥

परोक्षेऽननुभूते च नाभिधेये मतिर्भवेत् ।
परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ॥ १०३ ॥

प्रमिते च प्रवृत्तत्वात् स्मृतेर्नास्ति प्रमाणता ।
परिच्छेदफलत्वाद्धि प्रामाण्यमुपजायते ॥ १०४ ॥

---

यथा न प्रमाणं तथा दर्शयति—पदमिति । तानेव चतुरः प्रकारानाह — प्रत्यक्ष इति ॥ १०० ॥

एवमर्थेषु प्रयुक्तस्य यथा न प्रामाण्यं तथाह — तत्रेति ॥ १०१ ॥

अदृष्टपूर्वे तु सम्प्रति प्रत्यक्षेऽनुत्पत्तिलक्षणमेवाप्रामाण्यमित्याह — अदृष्टपूर्व इति । सम्बन्धज्ञानमेव वा तदा जायत इत्याह — सम्बन्धेति । न च सम्बन्ध एव पदस्य प्रमेय इति वाच्यम्, तस्यार्थापत्तिप्रमेयत्वादित्यभिप्रायेणाह — सम्बन्ध इति । तदर्थस्तु प्रत्यक्षादवगत इत्याह — योऽर्थ इति ॥ १०२ ॥

अननुभूतपूर्वे परोक्षे च ज्ञानानुत्पत्तिरेवेत्याह — परोक्ष इति । अनुभूते तु परोक्षे स्मृतिरित्याह — परोक्ष इति ॥ १०३ ॥

ननु स्मृतिमेव जनयत् प्रमाणं भविष्यत्यत आह — प्रमित इति । प्रमितविषया हि स्मृतिः, सन्निकृष्टार्थगोचरं च प्रमाणमिति स्थितिरिति । कथं पुनः प्रमितविषयं न प्रमाणमत आह — परिच्छेदेति । परिच्छेदफलं हि प्रमाणम् । न च स्मृत्या किञ्चित् परिच्छिद्यते, पूर्वविज्ञानमात्रोपस्थापकत्वादिति ॥ १०४ ॥

तादात्विकपरिच्छेदफलत्वेन प्रमाणता ।
प्रत्यभिज्ञानवत् कस्मात् स्मृतेरपि न कल्प्यते ॥
यावान् पूर्वपरिच्छिन्नस्तावानेवावधार्यते ।
स्मृत्या तदनुसारेण तदा सत्त्वेऽस्य नैव धीः ॥ १०६ ॥
पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ।
यदाधिक्यं भवेत् किञ्चित् तत्पदस्य न गोचरः ॥
प्रमाणमनुमानं वा यद्यपि स्यात्पदान्मितिः ।
वाक्यार्थस्यागमार्थत्वान्न दोषो नागमवादिनाम् ॥

---

अत्र चोदयति — तादात्विकेति । यद्यपि पूर्वमसावर्थोऽवगतः, तथापि तदानीं सत्तां बोधयन्ती प्रत्यभिज्ञानवत् स्मृतिः प्रमाणं किमिति न भवतीति ॥ १०५ ॥

परिहरति — यावानिति । उत्पद्यते स्मृतिरन्यदा, न तु प्रत्यभिज्ञानवत् तदानीं वस्तुनस्सत्तां निश्चाययति, पूर्वज्ञानानुसारित्वादिति ॥ [ १०६ ॥

ननु पूर्वसंस्कारमात्रजा हि स्मृतिः, इदं तु प्रत्युत्पन्नकारणकं पदात् पदार्थज्ञानं ग्रहणमेव, कथं स्मृतिरुच्यते । अत आह — पदमिति । मा भूत् स्मरणं, ग्रहणमपीदमनधिकविषयमेवाधिकप्रतिभासाभावात्, अतो न पदं स्मारकेभ्यस्सदृशादृष्टादिभ्यो विशिष्यत इत्यप्रमाणमिति । ननु क्रियाकारकयोरन्यतरोच्चारणेऽवश्यमन्यतरस्यान्यतरव्यतिषक्तो बुद्धौ भवति । अतः कथमुच्यते नाधिक्यमवगम्यत इत्यत आह — यदाधिक्यमिति । पदान्तरस्यैवासौ प्रसादो न पदस्यैकस्यैवेत्यर्थः ॥ १०७ ॥

इदं चास्माभिस्सौहृदमात्रेण शिष्येभ्यः कथ्यते न पदं प्रमाणमिति । न तु तत्प्रमाणत्वे वाक्यार्थो नागमार्थो भवति । तेन हि प्रमाणेनापि भवतावश्यं पदार्थे भवितव्यम् । अतः प्रमाणान्तरानधिगतमर्थं गमयद्वाक्यं प्रमाणमेव । एवमनुमानान्तर्गतत्वेऽपि पदस्य न काचित् क्षतिः, वाक्यार्थस्याननुमेयत्वादित्याह — प्रमाणमिति ॥ १०८ ॥



वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवादृते ।
बुद्धिरुत्पद्यते तेन भिन्नासावक्षबुद्धिवत् ॥ १०९ ॥
वाक्याधिकरणे चास्य हेतोः सिद्धिर्भविष्यति ।
सर्वेषां च परोक्तानां वाक्याद् बुद्धावसिद्धता ॥ ११० ॥

---

आह वाक्यार्थज्ञानस्यैव कथमननुमानत्वं, तदप्यालोचितानुमानमनुमानमेवात आह — वाक्यार्थ इति । अगृहीतसम्बन्धा एव पदार्थाः वाक्यार्थं गमयन्ति । अतो न वाक्यार्थज्ञानमनुमानम् । एवञ्च दर्शयितव्यं वाक्यार्थबुद्धिरनुमानाद् भिन्ना सम्बन्धानुभवादृते जायमानत्वाद् अक्षबुद्धिवदिति ॥ १०९ ॥

कथं पुनरप्रतिबद्धमर्थान्तरस्य प्रतिपादकम्, एवं ह्यतिप्रसङ्गः । अतोऽसिद्धो हेतुरत आह — वाक्येति । ये च परैः पदार्थबुद्धेरनुमानाभेदहेतव उक्ताः, ते तावद् बहवो वाक्यार्थबुद्धावसिद्धा इत्याह — सर्वेषामिति । वाक्यार्थबुद्धिर्हि न तावदन्वयव्यतिरेकजा । नापि सम्बन्धपूर्विका । नैव प्रत्यक्षदर्शनप्रभवा । पदादवगतानां पदार्थानां तत्कारणत्वात् । सामान्यविषयत्वमप्यसिद्धं विशिष्टविषयत्वात् । प्रत्यक्षान्यप्रमाणत्वतदृष्टार्थबोधने तूपमानादीनि प्रसाध्य नैकान्तिकीकार्ये । तदृष्टार्थबोधनं चानुमानाभासैरप्यनैकान्तिकम् । एवं त्रिकालविषयमप्यनुमानाभासेनैव । एवमेव पदार्थबुद्धावपि दर्शयितव्यम् । अन्वयव्यतिरेकजत्वं तु तत्राप्यसिद्धमेव । उक्तं हि शब्दशक्तिनिर्धारणे 'तयोर्व्यापारो न बुद्धिजन्मनी'ति । सम्बन्धपूर्वकत्वं तु यद्यविशेषितं तत् प्रत्यक्षेणैवानैकान्तिकम्, तदपि हीन्द्रियार्थसम्बन्धपूर्वकमेव । अथानुमानाङ्गसम्बन्धपूर्वकत्वं, तदसिद्धम्, व्याप्तिर्हि तदङ्गम् । न च पदात् पदार्थज्ञाने व्याप्तिः कारणम् । सामान्यविषयत्वं चाभासैनैवानैकान्तिकमेव प्रत्यक्षदर्शन(प्रभवत्व)प्रत्यक्षान्यप्रमाणत्वतदृष्टार्थबोधनानि तूपमानादिभिरपीति ॥ ११० ॥

अत एवैवं वाक्यार्थबुद्धिस्सहार्थैरदृष्टेष्वपि वाक्येषु पदार्थमात्रविदो बाध्यते । अतोऽस्याः स्फुटतरमनुमानाद् भेदं पश्यन्तस्सौगतास्ततोऽवतीर्यागमस्यानुमानव्यतिरेकात् बिभ्यतः पदार्थभेदविचारणायामेव क्लिष्टाः । एवं हि

वाक्येष्वदृष्टेष्वपि सार्थकेषु
पदार्थविन्मात्रतया प्रतीतिम् ।
दृष्ट्वानुमानव्यतिरेकभीताः
क्लिष्टाः पदाभेदविचारणायाम् ॥ १११ ॥

इति शब्दवार्तिकम् ।

## अथोपमानपरिच्छेदः ।

कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि ।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ १ ॥

---

मन्यन्ते । अस्तु तावत्पदमप्यनुमानादभिन्नम् । एतावतापीह शब्दानुमानयोरैक्यमिति वाक् प्रवर्तत एवेति सोपहासमाह — वाक्येष्विति ॥ १११ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
शब्दपरिच्छेदः समाप्तः ॥

## अथोपमानपरिच्छेदः ।

'उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्ये'ति भाष्यम् । अस्यायं तात्पर्यार्थः — उपमानमपि न परीक्षणीयम् , एवं लक्षणकत्वेनाव्यभिचारादिति । अवयवार्थस्त्वेकत्र दृश्यमानं सादृश्यं प्रतियोग्यन्तरे दृश्यमानप्रतियोगिसादृश्यविशिष्टतयाऽसन्निकृष्टेऽर्थे यां बुद्धिमुत्पादयति 'एतत्सादृश्यविशिष्टोऽसा'विति, सोपमानमिति यत्तदोरध्याहारः । न च वाच्यं विषयविशेषानुपादानात् कथं सादृश्यविशिष्टविषया बुद्धिरवगम्यत इति, प्रसिद्धप्रमाणानुवादेन ह्यत्रापरीक्षा प्रतिपाद्यते । लोके च सादृश्यविशिष्टविषयैव



एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।
तस्यागमाबहिर्भावादन्यथैवोपवर्णितम् ॥ २ ॥
पुरुषप्रत्ययेनैव तत्रार्थः सम्प्रतीयते ।

---

बुद्धिरुपमानमिति प्रसिद्धम् । अतो न दोषः । दृश्यमानविशेषणमेकदेशदर्शनादितिवदनुपात्तमिति चेद् न । उदाहरणे उपादानात् । एवं ह्याह— 'यथा गवयदर्शनं गोस्मरणस्ये'ति । अस्यार्थः — दृश्यतेऽस्मिन्निति दर्शनं, अधिकरणे ल्युट् । गवयो दर्शनमस्येति गवयदर्शनम् । सादृश्यमन्यपदार्थः । एतदुक्तं भवति— गवये दृश्यमानं सादृश्यमिति । अत्रोदाहरणानुसारेण लक्षणवाक्येऽपि दृश्यमानमेव सादृश्यमभिमतमिति गम्यते । गोस्मरणस्येति च 'नन्दिग्रही' (पा- ३-१-१३४) त्यादिना कर्तरि ल्युः । गां स्मरतः प्रमातुः । यथा गवये दृश्यमानं सादृश्यमेतत्सदृशी गौरिति बुद्धिमुत्पादयतीति । सङ्गतिस्तु प्रसिद्धिबाहुल्यात् शाब्दानन्तरमुपमानमिति प्रागेवोक्तम् । अत्र चोदयति — प्रसिद्धप्रमाणानुवादेनात्रापरीक्षा प्रतिपाद्यते । अतो यथा नैयायिकोक्तमुपमानं प्रमाणमाश्रियते, एवं तदुक्तमेवोपमानलक्षणमाश्रयितुमुचितम् । एवं हि तैरुक्तं— 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान'मि'ति । अस्यार्थः — प्रसिद्धेन गवादिना साधर्म्यात् साध्यस्याप्रसिद्धस्य गवयादेः कञ्चिदनभिज्ञं प्रति साधनं प्रज्ञापनं यादृशो गौस्तादृशो गवय इति वाक्यं, तज्जनिता वा बुद्धिरुपमानमिति । तदेतत्परिहारेण लक्षणान्तरप्रणयने कारणं वाच्यमित्यत आह— कीदृगिति द्वयेन । सत्यं नैयायिकैरिदमुक्तम् । न तु युक्तम् । अनन्तरोक्तागमाबहिर्भावात् । शब्दविज्ञानाद्धीदमसन्निकृष्टेऽर्थे विज्ञानम् । अतोऽन्यथैव शाबरे तन्त्रे उपमानं वर्णितमिति ॥ १,२ ॥

नैयायिकागमलक्षणानुसारेणाप्यस्यागमत्वमवगम्यत इत्याह — पुरुषेति । एवं हि नैयायिकानां शाब्दलक्षणम् 'आप्तोपदेशश्शब्द' इति । अत्रापि ह्याप्तपुरुषप्रत्ययेनैवापरिदृष्टे गवयादौ सादृश्येन सम्प्रत्ययो भवति । नानाप्त(द्धि ? द्वि)संवादात् । अत आप्तस्यैवेदं वचनमव्यभिचारीति मत्वा तद्बलभावी निश्चयो जायते, तेषामप्यागम एवेति ॥ ३ ॥

तदीयवचनत्वेन तस्मादागम एव सः ॥ ३ ॥

सदृशादुपजायेत या मतिः सदृशान्तरे ।
ध्यानादिस्मृतितुल्यत्वात् सा प्रमाणं कथं भवेत् ॥ ४ ॥

देशकालादिभेदेन यथान्यत्र विशिष्यते ।
प्रमेयं नैवमस्त्यत्र नगरस्थानुसारतः ॥ ५ ॥

श्रुतातिदेशवाक्यानामारण्ये गवये मतिः ।
या सोपमानं केषाञ्चिद् गोसादृश्यानुरञ्जिता ॥ ६ ॥

---

ननु शाबरेऽपि सदृशदर्शनात् सदृशान्तरे ज्ञानमुपमानमिति वर्णितम् । एतदपि स्मरणाबहिर्भावादप्रमाणमेव । यथा हि किञ्चिद् ध्यायतः स्मरणं भवति, एवं सदृशदर्शिनोऽपि सदृशान्तरे स्मरणम्, अतो न ध्यानादिजन्मना स्मृत्या सहास्याः कश्चिद् विशेषः । अतोऽप्रमाणमित्याह — सदृशादिति । नैयायिकलक्षणं तावदागमाबहिर्भावि । शाबरं त्वप्रमाणमेव उद्गृह्णातीति ॥ ४ ॥

ननु स्मृतिसम्भिन्नमपि देशादिभेदेन जायमानं प्रत्यभिज्ञानं प्रमाणं दृष्टम् । एवमिहापि गां नगरे दृष्टवतो वने गवयदर्शिनस्तज्ज्ञानं प्रमाणं भवत्वत आह — देशकालादीति । न खलु देशादिभेदस्तन्मात्रतया प्रामाण्ये कारणम्, अपि तर्हि प्रमेयतया, न चेह देशान्तरादिविशिष्टो गौः प्रमीयते, अपि तु नगरावगतस्सम्प्रत्यपि तत्स्थ एव स्मर्यत इति ॥ ५ ॥

नैयायिकैकदेशिनां मतमुपन्यस्यति — श्रुतेति । येन किलातिदेशवाक्यं श्रुतं यादृशो गौस्तादृशो गवय इति, तस्य श्रुतातिदेशवाक्यस्य वनं प्राप्तस्य यत् स्वयमसौ गोसदृशो गवय इति सादृश्यानुरञ्जितं गवयज्ञानमिदमुपमानमिति ॥ ६ ॥



प्रत्यक्षो गवयस्तावत् सादृश्यस्मृतिरत्र तु ।
ननु सादृश्ययुक्तेऽर्थे न स्मृतिर्नेन्द्रियाद् गतिः ॥ ७ ॥
पूर्ववाक्यार्थविज्ञानान्नाधिक्यं गवये यदि ।
स्मरणादविशिष्टत्वात् सङ्गतेर्न प्रमाणता ॥ ८ ॥
अथ त्वाधिकता काचित् प्रत्यक्षादिवशाद् भवेत् ।
यावदीन्द्रियसम्बद्धे[1] तत्प्रत्यक्षमिति स्मृतम् ॥ ९ ॥

---

एतदपि दूषयति — प्रत्यक्ष इति । गवयस्तावदिन्द्रियसन्निकर्षात् प्रत्यक्षेण प्रतीयते । गोसादृश्यमप्यतिदेशवाक्यादवगतं स्मर्यत इति नोपमेयमस्तीति । अत्र चोदयति — नन्विति । अयमभिप्रायः — गोसादृश्यविशिष्टो ऽत्र गवयोऽवगम्यते । न च तत्प्रत्यक्षं, गोरप्रत्यक्षत्वात् । तद्विशिष्टो गवय उपमानस्य विषयः । न ह्यसौ प्रत्यक्षेणावसीयते, गवयमात्रविषयत्वात् तस्य । न चागमादवगतः स्मर्यते, सामान्यविषयत्वादागमस्य । इह चायमसाविति विशेषप्रतिभानादिति ॥ ७ ॥

एतदपि विकल्प्य दूषयति — पूर्वेति सार्धेन । इदमत्र विकल्पनीयम् — अतिदेशवाक्यादवगतात् किञ्चिदधिकमवगम्यते न वा, यदि नेत्याह, ततः स्मरणादविशिष्टा सङ्गतिरियमप्रमाणम् । यथा पदात् पदार्थज्ञानं प्रत्युत्पन्नकारणजत्वेनास्मरणमप्यनधिकविषयत्वादप्रमाणम्, एवमिहाप्यतिदेशवाक्यावगतगोसादृश्यविशिष्टगवयज्ञानम् । यदि तु सामान्यावगताद् विशेषावगमेऽस्ति विशेष इत्युच्यते, स तर्हि प्रत्यक्षादेव लभ्यत इति न प्रमाणान्तरावकाश इति ॥ ८$\frac{1}{2}$ ॥

ननूक्तमसन्निहिते गवि तत्सादृश्यस्याप्रत्यक्षत्वान्न तद्विशिष्टो गवयः प्रत्यक्षेणावगन्तुं शक्यत इति सावकाशं प्रमाणान्तरमित्यत आह — यावदीति । यावदिन्द्रियव्यापारानन्तरमपरोक्षं भासते तन्नः प्रत्यक्षम् । तथा च सादृश्यविशिष्टो गवय इति कथमप्रत्यक्षो भविष्यति । प्रतिभाति कृत्स्नपरिसमाप्तमेव जातिवत् सादृश्यमित्यप्रत्यक्षेऽपि गवि तत्सादृश्यविशिष्टगवयप्रत्यक्षमुपपद्यत एवेति भावः ॥ ९ ॥

---

१. 'सम्बन्धः' इति मुद्रितपुस्तकपाठः.

स्मर्यमाणस्य चांशस्य विवेके नाप्रमाणता ।
श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते ॥ १० ॥
येऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम् ।
प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम् ॥ ११ ॥
अथ संज्ञानुसन्धानं तेषां नास्तीति वर्ण्यते ।
न नाम, वस्तु तत्तावत् सर्वथा तैः प्रतीयते ॥ १२ ॥
न च शब्दार्थसम्बन्धः प्रमेयोऽत्र तदेष्यते ।
सादृश्यावधृते वाक्ये वाक्यादवगतो ह्यसौ ॥ १३ ॥

---

न च शब्दादिस्मरणसम्भेदादप्रमाणता, गृह्यमाणस्मर्यमाणयोर्विवेकस्य सविकल्पकसिद्धौ फणितत्वादित्याह— स्मर्यमाणस्येति । विवेके सति नाप्रमाणतेत्यर्थः । श्रुतातिदेशवाक्यविशेषणोपादानस्यापि न फलमुपलभ्यत इत्याह — श्रुतेति ॥ १० ॥

कथं नोपयुज्यते— येऽपीति । गोसादृश्यविशिष्टगवयदर्शनं चेदुपमानमभिमतं तदाश्रुततद्वाक्यानामपि नगरे गां दृष्टवतां वने गवयं पश्यतामस्त्येवेति मन्दं विशेषणफलमिति ॥ ११ ॥

नन्वश्रुतातिदेशवाक्यानामयमसौ गवय इति संज्ञानुसन्धानं नास्ति, इतरेषामस्तीत्ययमस्ति विशेष इत्याह—अथेति । परिहरति—न नामेति । यदुपमानस्य प्रमेयमभिमतं तत्तावत्तेऽपि जानन्ति । संज्ञित्वं मा नामानुसन्धीयतामिति ॥ १२ ॥

स्यान्मतम्—संज्ञासंज्ञिसम्बन्ध एवोपमानस्य विषयः । यथोक्तं न्यायविस्तरे— "समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थं" इति । विवृतं च— "यथा गौरेवं गवय इत्युक्ते गवा समानार्थमिन्द्रियसन्निकर्षादुपलभमानोऽस्य गवयशब्दस्संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत' इति । न चाश्रुतातिदेशवाक्यस्य शब्दमविदुषस्समाख्यासम्बन्धप्रतिपत्तिस्सम्भवतीति फल-



न चास्य प्रत्यभिज्ञानं पुनरुत्पद्यते वने ।
शक्त्योरतीन्द्रियत्वेन स्मृतिरेव हि लभ्यते ॥ १४ ॥
शब्दानुविद्धबोधेऽपि प्रत्यक्षमुपपादितम् ।
तस्मात् सादृश्ययुक्तार्थः प्रमेयोऽपूर्व उच्यताम् ॥१५॥

---

वद्विशेषणमत आह — न चेति । कारणमाह — सादृश्येति । अतिदेशवाक्यादेव गोसादृश्येन गवयशब्दवाच्येऽर्थेऽवधारिते व्यक्तिरूपेणानवगतोऽपि शब्दार्थसम्बन्धोऽवगत एव । एतद्धि तदावगतं गोसदृशं वस्तु गवयशब्दवाच्यमिति । एतावच्च सम्बन्धस्य स्वरूपम्, अतस्सूक्तं विशेषणानर्थक्यमिति ॥ १३ ॥

ननु ज्ञातस्यापि सम्बन्धस्य प्रत्यभिज्ञाने प्रामाण्यमविहतमेवात आह — न चेति । अत्र कारणमाह — शक्त्योरिति । वाच्यवाचकशक्तिनियमो हि शब्दार्थयोस्सम्बन्धः । स चातीन्द्रियत्वान्नेह प्रत्यभिज्ञायते । पूर्वावगत एवान्यूनानतिरिक्तः स्मर्यते । किमिदानीमतीन्द्रिये नैव प्रत्यभिज्ञानमस्ति, यद्येवमनुमानेन कथं पूर्वानुभूतमग्न्यादि प्रत्यभिज्ञायते । आह च— 'गृहीतेऽपि देशादिभेदभिन्ने पुनः प्रमाप्रत्यभिज्ञानुमानात्स्यात् प्रत्यक्षवदवधारितेऽपी'ति । इहापि च वक्ष्यति—

'येन नाम प्रमाणेन ग्रहणं बुद्धिकर्मणोः' ।

इति । सत्यम् । न ब्रूमः परोक्षं न प्रत्यभिज्ञायत इति, यद्वेतदयमसौ गोसादृश्यविशिष्टो गवय इतीन्द्रियजमपरोक्षावभासं प्रत्यभिज्ञानम् —

अस्य शब्दार्थसम्बन्धशक्तिरूपो न गोचरः ।
गोसादृश्येन विज्ञातपूर्वो गवय एव तु ॥

इति । अत एव 'न चास्ये'ति सम्बन्धस्य प्रत्यभिज्ञानविषयत्वं निराकरोति । गवयस्त्विह गोसादृश्येनावगत पूर्वः प्रत्यभिज्ञायत इति न किञ्चिदनुपपन्नमिति ॥ १४ ॥

अथोच्येत (प्र? प्रत्य) क्षाद् व्यावर्तयितुं विशेषणोपादानम् । श्रुतशब्दोल्लिखितमिदं गवयज्ञानमतो न प्रत्यक्षस्य विषय इत्युपमानस्य सविषयतोच्यत आह — शब्देति । शब्दानुविद्धबोधेऽपि हीन्द्रियसम्बन्धा-

व्यवसायात्मकत्वं तु प्रत्यक्षस्य यदेष्यते ।
जात्यादिवत् तदा तेन सादृश्यं किं न मीयते ॥ १६ ॥
प्रत्यक्षाभासमेतत्तु निर्विकल्पकवादिनाम् ।
प्रमेयवस्त्वभावाच्च नाभिप्रेता प्रमाणता ॥ १७ ॥

नुसारि ज्ञानं न शब्दशक्तिपरामर्शजमेवेति, प्रत्यक्षमेवेति वर्णितमित्यतो नैकत्रापि लक्षणे उपमानस्य प्रमेयमतिरिक्तं पश्याम इति वाच्यमस्यापूर्वं प्रमेयमित्युपसंहरति—तस्मादिति ॥ १५ ॥

यदि तूच्यते—प्रतियोगिसापेक्षं सादृश्यग्रहणम् अतो न प्रत्यक्षम्, अर्थेन्द्रियसामर्थ्यमात्रजं हि प्रत्यक्षं ज्ञानं, न तत्पूर्वमपरं वाऽनुसन्धत्ते । अतः प्रत्यक्षेऽपि धर्मिणि परोक्षमेव सादृश्यमिति न तद्विशिष्टस्य प्रत्यक्षत्वमिति सावकाशमुपमानमित्यत आह — व्यवसायेति । बौद्धानामयं सिद्धान्तः—यदविकल्पकमापातजं प्रत्यक्षमिति । नैयायिकास्तु व्यवसायात्मकप्रत्यक्षवादिनः । अतो जात्यादिवत्सादृश्यमपि तेषां किं न प्रत्यक्षेण प्रमीयत इति ॥ १६ ॥

निर्विकल्पकवादिनामपि नेदं प्रमाणान्तरं, प्रत्यक्षाभासत्वादित्याह — प्रत्यक्षेति । एवं तावत् सादृश्यस्य वस्त्वन्तरत्वमङ्गीकृत्य तत्प्रत्यक्षतयोपमानस्य विषयाभावेनाप्रामाण्यमुक्तम् । इदानीं बौद्धमतेन सादृश्यापलापमाह — प्रमेयेति । निर्विकल्पकप्रत्यक्षवादिनामपि सादृश्यप्रमेयाभावादुपमानस्य प्रमाणता नाभिप्रेता । अतस्तेषु स्पर्धमानेषु कथमुपमानं प्रमाणम् । अयं च तेषामभिप्रायः — सादृश्यं हि न तावदाश्रयेभ्यो भिन्नमनुपलम्भात् । अभेदे चाश्रयात् तन्मात्रापातात् । कथं चाश्रयेषु वर्तते । न तावत् कार्त्स्न्येन भेदप्रसङ्गात्, न ह्येकमत्र कार्त्स्न्येन वृत्तमन्यत्रापि तथैव वर्तत इति साम्प्रतम् । न च भागशः, तदभावात् । किञ्चेदं सादृश्यं न तावद् द्रव्यगुणकर्मणामन्यतमम्, पदार्थपण्डितैस्तेष्वनुपसंख्यातत्वात् । न हि नवसु द्रव्येषु चतुर्विंशत्यां गुणेषु पञ्चसु वा कर्मसु सादृश्यमन्तर्गतं पश्यामः । न च सामान्यमेव सादृश्यं, तद्धि तद्बुद्धौ कारणं, तद्बुद्धिरेवं च सादृश्यं, तत्सादृश्ये च गोत्वादावपि तथात्वप्र-



सङ्गः । अवयवसामान्यानि सादृश्यमिति चेद् । न । तेष्वप्येकैकस्येन सादृश्यबुद्धेरुपजननात्*। भूयांसि सादृश्यमिति चेद् । न । भूयस्स्वप्येकत्र समाहृतेषु प्रतियोग्य(न्यतरा?)नपेक्षेषु सादृश्यबुद्धेरुपजननात्* । सन्ति खलु तान्येकत्र समाहृतानि वस्तूनि, न च सादृश्यबुद्ध्या गृह्यन्ते, न ह्यनपेक्षितप्रतियोगिभेदं सदृशोऽयमिति गां जानाति । प्रतियोग्यपेक्षया सामान्यानि सादृश्यमिति चेत् । किमिदानीमापेक्षिकं सादृश्यम् । बाढम् । यद्येवमपेक्षया तदभिव्यज्यते जन्यते वा । न तावज्जन्यते द्वित्वमिवापेक्षाबुद्ध्या, सहजसिद्धत्वात् । अभिव्यञ्जकानि त्वालोकेन्द्रियादीनि सन्तीति किमन्यदपेक्षते । यदि चावयवसामान्यानि सादृश्यं, यमयोस्तु तदभावादभावप्रसङ्गः । तत्रापि तदभ्युपगमे तन्नाशे सामान्यनाशात् सिद्धान्तहानिः । चित्रादौ च पारिणामिकानामवयवानां करशिरःप्रभृतीनामभावात् सामान्याभावे सादृश्याभावः । एवमेव गन्धादिष्वपि प्रसङ्गो दर्शयितव्यः । अवयवानां कर्णादीनामवयवान्तराभावादसादृश्यम् । अत्र मतम्, सत्यं नावयवसामान्यानि सादृश्यम् । किन्तु तत्त्वान्तरमेवेदं द्रव्यजातिगुणकर्मभ्यो व्यतिरिक्तं गुणभेदो वा । यथाह गुरुः — 'न सामान्यं सादृश्यम् । किं तर्हि? तदेव तत्, गोत्वादेरेकत्वा'दिति । एवं चोपपन्नो भवति सदृशसम्भावनमेव तत्र विध्यर्थः श्येनचित्चोदनार्थः । श्येनव्यक्तिजात्योस्स्वभावनिर्मितपक्षत्वप्रसमांसलोहितास्थिशिरःपुच्छपादाद्यवयवारब्धावयविसमवायित्वेनेष्टकाभिरशक्यसम्पादनत्वात् । यदि चावयवसामान्यानि सादृश्यमिष्यन्ते ततस्तेषामिहाभावात् सादृश्यमपि दुस्सम्पादनमिति सोऽनारभ्योऽर्थः प्रतिज्ञातो भवेत् 'श्येनचितं चिन्वीते'ति । एवं चानवयवेष्वपि गन्धादिषु सादृश्यसंविदुपपत्स्यत इति । तच्च नैवम् । तत्त्वान्तरे हि सादृश्ये गामनपेक्ष्यापि गवयं सदृशमिति जानीयुः । तत्र हि तच्चिरवशेषमेव सादृश्यं परिसमाप्तमिति किमन्यदपेक्ष्यते । कथमनपेक्षिते गवि तत्सादृश्यविशिष्टोऽवगम्यत इति चेत् किस्तस्य गवा सम्बन्धः । समवाय इति चेत्, सोऽपि तर्हि गवयवद् गोसदृशतया ज्ञातव्यः । अपि च समवेतं नाम तत्सादृश्यं गवयगतसादृश्यग्रहणेऽपि किमित्यपेक्ष्यते । न हि गोत्वं शाबलेये समवेतमिति

* 'रुपजननापातात्' इति भाव्यम् ।

सादृश्यस्यापि वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १८ ॥

बाहुलेये तद्बोधेऽपि तदपेक्षा दृष्टा । तथेदं गवि गवयसादृश्यमिति न तदपेक्षाहेतुरुपलभ्यत इति । अपि चापेक्षितां नाम गौः, दूराद् गामुपलभ्यवतो(ऽ)विदितावयवसामान्यविभागस्यापि गोसदृशगवयज्ञानं भवेत् । अवयवसामान्यान्यपि तद्बोधेऽप्यपेक्ष्यन्त इति चेत् । वक्तव्योऽपेक्षार्थः । यदि मतम्, अभिव्यञ्जकानि तस्यावयवसामान्यानीति, तानि तर्हि गवयवर्तीनि तस्याभिव्यञ्जकानि, सन्ति च तानि गवे(?वि)इति किं गोगततद्वेदनेन, अतो गव्यवगतेऽनवगतेषु चावयवसामान्येषु गोसादृश्यज्ञानं जायेत । जात्योर्हि तत्सादृश्यम्, अवगते च ते इति किमन्यदपेक्ष्यते । यच्चेदमवयवसामान्यानां बाहुल्ये सदृशत्वम्, इदं च न स्यादर्थान्तरत्वे सादृश्यस्य सर्वत्र तावत्त्वात् । स्यान्मतम्, व्यञ्जकानि तानि तस्य । भवति चाभिव्यञ्जकप्रकर्षेऽभिव्यङ्ग्यबुद्धिप्रकर्षः । यथा घटादौ तद्वदिहापि भविष्यतीति । तन्न । न हि बुद्धिमात्रमत्र प्रकृष्यते । अपि तर्हि वस्त्वेव सातिशयमुपालभामहे । अत एव मुख्यापचारे सदृशोपादित्सया सुसदृशं प्रतिनिधीयते । न मन्दसदृशमित्येतदपि यत्किञ्चित् । अतः कल्पनामात्रकल्पितं द्विचन्द्रालातचक्रादिवद् भ्रान्तिकारणं सादृश्यं न प्रामाणिकमिति । प्रमेयाभावादपि नोपमानाङ्गमन्यद् वा सादृश्ये प्रमाणमित्याक्षेप इति ॥ १७ ॥

अत्र समाधिमाह — सादृश्यस्येति । अयमभिप्रायः — नेदं कल्पनामात्रकल्पितं, मिथ्यात्वहेतुद्वयासम्भवात् । द्विचन्द्रादिप्रत्यया हि कुतश्चिद्दोषादुत्पन्नाः कालादिभेदेषु बाध्यन्ते । सादृश्यं तु जात्यादिवदबाधितबुद्धिवेद्यं कथमन्यथा भविष्यति । यथा चासाधारणप्रत्यक्षवादिनां तत्सत्यमेवं सादृश्यमपीति किमपह्नूयते । तदिदमवगतमसंशयितमबाधितं च देशान्तरादिष्वपत्यास्ति तावत् सादृश्यं, प्रमाणबलेन यथा तदुपपद्यते तथा कल्पनीयम् । न हि दृष्टेऽनुपपन्नं नाम किञ्चिदस्तीति ॥

तत्र यत्तावदुक्तं किमस्य स्वरूपमिति । तत्रोत्तरमाह — भूयोवयवेति । अस्यार्थः — भूयोभिरवयवसामान्यैर्यो जात्यन्तरस्य योगः



तत् सादृश्यम् । जात्यन्तरावयवसामान्यग्रहणमुपलक्षणार्थम्, व्यक्तिसादृश्यमपि यमादिषु दृष्टमेव । एवमवयवसामान्यैर्विनापि गुणकर्मादिसामान्ययोगेनापि सादृश्यं दृष्टमेव, यथा चित्रादिषु । एतेन यदुक्तं चित्रादौ कथं सादृश्यमिति तत् परिहृतम् । एवमणावपि संस्थानपरिमाणसामान्यं दर्शयितव्यम् । यमयोस्त्ववयवसामान्याभ्युपगमे यानुपपत्तिरुक्ता, असौ परिहरिष्यत एव । गुणानां त्वसत्यप्यवयवसामान्येऽवयवगुणसामान्यमेवावयविगुणानां सादृश्यमिति दर्शयितव्यम् । कर्मणां च सौर्यादीनां द्रव्यदेवतादिधर्मसामान्यमेव सादृश्यम्, अवयवसामान्यस्योपलक्षणार्थत्वादिति । तत्त्वान्तरवादिनां चेदमाश्रयपारतन्त्र्याद् गुणान्तर्गतमेवास्थेयम् । न पञ्चममलौकिकत्वात् । जातिद्रव्यगुणक्रियाः पदार्था इति लोकसिद्धम् । अतोऽस्य गुणस्य सतो गुणकर्मणोरनुपपन्न एव समवायः । अथ द्रव्यसमवेतमेव गुणकर्मणी अपि सदृशतया बोधयति, एकार्थसमवायात् । यथावयवसमवेतं सामान्यं गोगवयजात्योरसमवेतमपि ते सदृशतया बोधयति, एकार्थसमवेतसमवायादित्युच्यते । न । द्रव्यसमवाये प्रमाणाभावात्, अवयवसामान्यानि हि कर्णादीनि व्यक्तिसमवेतानि प्रत्यक्षाणि । सादृश्यं तु सदृशबुद्ध्या ग्रहीतव्यम् । न च गन्धादिसदृशं द्रव्यमिति प्रत्ययोऽस्ति । अतः कथं तद्वर्तिना सादृश्येन गन्धादीनि सदृशानि भवेयुः । अतोऽवयवसामान्यमेव सादृश्यमिति । नन्वेकत्रैव भूयसामवयवसामान्यानामुपलम्भात् सादृश्यबोधप्रसक्तिरित्युक्तम्, परिहृतमिदं जात्यन्तरस्येति वदता । जात्यन्तरसमवायिनां जात्यन्तरे समवायात् सादृश्यम्, न स्वरूपमात्रम्, न च भूयस्त्वम् । एतच्चोपरिष्टाद् विवरिष्यत एव । अतो जात्यन्तरग्रहणमपेक्षितव्यम् । यत्तु न तेन तज्जन्यत इति । सत्यम् । अभिव्यज्यते तु तत् । यथोक्तम् —

सामान्यानि च भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते ॥

इति । यद्धि यस्योपलब्धौ निमित्तं, तत्तदभिव्यञ्जकम् । अत एकैकत्रापि स्वरूपमात्रेण सामान्यानि गम्यन्त एव । जात्यन्तरसमवायात्मना

सदृशावयवत्वं तु यत्र पद्मदलाक्षिवत् ।
तत्र स्वावयवसामान्यभूम्ना तेषां भविष्यति ॥ १९ ॥
एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।

तु तानि सादृश्यम्, समवायात्मा च नाप्रतिसंहिते जात्यन्तरेऽभिव्यक्तो भवतीति युक्तैव तदपेक्षा । न च यदर्थान्तरापेक्षप्रतिभासं तदवस्तु भवति । न हि देवदत्तस्य पितृत्वं पुत्रापेक्षया प्रतीयत इति, तदवस्तु । अतः आपेक्षिकाण्येवञ्जातीयकानि न चालयितुं शक्यन्ते । अत एवावयवसामान्यप्रचयाप्रचययोस्सुसदृशादिबोधोपपत्तिः । अतः सिद्धं जातिव्यक्त्यन्तरावच्छिन्नानि गुणावयवादिसामान्यानि सादृश्यमिति ॥ १८ ॥

ननु पद्मदलाक्षीयमङ्गनेति पद्मावयवेन दलेनाङ्गनायाश्चक्षुरुपमीयते, यदि चावयवसामान्यं सादृश्यं, न तदिह सम्भवति, स्वयमेवावयवत्वात्, न हि चक्षुषश्चक्षुरावयवान्तरमस्ति । अत आह — सदृशेति । नावश्यं महावयविनो योऽवयवस्तत्सामान्यं सादृश्यम् । अवयवसामान्यानि तु सादृश्यमित्युक्तम् । तच्चावयवानामपि चक्षुरादीनां स्वावयवसामान्यभूम्ना सम्भवत्येवेति युक्तोऽङ्गनादीनां सदृशावयवबोध इत्याह ॥ १९ ॥

अस्तु तावदवयवेष्ववान्तरावयवसामान्ययोगात् सादृश्यम्, विनापि तु तानि तत्र तत्र सदृशबोधो दृष्टः । स कथमुपपद्यते अत आह — एवमिति । नेदमवयवसामान्यग्रहणं तन्त्रम् । यदेव तु किञ्चिद् गुणादिसामान्यं सदृशधियमुपजनयति तदेव सादृश्यमतो नात्रैकरूप्यमेव । विचित्रता तु सादृश्यस्य यथादर्शनमङ्गीकर्तव्यम् । तद् यथा — जातिसादृश्यम् 'अग्निर्वै ब्राह्मण' इति, अग्निसदृश इत्यर्थः । किमनयोस्सादृश्यम्, एकस्माद् ब्रह्मणो मुखाज्जातिरुत्पत्तिरित्यर्थः । इदं च तत्सिद्धिसूत्रे वक्ष्यते । कुतः पुनरनयोस्समानाभिजननत्वमवगम्यते । श्रुतेः । एवं ह्याह— 'प्रजापतिर्मुखतस्त्रिवृतं छन्दसां निरमिमीत अग्निं देवतानां ब्राह्मणं मनुष्याणामि'ति । लोके च समानाभिजननयोर्दर्शयितव्यम् । गुणसामान्यं तु चित्रादौ सुप्रकाशमेव लोके, वेदे च 'आदित्यो यूप' इति ।



एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥ २० ॥
न धर्मा एव सादृश्यं भूयस्ता वा तदाश्रया ।
भूयस्त्ववद्धि जात्यादि सदृशत्वेन दृश्यते ॥ २१ ॥

द्रव्यसादृश्यं समालङ्कारधारिणोर्लोके, वेदे च "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"ति । क्रियासादृश्यमध्ययनादिसामान्याल्लोके, वेदे च यज्ञविहङ्गमयोर्निपत्यादानसामान्यात् । एवं ह्याह— "यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते" इति । शक्तिसादृश्यं तु भीमो मल्ल इति लोके, वेदे च सोमपूतीकयोः । अवगम्यते हि पूतीकानां सोमशक्तिरर्थवादात् । तत्कार्यत्वेनावगमात् । कार्यस्य च कारणानुविधायिशक्तिकत्वात् । उक्तं च— "सोमस्य योंऽशुः परापतत् स पूतीकोऽभवदि"ति । स्वधर्मसादृश्यं केचित् त्रिशिखाः केचित् पञ्चशिखा इति लोके त्रिशिखादीनामन्योन्यसादृश्यं, वेदे च वसिष्ठान्यादीनां नराशंसो द्वितीयः प्रयाज इति । धर्मनियम एव हि तत्र सादृश्यम्, प्रकृतिविकृतिकर्मणोश्च धर्मसामान्यमेव सादृश्यमित्युक्तमेव । एते च जात्यादय एकैकशो द्विशस्त्रिशस्समस्तशश्च समाना भवन्तस्सादृश्यस्य विचित्रतामापादयन्तीति ॥ २० ॥

ननु यत्र सादृश्यं समवैति तत्सदृशबुद्ध्या गृह्यते । यदि चावयवसामान्यानि सादृश्यं, तानि तदवयवेषु समवयन्तीति तेष्वेव सदृशधियं जनयेयुः । अथ तेषां भूयस्ता, सा चावयवसामान्येष्विति तान्येव सदृशानि स्युः । कथं जात्यन्तरे सदृशबुद्धिरत आह— न धर्मा इति । सत्यम् । अत एव हेतोर्न धर्माख्यावयवसामान्यानि तद्भूयस्ता वा सादृश्यं, तेषु सादृश्यबुद्ध्यनुत्पत्तेः । यदेव हि तेषां भूयस्तया युक्तं जात्यन्तरं गवयादि व्यक्त्यन्तरं वाग्नेयसौर्यादि, तदेव सदृशबुद्ध्या गृह्यते । अतो जात्यन्तरसमवाय एव तेषां सादृश्यम् । स्वरूपतस्त्वेकैकशस्तानि सामान्यानि प्रधानसामान्यवदेकत्वबुद्धिनिबन्धनमेव । पिण्डितानि तु जात्यन्तरसमवायोपहितानि सादृश्यम्, अयं च भूयोऽवयवसामान्येत्यस्यैव प्रपञ्च इति ॥ २१ ॥

यमयोः कथमेतच्चेद् दृष्टत्वात् किमिहोच्यते ।
क्वचिद्धि भूयसामेतत् क्वचिदल्पीयसामपि ॥ २२॥

नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।
सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥ २३॥

अनन्ताश्रययोगाच्च न नाशोऽन्यत्र विद्यते ।
तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥ २४ ॥

---

अत्र चोदयति — यमयोरिति । जात्यन्तरस्येति यावच्छ्रुतग्राहिणः परिचोदनमिदम् — यदि जात्यन्तरस्य भूयोऽवयवसामान्ययोगतस्सादृश्यं कथं यमयोर्व्यक्तिसादृश्यमिति । इतरस्तु — प्रदर्शनमात्रं जात्यन्तरस्येति केयमत्रैवास्था, तदयमर्भको वराक इत्यपहसति — दृष्टत्वादिति । यत्रैव सादृश्यं दृश्यते जातौ व्यक्तौ वा, तत्रैव तदाश्रयणीयम् । किमेकत्रैवास्थां बध्नासीति । स्यादेतत् । एकस्वभावा हि भावा जात्यादयः । तदिदं सादृश्यमपि तथैव युक्तम् । यदि तावदल्पवृत्तिस्वभावं व्यक्त्योरेव युक्तम्, अथ बहुवृत्तिस्वभावं ततो जात्योरेव । अर्धवैशसं त्ववस्तुतामापादयतीति, अत आह — क्वचिद्धीति । प्रतीत्यविसंवादादुभयोपपत्तिरिति भावः ॥ २२½ ॥

ननु सामान्यानि सादृश्यं, तानि च व्यक्तिनाशेन नश्येयुः । अतो नित्यं सामान्यमिति सिद्धान्तहानिरत आह — सामान्यानीति । एतानि तावन्नाशीनि भवन्तु, सामान्यान्तराणि गोत्वादीनि नित्यान्येवेति न कश्चिल्लोकविरोध इति ॥ २३ ॥

कः पुनस्सामान्यान्तरेषु विशेषः, अत आह — अनन्तेति । अनन्तो हि गोत्वादीनामाश्रयः । तदेकस्य नाशेऽप्याश्रयान्तरे प्रत्यभिज्ञानात्रैकान्तिको नाश इति । नित्यसामान्यवादोऽपि न नस्सार्वत्रिक इत्याह — तेनेति ॥ २४ ॥



सामान्यस्य न वा नाशः कश्चिदभ्युपगम्यते ।
सर्वस्य ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥ २५ ॥

तेषां भूयस्तया चेदं सादृश्यमतिरिच्यते ।
तानि व्यस्तानि सन्त्येवं प्रत्यक्षेऽपि क्वचित् क्वचित् ॥ २६ ॥

सदृशावयवत्वं तु यत्र नाम प्रतीयते ।
तदप्यवयवानां स्यात् समानावयवान्तरैः ॥ २७ ॥

एवं तावद् यतो नास्ति पराभेदप्रकल्पना
ततः परं तु सामान्यं भवेत् सादृश्यवर्जितम् ॥ २८ ॥

प्रधानानां तु सामान्यं यत्रैकं सम्प्रतीयते ।

---

अथत्वावयवसामान्यानामपि नात्यन्तिको नाशोऽस्तीत्याह — सामान्यस्येति । कारणमाह — सर्वस्येति ॥ २५ ॥

यद्यस्ति तत्रापि सादृश्यधिया भवितव्यमत आह — तेषामिति । भूयस्तया तेषां सादृश्यमतिरिक्तं भवति, न त्वेकैकशो न सन्तीति । न केवलं सामान्यमनश्वरमिति देशान्तरादिष्वाश्रयसद्भावः कल्प्यते । अपि तु प्रत्यक्षेऽपि क्वचिदर्थे तान्युपलभ्यन्त एवेत्याह — तानीति ॥ २६ ॥

नन्वक्ष्यादीनां स्वावयवसामान्यभूम्ना सादृश्यमुक्तं, तदवयवानां तु कथं सादृश्यं भविष्यत्यत आह — सदृशेति । यथा महावयविनो येऽवयवाः स्वावयवसामान्यैस्सदृशा भवन्ति, एवं यत्र नामावयवेष्वपि सदृशावयवत्वमवगम्यते तेऽप्यवान्तरावयवसामान्यैस्सदृशा भवन्तीति न कश्चिद् दोष इति ॥ २७ ॥

तावच्चैवं दर्शयितव्यं यावन्निर्भागा भागा इत्याह — एवमिति । ततः परं परमाणुत्वमेव केवलं सामान्यमित्याह — तत इति ॥ २८ ॥

ननु यदि सामान्यानि सादृश्यं गोत्वादौ प्रसङ्गः, तत्त्वाभेदादित्यत आह — प्रधानानामिति । अयमभिप्रायः — संविन्निष्ठा हि नो वस्तु-

---

1. सामान्यानामिति मुद्रितपुस्तकपाठः,

स एवेति भवेत् तत्र तद्भेदे सदृशत्वधीः ॥ २९ ॥
चित्रादौ यत्र सादृश्यं सामान्यं तत्र किं भवेत् ।
तत्रापि पृथिवीवर्णविशेषादिसमानता ॥ ३० ॥
रूपगन्धरसानां च कस्यचिद् तुल्यता क्वचित् ।

---

व्यवस्थितयः, अतो यत्सदृशबुद्धिमुत्पादयति तत्सादृश्यम् । प्रधानावयविनां तु यत्र गोत्वादिसामान्यमेकं प्रतीयते, तत्र स एवेति प्रतिभासो भवति, न स इवेति । अतः प्रधानसामान्यं न सदृशबुद्धेर्हेतुरिति न सादृश्यम् । तद्भेदे प्रधानसामान्यभेदे गोगवययोस्सादृश्यबुद्धिर्भवति, न च तयोरितरेतरसादृश्यबुद्धिः । अतो यत्र गोत्वादिसामान्यं वर्तते न तत्र सदृशबुद्धिः । यत्र सदृशबुद्धिर्न तत्र तद्वर्तत इति तद्वर्तीन्यवयवसामान्यान्येव पिण्डितानि सदृशबुद्धेर्हेतुत्वात् सादृश्यमिति सिद्धम् । एवं च यन्निबन्धनकारेण सादृश्यस्य तत्त्वान्तरत्वे कारणमुक्तं गोत्वादावपि प्रसङ्ग इति, तत् प्रत्युक्तमिति ॥ २९ ॥

चित्रादाववयवसामान्याभावात् सादृश्यानुपपत्तिरिति चोदयति— चित्रादाविति । परिहरति— तत्रापीति । पारिणामिकावयवसमुदेतः सामान्याभावेऽपि पृथिव्यंशे शुक्लादयो वर्णविशेषाः परिमाणश्च तैस्सादृश्यमुपपादितमिति । किं पुनरिदं जातिसादृश्यं व्यक्तिसादृश्यं वा । नेदमुभयमपि सम्भवति, उभयाभावात् । न हि चित्रादौ नरत्वादिजातयस्तद्व्यक्तयो वा सम्भवन्ति । स्वभावनिर्मितपाण्याद्यवयवसमवायित्वाद्धि व्यक्तेः, तत्समवायित्वाच्च जातेः । उच्यते । व्यक्तिरेवात्र सदृशी । यद्यपि चात्र नरत्वं नास्ति, द्रव्यत्वं त्वस्तीति तद्व्यक्तिस्सदृशतया प्रतीयते । प्रायेण चाकृतिसादृश्यमेव तत्रावगम्यते । कुशलस्तु चित्रकारो व्यक्तिसादृश्यमुन्मीलयतीति ॥ ३० ॥

ननु पिण्डितान्येवावयवसामान्यानि सादृश्यम् । एवं गुणसामान्यान्यपि मिलितानि सादृश्यमित्युक्तम् । चित्रादौ तु रूपमात्रमेव समानं न गन्धादयः । अत आह— रूपेति । रूपादीनां मध्ये कस्यचिदेकस्यापि



नावश्यं सर्वसामान्यात् सादृश्यमुपजायते ॥ ३१ ॥
पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।
परिणामादिभिर्व्यक्तिर्यथादृष्ट्यवधार्यते ॥ ३२ ॥
न हि शक्त्यात्मना किञ्चिदसज्जन्म प्रपद्यते ।
धर्माणां न च नानात्वमस्ति चावान्तरस्थितिः ॥
वस्तुत्वे सति चास्यैवं सम्बद्धस्य च चक्षुषा ।
द्वयोरेकत्र वा दृष्टेः प्रत्यक्षत्वान्न[1] वार्यते ॥ ३४ ॥

---

तुल्यतया सादृश्यं भवत्येव । उक्तमसकृत् 'यथा दर्शनं तदाश्रीयत' इति । तदिह चित्रादौ वर्णसामान्यमेव । कुसुमादिगन्धविशेषाणां गन्धसामान्यं, क्षीरशर्करादौ रससामान्यं सादृश्यम् । अवश्यं सर्वगुणसामान्यसमवायो नानुसर्तव्य इति ॥ ३१ ॥

परिहारान्तरमाह— पृथिव्यादिष्विति । एवं हि सत्कार्यवादिनो वदन्ति—नात्यन्तमसत्कर्तुं शक्यं, गगनकुसुमवत्, अतोऽसतः कार्यत्वं निवृत्तं सत्तां गमयति । अतो नराद्यवयवसामान्यान्यपि नात्यन्तमसन्ति जायन्ते । किन्तु सन्त्येव स्वकारणेषु पृथिव्यादिषु भूतेषु परिणामादभिव्यज्यन्ते । सा च तेषां पारिणामिक्यभिव्यक्तिर्यथादर्शनमेवावधारयितव्या । यथा च तानि पाण्यादिमत्सु देवदत्तादिषु दृश्यन्ते, एवं चित्रादिमार्गेष्वितीति तत्र किमिति नाभ्युपगम्यन्ते । अतोऽवयवसामान्यान्येव चित्रादावपि सादृश्यमिति ॥ ३२ ॥

प्राक्सत्त्वे कारणमाह— न हीति । इदं च प्रागेवोक्तमिति । यत्तु सादृश्यं भिन्नमभिन्नं वेति विकल्प्यावस्तुत्वमापादितम्, तत्रोत्तरमाह— धर्माणामिति । सर्वधर्माणामेव जात्यादीनां न धर्मिणो नानात्वम्, अथ चावान्तरस्थितिरपि धर्मधर्मिकृतास्त्येव । एवं सादृश्येऽपि । अतो नानेन तदपलपितुं शक्यते । सर्वत्रानैकान्त एव प्रतीत्यविसंवादात् समर्थनीय इति ॥ ३३ ॥

तदेवं सादृश्यस्य वस्तुत्वे सिद्धे चक्षुषा सम्बद्धस्य सतोर्द्वयोर्धर्मिणोर्युगपदीक्षमाणस्यैकत्र वा प्रत्यक्षत्वं सिद्धमित्याह— वस्तुत्वे इति ॥ ३४ ॥

---

1. प्रत्यक्षत्वमिति व्याख्यानुगुणः पाठः.

सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टेऽपि तस्मात् तदुपपद्यते ॥ ३५ ॥

तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते ।
सन्निधेर्गवयस्थत्वाद् भवेदिन्द्रियगोचरः ॥ ३६ ॥

तस्माद् यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ ३७ ॥

प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते ।
विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता* ॥ ३८ ॥

प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ ३९ ॥

यत्र त्वसदृशादेव कल्पयित्वोपजायते ।

---

वृत्तिपरिचोदनायामुत्तरमाह—सामान्यवदिति । कारणमाह—प्रतियोगीति । जात्यादिवदुपपत्तिरिति ॥ ३५ ॥

प्रत्येकं कृत्स्नसमवाये चासन्निहितेऽपि गोत्वे स्मृतिस्थे गवयस्थस्य सन्निहितस्य सादृश्यस्येन्द्रियगोचरता सिद्धेत्युपसंहरन्नाह —तत्रेति ॥ ३६ ॥

स्वमतेनेदानीमुपमानस्य प्रमेयं दर्शयति— तस्मादिति । यथाविवक्षं विशेषणविशेष्यभाव इति ॥ ३७ ॥

ननु गौः स्मर्यते सादृश्यं च प्रत्यक्षेण गम्यत इति न प्रमेयमुपमानस्य पश्यामः । अत आह— प्रत्यक्षेणेति ॥ ३८ ॥

अत्र दृष्टान्तमाह —प्रत्यक्ष इति ॥ ३९ ॥

का पुनरत्र व्यभिचारशङ्का, यन्निराकरणार्थं लक्षणप्रणयनम्, अत आह— यत्र त्विति ॥ ४० ॥

---

* 'अन्यतो लोके ह्यसिद्धेऽनुपमानता' इति पाठान्तरम् ।



सादृश्यप्रत्ययस्तत्र तदाभासत्वकल्पना ॥ ४० ॥

बाधकप्रत्ययाच्चैषा सादृश्याभासता मता ।
यथा पलालकूटस्य सादृश्यं कुञ्जरादिना ॥ ४१ ॥

समीपस्थो विजानाति सादृश्यं नेति तत्र हि ।
न बाध्यते समीपादौ यत्तु सादृश्यमेव तत् ॥ ४२ ॥

न चैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात् ।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥ ४३ ॥

गवये गृह्यमाणं च न गवामनुमापकम् ।
प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता ॥ ४४ ॥

---

आभासेतरविवेके कारणमाह—बाधकेति । अत्रोदाहरणमाह—यथेति ॥ ४१ ॥

कथं पुनस्तदाभासत्वमत आह— समीपस्थ इति । बाधकं हि तत्र ज्ञानमुत्पद्यत इति भावः । नेति प्रत्ययाभावे तु परमार्थसादृश्यमित्याह— न बाध्यत इति ॥ ४२ ॥

सर्वमेवालोचितानुगमनमनुमानमिति मन्यमाना येऽस्यानुमानान्तर्भावमिच्छन्ति तान् प्रत्याह— न चेति । पक्षधर्माद्यसम्भवमेव दर्शयति— प्रागिति । धूमादिर्हि प्रमेयस्य पर्वतादेर्धर्मतयानुमानोत्पत्तेः प्रागवगतः पक्षधर्मो भवति । इह तु गौः प्रमेयः । न चोपमानोत्पत्तेः प्राक् तद्धर्मतया सादृश्यं गृह्यते । अतस्तावन्न पक्षधर्मः । गवयशृङ्गित्वादीनां तु पक्षधर्मतोपरिष्टान्निराकरिष्यत इति ॥ ४३ ॥

गवयगतमपि सादृश्यमपक्षधर्मत्वान्न सादृश्यविशिष्टानां गवामनुमापकमित्याह— गवय इति । गोगतं च प्रतिज्ञार्थैकदेशत्वान्न लिङ्गमित्याह— प्रतिज्ञार्थेति ॥ ४४ ॥

गवयश्चाप्यसम्बन्धान्न गोर्लिङ्गत्वमृच्छति ।
सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ॥ ४५ ॥
एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥ ४६ ॥
शृङ्गित्वादेरथोच्येत सम्बन्धाल्लिङ्गता गवि ।
न तेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ॥ ४७ ॥
यदि तेभ्यः प्रतीतिः स्यान्निस्सादृश्यैव सा भवेत् ।
न गौः शृङ्गादिसदृशी सदृशी गवयेन तु ॥ ४८ ॥
सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात् परम् ।
गवयप्रत्ययादेव गोज्ञानमुपजायते ॥ ४९ ॥

---

गवयोऽप्यपक्षधर्मत्वान्न सादृश्यविशिष्टस्य गोर्लिङ्गमित्याह — गवयश्चेति । अन्वयोऽपि तस्य सादृश्यविशिष्टेन गवा नावश्यं विदितपूर्व इत्याह — सादृश्यमिति । द्वेधाप्युपमानस्य प्रमेयं सादृश्यविशिष्टो वा गौस्तद्वा गोविशिष्टम्, उभयस्यापि गवयान्वयो न दृष्टपूर्व इति ॥ ४५ ॥

ननु युगपदुभयं पश्यतां सादृश्यगवययोस्सम्बन्धोऽवगत एवात आह — एकस्मिन्निति । सत्यमवगतं, न तु सर्वेणेत्युक्तमस्माभिः । यदि चान्वयो ज्ञानाङ्गं स्यात्, एकस्याप्यगृहीतान्वयस्य ज्ञानं न स्यादिति ॥

यदि तु शृङ्गित्वादेर्गवा सम्बन्धोऽवगतः, अतस्तद्द्वये गृह्यमाणं गवि लिङ्गं भविष्यतीत्युच्यते । तन्न । तेषामवयवभूतानां गवयावयविज्ञानव्यापारं प्रत्युपक्षीणत्वादित्याशङ्क्य सहाह— शृङ्गित्वादेरिति ॥ ४७॥

यदि तु गवयज्ञानं प्रत्यनुपक्षीणानि स्वरूपेणैव शृङ्गित्वादीनि लिङ्गमिष्यन्ते, ततस्तेभ्यः पूर्वावगतसम्बन्धानुसारेण निस्सादृश्यमेव गोस्मरणं स्यादित्याह — यदीति । कथं निस्सादृश्यमित्यत आह — न गौरिति ॥ ४८ ॥

अयं तु प्रतीतिक्रम इत्याह — सदृशेति । शृङ्गादिप्रत्ययात्परा-



सदृशावयवत्वे तु तेषामेवोपमा भवेत् ।
न च शृङ्गादयो यत्र तत्र गौरनुमीयते ॥ ५० ॥
इत्थं चानुमिमानस्य भ्रान्तज्ञानं प्रसज्यते ।
नगरस्थं तु गोज्ञानं स्मरणान्नातिवर्तते ॥ ५१ ॥
भिन्नानुमानादुपमेयमुक्ता
सौर्यादिवाक्यैरसहापि दृष्टम् ।
सादृश्यतोऽग्न्यादियुतं कथं नु
प्रत्याययेदित्युपयुज्यते नः ॥ ५२ ॥

---

वर्तिनं सादृश्यप्रत्ययमपेक्ष्य गोसादृश्यविशिष्टगवयप्रत्ययादेव पुनस्तत्सादृश्यविशिष्टगोज्ञानमुपजायते, न पुनः शृङ्गादिप्रत्ययमात्रादिति ॥ ४९ ॥

ननु शृङ्गादयोऽपि परस्परसदृशा एवेति कथं तेभ्यो निस्सादृश्या प्रतीतिरुच्यते । अत आह — सदृशेति । यदि गवयादीनां सदृशावयवत्वमवगम्यते, न तर्हि ते सदृशतया प्रमीयन्ते । किन्त्ववयवा एव परस्परं सदृशतया । अतो न सादृश्यविशिष्टगोप्रमितौ शृङ्गित्वादीनां लिङ्गत्वम् । निस्सादृश्यं तु तेभ्यो गोस्मरणमात्रं स्यादिति । अपि चानुमाने यदेकदेशतया धूमादिरवगम्यते प्रमेयमप्यग्न्यादि तदेकदेशतयैव । इह तु शृङ्गित्वादयो गवयैकदेशतया प्रमीयन्ते । न च तदेकदेशो गौरप्यनुमीयत इत्याह — न चेति ॥ ५० ॥

यदि तु कश्चिद् वैयात्यादेवमेवानुमास्यत इति ब्रूयात्, तं प्रत्याह — इत्थमिति । भ्रान्तिरियमभावविरोधादिति । नगरस्थगोज्ञानमविशेषितं सादृश्येन स्मृतिरेवेत्याह — नगरस्थमिति । विषयतात्स्थ्याद् ज्ञानेऽपि तात्स्थ्यव्यपदेशः तदधीनत्वात् तस्येति ॥ ५१ ॥

कः पुनरुपमानस्य वेदार्थ उपयोगः । यदि प्राकृतानां धर्माणां विकृतौ प्राप्तिरुच्यते, तन्न । अनुमानादेव तत्सिद्धेः । प्राकृतं लिङ्गं धर्मैस्सम्बद्धं किञ्चिद् विकृतौ दृष्टं तेषामनुमापकं भविष्यति । जैमिनेरप्येतदेवाभिमतमिति लक्ष्यते । यदेवमाह — "यस्य लिङ्गमर्थसंयोगादि"ति । अत्र हि व्यक्तमेव लैङ्गिकीं धर्मप्राप्तिमुपदिशति । अत आह — भिन्नेति ।

प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगात्
भवति तदपचारे यत्र नीवारजातौ ।
तदपि फलमभीष्टं लक्षणस्योपमायाः
प्रतिकृतिरपि गौणैर्बोध्यते यत्र चान्यैः ॥ ५३ ॥

यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या
भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् ।

---

अयं भावः — प्रतिबन्धदर्शिनो हि प्रतिबन्धकज्ञानमनुमानम् । न चेह सौर्यादिवाक्यानामाग्नेयादिविध्यन्तेन प्रतिबन्धोऽवगतः । न च द्रव्यदेवतयोः । न कर्मणः । अतः कथं तज्ज्ञानमनुमानमिति । प्रमाणान्तरादेवोपमानात् प्राकृतविध्यन्तप्राप्तिरध्यवसातव्या । वैकृतानि हि प्रधानान्यश्रुतविध्यन्तानि न तमन्तरेण पर्यवस्यन्ति । यत्किञ्चिद्विध्यन्तापेक्षां द्रव्यदेवतादिसादृश्यदर्शनोत्थापितोपमानपर्यवस्थापिताग्नेयविध्यन्तानि इतिकर्तव्यतामापाद्य कृतार्थानि भवन्ति । यथेहैव तावत् सौर्याग्नेययोरेकदेवतात्वेन तद्धितदेवतानिर्देशेनौषधद्रव्यकतया च सादृश्यादुपमानेनाग्नेयधर्माः सौर्ये उन्नीयन्ते । अयं चावयवार्थः — इयमुपमा(नुमा)नाद् भिन्नोक्ता अग्न्यादियुतमितिकर्तव्यताजातं सादृश्यमात्रात् कथं नु प्रत्याययेदित्येवमुपयुज्यते । इतरथा सौर्यादिवाक्यैस्सह तस्यादर्शनान्नानुमानं सम्भवतीत्यप्राप्तिरेव स्यात् । अग्न्यादियुतमिति । अग्न्यादिना देवतयाग्नेयादिकर्म लक्षयति । आग्नेयादिना कर्मणा युक्तमितिकर्तव्यतामात्रमित्युक्तं भवतीति ॥ ५२ ॥

प्रयोजनान्तरमाह — प्रतिनिधिरपीति । दर्शपूर्णमासयोः प्रक्रान्तयोर्व्रीह्यपचारे यत्तत्सदृशा नीवाराः प्रतिनिधीयन्ते, तदप्युपमानस्य फलमिति । इदमपरं प्रयोजनमित्याह — प्रतिकृतिरिति युक्तमन्तेन । मुख्यापचारे गौणे शास्त्रार्थ आश्रयितव्ये यत्रातिगौणैर्जघन्यैर्व्रीह्यादिसामान्यैः प्रतिकृतिः सादृश्यं बोध्यते, तत्र सुसदृशलाभे यन्मन्दसदृशं, मिथ्या भवति, तदप्युपमानस्य फलमिति । कथं पुनर्मन्दसदृशं मिथ्या,



मतिरपि च तथैव द्रागिवोत्पद्यतेऽस्मि-
न्नितरदिषयबोधेऽसत्यपीत्थं च बाधः ॥ ५४ ॥

इत्युपमानपरिच्छेदः ।

---

सुसदृशलाभेऽपि ह्यल्पया मात्रया तत्सदृशमवगम्यत एव । अतोऽस्तु तत्राल्पं नानावयवसामान्यमत आह — मतिरिति । न केवलं वस्तुतस्तयोस्सुसदृशासदृशयोः (क्षीव ? तीव्र)मन्दत्वमतिर(पीति ? पितु) तथैव — मुख्यरूपेणेव सुसदृशे द्राक् शीघ्रमुत्पद्यते । इवशब्दोऽलङ्कारे । अतो मन्दसदृशस्य मात्रया सादृश्यबोधेऽप्यनुपादानलक्षणो बोधो भविष्यतीत्यस्ति हानोपादानयोरुपमानोपयोगः ॥ ५३, ५४ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायाम्
उपमानपरिच्छेदः समाप्तः ।

---

## अथार्थापत्तिपरिच्छेदः ।

अत्र भाष्यम् । 'अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना । यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य परिकल्पना' इति । अस्यार्थः — अर्थापत्तिरपि न परीक्षितव्या, एवंलक्षणकत्वेनाव्यभिचारादिति । किं पुनरनेनार्थापत्तेर्लक्षणमुक्तम् । अर्थोऽन्यथानुपपद्यमानो यदर्थान्तरं कल्पयति सार्थापत्तिः । यथा जीवतो देवदत्तस्य गृहाभावो बहिर्भावेन विना नोपपद्यमानो यद् बहिर्भावं कल्पयति सार्थापत्तिरित्युक्तम् ।

यद्येवं केयमन्यथानुपपत्तिर्नाम । यदि तावदनेन विनास्य सद्भावो नोपपद्यत इति, तदिदं कार्यतः कारणानुमानमुपन्यस्तं, न प्रमाणान्तरम् । अथ ज्ञातसम्बन्धस्यानुमानम्, अर्थापत्तौ न सम्बन्धज्ञानमपेक्षत इत्युच्यते, तदयुक्तम् । न ह्यज्ञाते सम्बन्धेऽनेन विना नोपपद्यत इति शक्यते वक्तुम् ।

यदेव ह्यस्येदं कार्यमित्यादिना रूपेण ज्ञातसम्बन्धनियमः, तदेव स्वकारणेन विना नोपपद्यत इति शक्यमवसातुम्, धूम इवाग्निना विना। अतोऽविनाभावसम्बन्धबलोत्थमेवेदं ज्ञानमिति शब्दान्तरेणोक्तम्। स्यादेतत्। दृष्टस्वलक्षणविषयमनुमानमग्न्यादिषु दृष्टम्, अदृष्टस्वलक्षणविषयार्थापत्तिश्शक्त्यादिषूपजायत इति। तन्न। दृष्टमदृष्टं वा ज्ञातसम्बन्धमवगम्यतेऽन्यथानुपपत्त्या, कार्यसामान्यं हि कारणसामान्येन विनानुपपद्यमानं यत्तत् कल्पयति तदपि सम्बन्धज्ञानेन जायमानं कथमनुमानाद् भिद्यते। अदृष्टस्वलक्षणविषयता चानुमानस्य क्रियानुमाने वर्णितैव। अतः प्रमाणान्तरमृगतृष्णिकैवेयम्। सत्यम्, यदि यद् येन विना नोपपद्यते तद् तद्गमकं स्यात्। इह तु यन्नोपपद्यते तदेव गम्यम्। किमिदानीं बहिर्भावो गृहाभावेन विना नोपपद्यते। बाढम्। न हि गृहेऽपि भवन् देवदत्तो बहिरपि भवति, तदस्य बहिर्भावो गृहाभावदर्शनेनैवोपपद्यते। ननु भाष्यकारो दृष्टः श्रुतो वेत्यादि वदन् गमकस्यान्यथानुपपद्यमानतां दर्शयति। न गम्यस्य। ग्रन्थज्ञो देवानां प्रियः। दृष्टः श्रुतो वार्थोऽर्थकल्पनेति हि सम्बन्धः। किमुक्तं भवति, अर्थान्तरस्य प्रमाणमिति। अन्यथा नोपपद्यत इति तर्हि केन सम्बध्यते, प्रमित्येति वदामः। अन्यथानुपपद्यमानतामापादयन्नर्थान्तरस्य गमक इति। कस्यार्थान्तरस्य। यदि बहिर्भावस्य, नास्यानुपपत्तिं गृहाभाव आपादयति, न हि गृहाभावदर्शिनो बहिर्भावो नोपपद्यत इति बुध्यन्ते लौकिकाः, किन्तु चैत्रो बहिरस्तीति। अपि च गम्यविशेषणमन्यथानुपपत्तिमाचक्षाणैर्गमकस्य किमन्यथानुपपत्तिर्नेष्यत एव, यद्येवं कथं ततो बहिर्भावसिद्धिः। अथ सोऽपि नोपपद्यते, ततोऽविनाभावबलेनैव ज्ञानमिति पुनरनुमानत्वम्। किमर्थं चान्यथा नोपपद्यत इति गमकपरित्यागेनाश्रूयमाणया प्रतीत्या योज्यते।

अथोच्यते—अर्थान्तरस्य चैत्रसम्बन्धिनो विद्यमानत्वस्यान्यथानुपपत्तिमापादयन् गृहाभावो बहिर्भावं कल्पयतीति। संशयापादनं चान्यथानुपपद्यमानत्वापादनं, येन हि प्रायेण गृहे नियतश्चैत्रो दृष्टः स गृहाभावदर्शनेनैव चैत्रस्य सद्भाव एव संशेते। प्रतीतेऽपि हि वस्तुनि पूर्वप्रतिपन्नरूपान्तराभावावगमस्संशयमापादयति। देवदत्तस्य विद्यमानता गृहसम्बन्धावगतेति तदभावदर्शनाद् भवति विद्यमानत्वे संशयः — किमस्ति चैत्रो न वेति। अयं च संशयोऽनुपपत्तिरित्याख्यायते। तामिमां विद्यमानत्वस्य संशयरूपामनुपपत्तिमापादयन् गृहाभावो बहिर्भावकल्पनया संशयमुत्सारयंश्चैत्रस्य विद्यमानत्वमुपपादयति। तदिह गृहाभावो विद्यमानत्वस्यार्थान्तरस्य संशयापादनद्वारेण बहिर्भावेनानवगतसम्बन्धोऽपि तं गमयति। विद्यमानत्वमेव वा गृहाभावापादितानुपपत्तिकं स्वोपपादनाय बहिर्भावं कल्पयतीति द्वेधा दर्शनम्। अत एव चानुमानाद् भेदः। न ह्यनुमाने धूमादिः कस्यचित् संशयरूपामनुपपत्तिमापादयंस्तदापादितानुपपत्तिकं वा किञ्चिदग्न्यादिकं गमयति। किन्तु असन्दिग्धादेव धूमादग्निरनुमीयते। यथा चानुमाने निश्चितरूपं लिङ्गं गमकम्। तथेह सन्दिग्धमिति दर्शनबलादभ्युपगन्तव्यम्।



तदेतदसाम्प्रतम्। तथाहि—यत्तावदुक्तं गृहाभावस्संशयमापादयतीति। तदयुक्तम्। कथं हि तेन विद्यमानत्वे संशय आपाद्यते। गृहे चैत्रो दृष्टः कथमिह न भवतीति चेद्, न तावदेवं सर्वे प्रतियन्ति, येनापि हि स तत्र दृष्टः, सोऽपि तं जीवन्तं तत्रासन्तमवगम्य सहसा बहिर्भावं कल्पयतीति। अपि च—यदि वस्तुधर्मविसंवादात् सन्देहः, न तर्हि बहिर्भावकल्पनायां निमित्तं पश्यामः। यथाहि मृतजनिष्यमाणयोः गृहाभावो न बहिर्भावं सूचयति, एवं सन्दिग्धसद्भावस्यापि। यावद्धि चैत्रस्य विद्यमानता न निश्चीयते, न तावद् गृहाभावमात्रदर्शनेन बहिश्चैत्रोऽवस्थापयितुं शक्यते। संशयनिराकरणार्थमपि चात्र प्रमाणान्तरमर्थनीयम्। न बहिर्भावः। निराकृते तु संशये निश्चितसद्भावो गृहाभावदर्शनेन बहिरस्तीति गम्यते। अथ निश्चितसद्भावस्यैव स्थितिप्रकारे सन्देहः कथमस्तीति। स तर्हि चैत्रमपश्यतोऽपि भवतीति किं गृहाभावदर्शनेन। न चासौ बहिर्भावकल्पनाबीजम्। अतो बहिर्भावकल्पनाप्रत्यनीकमेव संशयापादनं, यत्तत्सिद्धये द्वारमाश्रितम्। साधु सम्पादितम्। अतो न विद्मः कीदृशो लक्षणार्थ इति।

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥ १ ॥
दृष्टः पञ्चभिरप्यस्माद् भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा ॥ २ ॥

---

अत आह — प्रमाणेति । अन्यथा नोपपद्यत इत्यन्यथानुपपद्यमानतामापादयन् गमयतीति व्याचक्ष्महे । अपि तर्हि दृष्टश्रुतविशेषणमेवेदम् । य एव कश्चित्प्रमाणषट्कविज्ञातोऽर्थोऽन्यथानुपपद्यमानतया गृहीतः, स एव स्वोपपादनायान्यमर्थं कल्पयति तद्विषया कल्पनाबुद्धिरर्थापत्तिरिति । नन्वेवमविनाभावबलोत्था बुद्धिरनुमानमित्यापादितम् । नैवम् । नह्यन्यथा नोपपद्यत इत्यविनाभावमाचष्टे । स ह्यनेन विना न भवतीत्युक्ते गम्यते । किं नामानेनोच्यते, दृष्टः श्रुतः कल्पनामन्तरेण नोपपद्यत इति । का पुनरस्यानुपपत्तिः, नहि दृष्टेऽनुपपन्नं नाम । दृष्टमपि प्रमाणान्तरविरोधाद् यत् प्रतिहन्यते सानुपपत्तिः । दृष्टो हि गृहे चैत्राभावोऽभावेन । आनुमानिकी च तस्य जीवतः क्वचित् सत्ता । सानिर्धारितदेशविशेषतया गृहमपि व्याप्नोति । सोऽयमभावानुमानयोर्विरोधोऽनुपपत्तिराख्यायते । संशयोऽपि चात्र प्रमाणान्तरविप्रतिपत्तिरेवानवस्थितोभयभानवस्तुलक्षणः । अथवायमनध्यवसाय एवैकस्मिन् बुद्धिमुपसंहर्तुं युक्तिविशेषादशक्नुवतः । अतो नेहान्यतरदुपादातुं हातुं वा शक्यं प्रमाणत्वाविशेषात् । तदिह सङ्कटे प्रामाणिकोऽनुमानस्य विषयं कल्पयति — बहिरस्तीति, 'न हिंस्याद्'ति सामान्यशास्त्रस्येव विहितवर्जितां हिंसाम् । एवं चोभयमुपपादितं भवति अभावोऽनुमानं चेति । सर्वत्र चैवमेव दर्शयितव्यम् । त्रैरूप्यरहितत्वं चास्या उत्तरत्र वक्ष्यामः ।

अत्र च दृष्ट इत्युच्यते, तत्र न विद्मः, किमिह चक्षुर्मात्रेण दृष्टोऽभिप्रेतः, उत प्रत्यक्षमात्रदृष्टः । पूर्वस्मिन् पक्षे श्रोत्रादिपूर्विकार्थापत्तिर्न स्यात्, उत्तरस्मिन्ननुमानादिपूर्विका । अथ प्रमितमात्रपरिग्रहार्थो दृष्टशब्दः, श्रुतो वेति तर्हि किं भेदेनोपादीयते, शब्दावगतमपि हि प्रमितमेव । अथोच्यते नेदमर्थान्तरविवक्षया श्रुतग्रहणम्, किन्तर्हि, अभिधानान्तरमेवेदमुपलब्धेर्वाचकम् । उपलब्धिमात्रविवक्षया



तत्र प्रत्यक्षतो ज्ञाताद् दाहाद् दहनशक्तता ।
वह्नेरनुमितात्सूर्ये यानात् तच्छक्तियोग्यता ॥ ३ ॥

---

हि दृष्टश्रुतशब्दमुपचरन्तो लौकिका दृश्यन्ते । 'न दृष्टो न श्रुतः कश्चित् स्वयं दत्तापहारक' इति । यथा एतदेवाभिप्रेत्य टीकाकारेणोक्तं 'दृष्टः श्रुतो वे'ति लौकिकमभिधानमिति । शाब्दीमुपलब्धिं प्रमाणान्तरेभ्यो भेदेन लौकिका उपाददाना दृश्यन्त इत्युक्तं भवति । इदमपि नोपपन्नम् । कथं हि लक्षणग्रन्थे सुनिपुणो भाष्यकारोऽभिप्रायान्तरमन्तरेण श्रुतपदं प्रयुङ्क्त इत्युपेक्षितुमपि शक्यमिति वाच्यमुभयोपादानप्रयोजनमत आह — दृष्ट इति । सत्यम् । पञ्चभिरपि प्रत्यक्षादिभिर्दृष्टो दृष्टो भवति । उपलब्धिपर्याय एव दृष्टशब्द इति यावत् । तथाप्यस्माद् दृष्टाद् भेदेन शब्दतोऽर्थापत्तिरुपादीयते, तदस्याः प्रमाणग्राहितया पूर्वस्या दृष्टार्थापत्तेर्वैलक्षण्यं दर्शयितुम् । तच्चोपरिष्टाद् वक्ष्यते । प्रथमार्थापत्त्यपेक्षया च पञ्चभिरित्युक्तमिति प्रमाणषट्कपूर्विकार्थापत्त्युदाहरणावसरे ॥ २ ॥

इदानीं प्रत्यक्षपूर्विकामेव तावन्मुख्यतयोदाहरति — तत्रेति वह्नेरन्तेन । का पुनरियं शक्तिः । नेयमतीन्द्रियेदन्तया निर्देष्टुं शक्यते । ननु यद्भावाभावनिबन्धनौ कार्यभावाभावौ इयं शक्तिः, ईदृशी च प्रत्यक्षैव । तथाहि — वह्निसंयोगानन्तरं दाहो दृश्यते असति च न दृश्यत इति तत्संयोग एव शक्तिरिति गीयते, न तत्त्वान्तरम् । स च प्रत्यक्ष इति किमर्थापत्त्या । न । व्यभिचारात् । यथा खलु स्वरूपमात्रमग्नेर्व्यभिचरति, एवं संयोगोऽपि । भवति हि कदाचिदौषधादिसन्निकर्षे संयुज्यते वह्निरथ च न दहतीति । तदिहार्थापत्त्या तत्त्वान्तरं शक्तिरूपं कल्प्यते । कथानुपपत्त्या, प्रमाणान्तरविरोधेन । तथाहि — प्रत्यक्षेण दाहोऽवस्थाप्यते । हेत्वभावेन च प्रतिक्षिप्यते । स हि कार्यभावेन विदितप्रतिबन्धस्तं गमयति । तथाहि — न स्वरूपमग्नेः कारणम्, न तत्संयोगो व्यभिचारात्, नान्यत् किञ्चित् । न चाकस्मादेव भवतीति साम्प्रतम् । एवं हि कदाचिन्न स्यात्, अपेक्षा हि कदाचिद् भावे निबन्धनम्, अनपेक्षं तु नित्यं सदसद्वा भवेत् । अतः कार्यदर्शनादर्शनबलादग्नेः स्वरूपाद्व्यतिरिक्तं किञ्चिद् रूपमुन्नीयते,

यद्भावाभावनिबन्धनौ कार्यभावाभावाविति । स्वरूपमात्रापत्ते तु कार्यभावे तदभेदात् सदापत्तिरिति । स्वरूपमात्रमप्रतिबन्धमग्नेर्दाहस्य कारणम्, औषधादीनां तु प्रतिबन्धृतेति चेत्, कः प्रतिबन्धार्थः । स्वरूपं तावदविनष्टम् । तदेव प्रत्यभिजानीमः । न हि बीजस्योपरि त(ना ? दा)नीते प्रदीपे किञ्चिद् रूपापचयमुपलभामहे । न च तेनाङ्कुरो जन्यते । अथ वस्त्वन्तरसन्निधौ सामग्र्यन्तरमेव जातम्, अतः पूर्वसामग्रीकार्यं नोत्पद्यत इति चेन्नैवम् । न हि मन्त्रादिसंनिकर्षे पूर्वसामग्रीनाशो दृश्यते । न च तत् कार्यमुपलभ्यते । अथ मन्त्रादिरहितमेव कारणं कार्यस्य जनकम् । न तु तत्र तेन किञ्चित् क्रियत इत्युच्यते । तन्न । न ह्यकिञ्चित्करस्य सन्निधिः कार्यं प्रतिबध्नाति । अन्यदपि हि तत्रोदासीनं सन्निहितं भवति । न च कार्यं न जायते । न च मन्त्रादिसन्निधावर्थान्तरमेव जातं पूर्वकारणनाशेनेति मतिराविरस्ति । सकला हि सामग्री प्रत्यभिज्ञायते । अस्ति च तत्र कारणमित्युक्तम् । न च मन्त्रादिप्रागभाव एव वा तद्विशिष्टा वा सामग्री जनिकेति युक्तम् । अभावस्य भावान्तरसिद्धौ व्यापारादर्शनात् । विहिताकरणेऽपि तत्कालेऽन्यक्रिया प्रत्यवायहेतुर्ना(का ? क)रणम् । यदाह —

> स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
> प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥

इति । यदि तु —

> 'कर्तृणः प्रागभावश्च विहिताकरणेषु यः ।
> स चानर्थकरत्वेन वस्तुत्वान्नापनीयते' ॥

इति दर्शनात् मन्त्रादिप्रागभावः कारणमिष्यते । तथापि परस्तात् कार्यदर्शनं नोपपद्यत इति । मन्त्रादिप्रध्वंसोऽपि कारणमिति चेत्, स तर्हि प्राक् नासीदिति प्राङ्मन्त्रादिप्रयोगात् कार्यं न जायेत । न हि क्षितिजलबीजानामन्यतमापायेऽप्यङ्कुरो जायमानो दृश्यते । अपि च सत्येव प्राच्यमन्त्रादिसन्निधाने तद्विपरीतमन्त्राद्यागमे कार्यभावमीक्षमाणा न तदभावस्य कारणभावमवस्यापयामः । न हि विहिताकरणकारणकः प्रत्यवायः सत्यपि विहितकरणे दृष्टः । भवति चात्र प्रयोगः— यद्यदभावकारणकं तत्तद्भावे न भवति विहिताभावभाव्य इव प्रत्यवायो



> श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।
> गवयोपमिताया गोस्तज्ज्ञानग्राह्यता मता ॥ ४ ॥
> अभिधानप्रसिद्ध्यर्थमर्थापत्त्यावबोधितात् ।

विहितभावेन । न चैवं मन्त्रादिभावे कार्यमिति । एवं ह्यकिञ्चित्करो मन्त्रादिभावो न कदाचित् कार्यं प्रतिबध्नीयात् । अतः कारणशक्तेरेव प्रतिबन्धको मन्त्रः, न तदभावः कारणम् । बलवच्चरोपनिपातप्रहतशक्तिस्तु सोऽपि न किञ्चित् प्रतिबध्नाति । न च यद् बलवद्दुर्बलमात्मानं नैव विन्दति, अविरोधेऽपि तेनात्मा न लब्धव्यः । कदाचन मासूत् श्रौतपरिपन्थिविनियोगाभावेऽपि लैङ्गिकविनियोगाभाव इति । अतोऽस्ति कश्चिद् अतिशयः कारणानाम्, यत्रासतिरोधानार्थ्यो कार्यं नारभन्त इति सिद्धं प्रत्यक्षावगताद् दाहाद् दहनशक्तिकल्पनम् । अनुमेयत्वं तु शक्तेरुपरिष्टान्निराकरिष्यत इति । अनुमानपूर्विकार्थापत्तिमुदाहरति अनुमितादिति । देशान्तरप्राप्त्या सूर्ये यानमनुमीयते, ततोऽर्थापत्त्या तच्छक्तिः । अत्रापि प्रमाणान्तरविरोध एवानुपपत्तिः । गमनं हि प्राणिनां विशिष्टपदादिसाधनकमवगतम् । अयं चानुमिततद्विधर्मगमनसाधनोऽपि तथैव न गन्तुमर्हतीति वितर्कः । सोऽयं शक्तिकल्पनया निवार्यते । अस्ति नाम सा काचिदस्य शक्तिः, यया मन्त्रान्तरविधर्मगमनो विपातनिपातयोस्समनुपसर्पतीति ॥ ३ ॥

श्रुतार्थापत्तिस्तु भिन्नविषया दृष्टार्थापत्तिभ्यो विविच्य पश्चादेवाभिधास्यत इत्याह — श्रुतेति । उपमानपूर्विकां दर्शयति — गवयेति । गवयसदृशो गौरित्युपमिते सदृशज्ञानग्राह्यशक्तिरर्थापत्त्या कल्प्यते । ईदृशी च तत्रानुपपत्तिर्भवति — कथं गवि तत्सदृशज्ञानं जन्यते, यदि हि जनयेत् प्रथमदर्शनेऽपि किं न जनयेत्, सन्ति हि तदापि गवि गवयावयवसामान्यानि, तदेवं जातमपि गव्युपमानमनुपपत्त्यावसीदति । शक्तिकल्पनयोपपाद्यते । अस्तिनाम कोऽपि गोरतिशयो यः प्रतियोगिदर्शनप्रतिलब्धाभिव्यक्तिर्गवयसदृशीं धियमुपजनयति । यच्चेदं समाने पशुत्वे गौरेव गवयसदृश इत्युपमीयते तदपि तस्य शक्तिविशेषाभ्युपगमाद् विना नोपपद्यत इति ॥ ४ ॥

अर्थापत्तिपूर्विकामुदाहरति — अभिधानेति । शब्दादनन्तरमर्थप्रतिपत्तिं दृष्ट्वा तस्य तत्कारणत्वमवसीयते । न च व्यापारमन्तरेण का-

शब्दे बोधकसामर्थ्यात् तन्नित्यत्वप्रकल्पनम् ॥ ५ ॥
अभिधा नान्यथा सिद्ध्येदिति वाचकशक्तताम् ।
अर्थापत्त्यावगम्यैव तदनन्यगतेः पुनः ॥ ६ ॥
अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ।
दर्शनस्य परार्थत्वादित्यस्मिन्नभिधास्यते ॥ ७ ॥
प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।
गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥ ८ ॥
तामभावोत्थितामन्यामर्थापत्तिमुदाहरत् ।
पक्षदोषेषु चान्यासामुदाहरणविस्तरः ॥ ९ ॥

---

रणत्वमुपपद्यत इति शब्दसमवायी व्यापारोऽनुमीयते । स चाभिधेति प्रसिद्धम् । तत्सिद्ध्यर्थं च शब्दे वाचकसामर्थ्यमर्थापत्त्या प्रमीयते । अभिधायकत्वे ह्यनुमिते भवत्यनुपपत्तिः, नायमस्याभिधायकः । प्रागिव सम्बन्धज्ञानाद् गृहीतसम्बन्धः प्रत्यायक इति चेद् न । तदभावात् । न ह्यस्यार्थेन संयोगादीनामन्यतमस्सम्बन्धो दृश्यते । तदस्यानुपपत्तौ शक्तिकल्पनोपपादिका भवति । अस्ति खल्वनयोर्वाच्यवाचकशक्तिरूपस्सम्बन्धः । यद्ग्रहान्नार्थोऽवगम्यत इति । एवं च शक्तिकल्पनोत्तरकालं शक्तेरपि नित्यत्वमन्तरेणानुपपत्तेरर्थापत्त्यन्तरेण शब्दस्य नित्यता प्रतीयत इति ॥ ५ ॥

एतदेव विवृणोति—अभिधेति सार्धेन । एतच्च स्वयं जैमिनिनैव शब्दाधिकरणेऽभिधास्यत इत्याह— दर्शनस्येति ॥ ६,७ ॥

अभावपूर्विका तु भाष्यकारेण स्वयमुदाहृतेति न पृथगुदाह्रियत इत्याह — प्रमाणाभावेति सार्धेन । अस्यार्थः— 'यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य परिकल्पना' इति भाष्ये य । चैत्रस्य बहिर्भावसिद्धिर्दर्शिता तामेव प्रकृताभ्योऽन्यामभावपूर्विकामर्थापत्तिं भाष्यकार उदाहरत् उदाहृतवानिति । प्रपञ्चस्त्वर्थापत्त्युदाहरणानां पक्षदोषाभिधानावसरे 'ज्ञानादिनास्तिताया'मित्यादिनानुमाने वर्णित इत्याह— पक्षदोषेष्विति ॥ ८,९ ॥



अभावावगताच्चैत्राद् बहिर्भावस्य सूचनम् ।
पक्षधर्माद्यनङ्गत्वाद् भिन्नैवाप्यनुमानतः ॥ १० ॥
बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।
प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ ११ ॥
तदभावविशिष्टं तु गृहं धर्मो न कस्यचित् ।
गृहाभावविशिष्टस्तु तदाऽसौ न प्रतीयते ॥ १२ ॥

---

इदानीमर्थापत्तेरनुमानाद् भेदे वेदितव्ये भाष्योक्तत्वादभावपूर्विकाया एव भेदं तावदाह — अभावेति । येयमभावप्रमाणेन गृहे नास्तीत्यनेन रूपेणावगताच्चैत्राद् बहिर्भावसूचनात्मिकार्थापत्तिः सापि पक्षधर्मादीनामनङ्गत्वाच्छब्दवदुपमानवदनुमानाद् भिद्यत इति ॥ १० ॥

पक्षधर्माद्यनङ्गत्वमेव दर्शयति — बहिर्देशेति । इह हि बहिर्देशविशिष्टश्चैत्रः पक्षस्तद्विशिष्टो वा बहिर्देशः । न चोभयस्यापि गृहगतोऽभावो धर्म इत्य(स्य) पक्षधर्मत्वं कथम्, न कथञ्चिदित्यर्थः ॥ ११ ॥

नाभावमात्रमविशेषितं चैत्रस्य बहिर्भावे लिङ्गम् । न चास्य गृहं विशेषणं भवति, परतन्त्रं हि विशेषणम्, यथा नीलिमोत्पलद्रव्यस्य । एवमिहापि द्रव्यभूतं गृहमेव तत्परतन्त्रेणाभावेन विशेष्यत इति युक्तम्, व्यापकत्वाच्चाभावो गृहस्य विशेषणम्, शक्यते हि तेन चैत्राधिष्ठितैकदेशव्यतिरिक्तजगद्व्यापिना गृहं व्याप्तुम् । अल्पं तु गृहं न महाविषयमभावं व्याप्तुं शक्नोति । अतो यथा व्याप्यस्य धूमस्याग्निविशिष्टत्वमवगम्यते, अनेनापि प्रकारेण गृहमेवाभावविशिष्टं बहिर्भावस्य लिङ्गमित्यापतति । तच्च तदभावविशिष्टगृहं न कथञ्चिच्चैत्रबहिर्देशाभ्यां सम्बध्यते । अभावस्य तावत् कथञ्चिदस्ति चैत्रान्वयः । चैत्राभाव इति हि स प्रतीयते । गृहं तु न कथञ्चिच्चैत्रसम्बद्धमवगम्यते इत्यपक्षधर्म इत्याह—तदभावेति । इतश्च गृहाभावो न पक्षधर्म इत्याह — गृहाभावेति । गृहीते हि पक्षे तद्धर्मप्रत्ययो भवति । न च चैत्रबहिर्देशौ गृहेऽसत्तया गम्येते इति ॥ १२ ॥

गम्यते तु गृहं तत्र न च चैत्रः प्रतीयते ।
न चात्रादर्शनं हेतुर्यथाभावेऽभिधास्यते ॥ १३ ॥

तेनैवेदमन्यदृष्टत्वादिति हेतुर्न कल्प्यते ।
अदर्शनादभावे च प्रमेयस्यानधारिते ॥ १४ ॥

बहिर्भावमतिर्नासौ तेनादर्शनहेतुका ।
चैत्राभावस्य हेतुत्वं गेहेऽभावश्च संस्थितः ॥ १५ ॥

पूर्वं न चागृहीतस्य धर्मिणः स्यात् प्रमेयता ।
न चात्र बाह्यदेशो वा चैत्रो वा गृह्यते पुरा ॥ १६ ॥

नदीपूरेण वा वृष्टिरुपरिष्टाद् प्रतीयते ।
देशे कथमदृष्टे तु पक्षधर्मत्वसम्भवः ॥ १७ ॥

---

गृहमेव तु तत्र प्रत्यक्षावगतमिति तद्धर्मप्रतीतिरेवाभावे भवतीत्याह — गम्यते तु गृहमिति । न हि तत्र गृह एव चैत्रोऽनुमीयते, प्रमाणविरोधादित्यभिप्रायेणाह — तत्रेति । अदर्शनं हि चैत्रसम्बद्धमवगतमिति तल्लिङ्गं भविष्यतीत्यत आह — न चात्रेति । न च दर्शनाभावो बहिर्भावे लिङ्गम्, एतदभावेऽभिधास्यत इति ॥ १३ ॥

यतो गृहेऽदर्शनमपि न हेतुरित्याह — तेनेति । किञ्च गृहाभावधारणोपक्षीणेऽदर्शने बहिर्भावमतिर्भवति, कथमसौ तद्धेतुका भविष्यतीत्यभिप्रायेणाह — अदर्शनादिति । अभिप्रायं विवृणोति — बहिरिति । अदर्शनावधारितस्य चैत्राभावस्यैवान्यथानुपपद्यमानस्य हेतुत्वं सम्भवति । तच्चापक्षधर्मतया निराकृतमित्याह — चैत्राभावस्येति [॥ १४,१५ ॥

एवं तावत् पक्षधर्मता निराकृता यथोऽप्यननुमानात् पूर्वं नोपलभ्यत इत्याह — पूर्वं नचेति ॥ १६ ॥



वृष्टिमत्परदेशत्वं नदीपूरवतोऽत्र तु ।
देशस्य प्रतिपद्यन्ते यद्वार्थापत्तिरेव सा ॥ १८ ॥

जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते ।
तत्संवित्तिर्बहिर्भावं न चाबुद्ध्वोपजायते ॥ १९ ॥

अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते ।
न तद्ग्रहणवेलायामग्न्यधीनं हि किञ्चन ॥ २० ॥

गेहाभावस्तु यश्शुद्धो विद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न साधकः ॥ २१ ॥

---

अत्र चोदयति — नदीति । अत्र ह्यप्रतिपन्न एवोपरिदेशे पक्षेऽतद्धर्मः पूरो लिङ्गं तद्वदिहापि भविष्यतीति ॥ १७ ॥

परिहरति — वृष्टिमदिति । एवं त्वनुमीयमाने लोकविरोधः । न ह्येवं लौकिका बुध्यन्ते । अत आह — यद्वेति । दृष्टस्य नदीपूरस्य कारणाभावानुपपत्त्योपरिष्टाद् वृष्टिः कल्प्यते । इदमपि चाभ्युपगमवादेनोक्तम्, परमार्थेन तु व्याप्तिबलोत्थमिदमनुमानमेव । न चापक्षधर्मतादोषः । उपरिदेशस्य पूरसम्बद्धदेशसम्बन्धात्, असम्बद्धो हि न हेतुर्भविष्यतीति ॥ १८ ॥

इतश्च गृहाभावो न बहिर्भावे लिङ्गमित्याह — जीवतश्चेति । निश्चितरूपं हि लिङ्गमनुमाने गमकम् । इह च योऽयं जीवतो गृहाभावः स प्रमाणान्तरविरोधान्निश्चेतुमेव न शक्यते । एवं हि तत्र भवति वितर्कः । जीवता हि क्वचिद् भवितव्यम्, कथमिह न स्यात् । एवं चानध्यवसाया-दप्रतिष्ठितो गृहाभावोऽसिद्धत्वादलिङ्गम् । सिद्धिस्तु नानन्तर्भाव्य बहिर्भावमस्य भवति, तदन्तर्भावे च परस्तात् प्रमेयाभाव इति भावः ॥ १९ ॥

अनुमाने त्वनपेक्षितप्रमेयमेव धूमादिलिङ्गस्य स्वरूपं सिद्धमवगम्यत इत्याह — अग्निमत्तेति ॥ २० ॥

यदि त्विहापि हेतोरनपेक्षत्वसिद्ध्यर्थं गृहाभावमात्रमविशेषितं जीवनेन हेतुरिष्यते ततो नैकान्तिक इत्याह — गेहेति ॥ २१ ॥

विद्यमानत्वसंसृष्टगृहाभावधियानया ।
गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥ २२ ॥

गेहाभावत्वमात्रं यत् स्वतन्त्रं तु प्रतीयते ।
न तावता बहिर्भावश्चैत्रस्यैवावधार्यते ॥ २३ ॥

सिद्धे सद्भावविज्ञाने गेहाभावधियात्र तु ।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥ २४ ॥

तेनास्य निरपेक्षस्य व्यभिचारो मृतादिना ।
यस्य त्वव्यभिचारित्वं न ततोऽन्यत् प्रतीयते ॥

---

कथं च विद्यमानत्वविशिष्टो गृहाभावो बहिर्भावं साधयति कथं च शुद्धो नेत्युभयत्र कारणमाह — विद्यमानत्वेति द्वयेन । विद्यमानत्वविशेषणविशिष्टगृहाभावबुद्धौ हि यावद् विद्यमानत्वस्य विषयो नावस्थाप्यते तावदभावः प्रत्येतुमेव न शक्यते, तद् यदा भावप्रतिपक्षेणाभावेन गृहमवरुद्धं तदा तत्र तावच्चैत्रस्य भावो भवितुं न प्रभवतीत्याश्रयापेक्षया पारिशेष्याद् बहिरेव भवतीति । शुद्धाभावप्रतीतौ त्वाश्रयापेक्षैव नास्तीति किं बहिर्भावकल्पनयेति ॥ २२,२३ ॥

ननु च निश्चितसद्भावस्य चैत्रस्य गृहाभावो बहिर्भावमन्तर्भाव्य सिध्येत् । सन्दिग्धसद्भावस्य त्वनपेक्षितबहिर्भाव एव तं गमयिष्यतीत्यत आह — सिद्ध इति । यदि चैत्रसद्भावे सन्देहः, न तर्हि तद्बहिर्भावावगतिः प्रसिध्येत् । असन्दिग्ध एव तु सद्भावविज्ञानेऽभावेन गेहादुत्कालिता — उत्सारिता तत्सत्ता बहिर्भवति नियमेन, इतरथा तत्रापि सन्देह एव भवेत् । एतेन गृहाभावापादितसन्देहं विद्यमानत्वमेव बहिर्भावं कल्पयतीति यैरुक्तं तन्निराकृतमिति वेदितव्यम् । इदं च प्रागेवोक्तमस्माभिरिति ॥ २४ ॥

अतः सिद्धं जीवननिरपेक्षस्याभावस्य व्यभिचारः अव्यभिचारिणश्च प्रमेयानुप्रवेशद्वारेणैव समर्थनमिति धूमादिवैलक्षण्याच्च लिङ्गत्वमित्याह — तेनेति ॥ २५ ॥



तस्मात् प्रत्यक्षतो गेहे चैत्राभावे ह्यभावतः ।
ज्ञाते यत् सत्त्वविज्ञानं तदेवेदं बहिः स्थितम् ॥२६॥

पक्षधर्मत्वलाभाय बहिर्भावः प्रवेशितः ।
तद्विशिष्टोऽनुमेयः स्यात् पक्षधर्मान्वयादिभिः ॥

पक्षधर्मादिविज्ञानं बहिः सम्बोधतो यदि ।
तेश्च तद्बोधतोऽवश्यमन्योन्याश्रयता भवेत् ॥

अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता ।
ताद्रूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥ २९ ॥

---

एवमनुमानाद् भेदं प्रसाधितमुपसंहरति — तस्मादिति । अनुमानाद् बहिर्भूतमिदं प्रमाणं स्थितमिति ॥ २६ ॥

तदेवं गृहाभावस्य प्रमेयानुप्रवेशनसिद्धौ यदि तल्लिङ्गमिष्यते ततो दुरुत्तरमितरेतराश्रयत्वमापद्यत इत्याह — पक्षेति द्वयेन ॥ २७, २८ ॥

नन्वेवमर्थापत्तावपि प्रमेयानुप्रवेशिता, कथं हि प्रमाणान्तरापादितानुपपत्तिरनवस्थितो गृहाभावो बहिर्भावं गमयिष्यत्यत आह — अन्यथेति । द्वेधा ह्यनुपपन्नम्—किञ्चिदनुपपन्नमेव यन्न कथञ्चिदुपपादयितुं शक्यम्, किञ्चिचासति कल्पनेऽनुपपन्नम् । तत्र यदेकान्तमनुपपन्नं तदुपेक्ष्यत एव । यत्तु कल्पिते कस्मिंश्चिदुपपद्यते अन्यथा नोपपद्यते तदुपपत्तिरन्यकल्पनयावसीयते । एवमेव हि सर्वलौकिकपरीक्षका बुध्यन्ते । न च विपर्ययो देशान्तरादिषु दृष्टः । अतः प्रमाणमेवेदम् । यथा चानुमाने निश्चितरूपं लिङ्गं गमकम्, एवमिहापि केनचित्प्रमाणेनावगतं प्रमाणान्तरेणोत्थापितवितर्कम् । न चात्रान्यतरत्रापि प्रामाण्ये संशयः, किन्तु निश्चितप्रामाण्ययोरेव द्वयोस्समर्थनापेक्षामात्रं कथमिदमुभयमुपपद्यतामिति । षोडशिन इव ग्रहणाग्रहणशास्त्रयोः । न तत्रैकपरित्यागेनेतरदुपपादयितुं शक्यते । यतो यथा तत्र कथमिदमुभयमुपपद्यतामित्यपेक्षिते प्रयोगभेदेनोभयमुपपाद्यते, एवमिहापि प्रमाणप्रतिपन्नमुभयं निश्चितसद्भावमर्थान्तरपरिकल्पनया सम-

अविनाभाविता चात्र तदैव परिकल्प्यते ।
न प्रागवधृतेत्येवमन्यथैषा न कारणम् ॥ ३० ॥

गृहाभावबहिर्भावौ न च दृष्टौ नियोगतः ।
साहित्ये तु प्रमाणं च तयोरन्यन्न विद्यते ॥ ३१ ॥

अन्यथानुपपत्त्यैव ह्येकेनान्यत् प्रतीयते ।
तथा न कल्प्यते तच्चेत् साहित्यं न प्रतीयते ॥

र्थ्यते । ताद्रूप्येणैव प्रतिभानात् । विलक्षणानि हि प्रमाणानि विलक्षणसामग्रीकाणि । अत एव परस्परतो भिद्यन्ते । अप्रामाण्यकारणानि च संशयविपर्ययावज्ञानं वा, तच्चार्थापत्तावपि नास्तीति कथमप्रमाणता । कथमज्ञातसम्बन्धात् प्रतीतिः प्रमाणमिति चेत् । न सम्बन्धः प्रामाण्ये कारणम्, अपि तु बाधविरहः । स चेहाप्यविशिष्ट इति न कश्चिद् दोषोऽर्थापत्तावस्माकं प्रतिभातीति ॥ २९ ॥

ननु गृहाभावो नान्तरेण बहिर्भावमुपपद्यते अतो नान्तरीयकः, नान्तरीयकाच्च यदर्थान्तरज्ञानं तदनुमानम्, अतोऽनुमानमेवेदं बहिर्भावज्ञानमत आह — अविनेति । अयमभिप्रायः — नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति केचित् पठन्ति, तेषामपि तद्विदो नान्तरीयकताविद एव नान्तरीयकदर्शनमनुमानमभिप्रेतम्, न चेह नान्तरेण बहिर्भावं गृहाभावो भवतीति प्रागवगतम्, तदैव ह्यर्थापत्त्या बहिर्भावं परिकल्प्यायमनेन विना न भवतीत्यविनाभाविता कल्प्यते । अतस्सा स्वरूपसत्यपि न पूर्वमवगतेति न ज्ञानोत्पत्तौ कारणमिति ॥ ३० ॥

नन्ववगतसम्बन्धस्य तर्ह्यनुमानं स्यादत आह — गृहाभावेति तान्तेन । न तावन्नियमेन सर्वैरेव द्वयोस्साहित्यमवगतम्, अविदितसाहित्यस्य तावत् सिद्धं प्रमाणान्तरमित्यभिप्रायः । येनापि तयोस्साहित्यमवगतं तस्यापि नागृहीतयोस्तयोस्साहित्यग्रहः सम्भवति, न च तयोरेकग्रहणेऽपरदर्शनमर्थापत्त्या विना सम्भवति । अन्यथानुपपत्त्यैव त्वेकेन गृहाभावेन

१. 'वं सत्यप्येवै'ति मुद्रितपुस्तकपाठः.



तेन सम्बन्धवेलायां सम्बन्ध्यन्यतरो ध्रुवम् ।
अर्थापत्त्यावगन्तव्यः पश्चाद(स्त्य ? स्त्व)नुमानता ॥

गृहद्वारि स्थितो यस्तु बहिर्भावं प्रकल्पयेत् ।
यदैकस्मिन्नयं देशे न तदान्यत्र विद्यते ॥ ३४ ॥

तदाप्यविद्यमानत्वं न सर्वत्र प्रतीयते ।
न चैकदेशे नास्तित्वाद् व्याप्तिर्हेतोर्भविष्यति ॥ ३५ ॥

नन्वत्राविद्यमानत्वं गम्यतेऽनुपलब्धितः ।
सा चाप्रयत्नसाध्यत्वादेकस्थस्यैव सिध्यति ॥ ३६ ॥

बहिर्भावेन वा तयोरेकः प्रत्येतव्यः । एवं चाकल्प्यमानेऽन्यतरस्य सम्बन्धिनोऽगृहीतत्वात् साहित्यप्रतीतिरेव न स्यात्, अतस्साहित्यार्थमर्थापत्तिरपेक्षणीयेति सिद्धं प्रमाणान्तरमित्यभिप्रायेणाह — प्रमाणं चेति प्रतीयतेऽन्तेन । अभिप्रायं विवृणोति — तेनेति ॥ ३१ — ३३ ॥

ननु च नावश्यमर्थापत्त्यैवान्यतरस्सम्बन्धी ग्रहीतव्यः, शक्यते हि गृहद्वारावस्थितेनाभावप्रत्यक्षाभ्यामुभयं विदित्वा सम्बन्धोऽनुभवितुम्, तथा विदितसम्बन्धाच्च गृहाभावाद् बहिर्भावानुमानमित्याशङ्कते तावत् — गृहद्वारीति ॥ ३४ ॥

अत्रोत्तरमाह — तदापीति । अयमभिप्रायः — सिध्यत्येवं गृहाभावाद् बहिर्भावानुमानम्, न पुनरेवमेव सर्वेषामवगतिः, अगृहीतसम्बन्धानामपि प्रतीतिभावात् । एषोऽपि च प्रकारो नैकत्र भावेन सर्वत्राभावावगमे सम्भवति, न हि जगदभावेनैकत्र भावोऽन्वितश्शक्योऽवगन्तुम् । जगदभावस्य प्रत्येतुमशक्यत्वादित्यभिप्रायः । नन्वेवं तदावगतं यदायमेकत्र भवति तदा परत्र तत्समीपे न भवतीति । एवं च विदितव्याप्तेरेकदेशभावे सर्वत्राभावानुमानं भविष्यति । अत आह — न चेति । न ह्येकदेशनास्तितया त्रैलोक्याभावेन हेतोर्व्याप्तिस्सिध्यतीति ॥ ३५ ॥

किं पुनर्जगदभावेन सम्बन्धो नावगम्यते, तस्यानवगतेरिति चेद्, ननु अनुपलब्धिरभावावगमे कारणम्, यथा चैकत्र सन् देवदत्तो देशान्तरे

नैतयानुपलब्ध्यात्र वस्त्वभावः प्रतीयते ।
तद्देशागमनात् सा हि दूरस्थेष्वस्ति सत्स्वपि ॥ ३७ ॥

गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते ।
ततोऽन्यकारणाभावादसन्नित्यवगम्यते ॥ ३८ ॥

ननु चाग्न्याद्यभावेऽपि धूमादिव्यतिरेकिणाम् ।
तद्देशागमनात् स्पष्टो व्यतिरेको न सिध्यति ॥ ३९ ॥

---

ऽनुपलभ्यमानो नास्तीति निश्चीयते। एवमेकत्र सन् सर्वत्र नोपलभ्यत इति सर्वत्रैव नास्तीति शक्यमवगन्तुम् । न हि दर्शनवददर्शनमपि प्रयत्नमपेक्षते, दर्शनं हि कार्यं स्वकारणमर्थेन्द्रियसन्निकर्षाद्यपेक्षमाणमेकत्र सतो न सर्वत्र सम्भवति, दर्शनाभावस्तु न किञ्चिदपेक्षत इति चोदयति — नन्वत्रेति । अत्रेत्येकदेशं परामृशति । अत्र खल्वेकदेशेऽनुपलब्धितोऽविद्यमानत्वमव-गम्यते । तच्च सर्वत्रापि समानमिति ॥ ३६ ॥

अत्र परिहारमाह— नैतयेति । किमिति न प्रतीयते अत आह— तद्देशेति । उपलब्धियोग्यस्य ह्यनुपलब्धिरभावं व्यवस्थापयति, दूरस्थेषु त्वयोग्यत्वादेव सत्स्वप्यनुपलब्धिस्सम्भवतीति नाभावनिश्चय इति ॥ ३७ ॥

यदि तु सर्वग्रामनगरसरित्कान्तारादिदेशाः प्राप्ता भवेयुः, एवं चैत्रस्य तेष्वभावश्शक्यावगमः, न चेदं शक्यकरणमित्यभिप्रायेणाह — गत्वा गत्वेति ॥ ३८ ॥

अत्र चोदयति — ननु चेति । अयमभिप्रायः — न तावद् वि-पक्षादव्यावृत्तो हेतुर्गमकः, न च सर्वे विपक्षा गत्वोपलब्धुं शक्यन्ते, अतोऽवश्यमेकदेशस्थस्यैवानुपलब्ध्या विपक्षाद् हेतोर्व्यतिरेको ग्रहीतव्यः । तद्वदिहापि भविष्यतीति । धूमादयश्च ते व्यतिरेकिणश्चेति धूमादिव्यतिरे-किणः । अग्न्याद्यभावे ये व्यतिरेकिणो धूमादयस्तेषामग्न्याद्यभावदेशा-गमनाद् व्यतिरेको न सिध्यतीति ॥ ३९ ॥



यस्य वस्त्वन्तराभावः प्रमेयस्तस्य दुष्यति ।
मम त्वदृष्टमात्रेण गमकः सहचारिणः ॥ ४० ॥

नन्वेवमितरत्रापि सम्बन्धोऽनुपलब्धितः ।
चैत्राभावस्य भावेन दृष्टत्वादुपपद्यते ॥ ४१ ॥

साहित्ये मितदेशत्वात् प्रसिद्धे चाग्निधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥ ४२ ॥

---

परिहरति — यस्येति । व्यतिरेकप्रधानवादिनो हि बौद्धस्यासति विपक्षाद् व्यतिरेकग्रहणे न हेतुर्गमको भवति, वस्त्वन्तराभावो हि तस्य प्रमेयः, अग्न्यादेर्वस्तुनोऽन्यस्यानग्न्यादेरभाव इति यावत् । स हि सर्वानु-ष्ठिव्यतिरेकमन्तरेण न सम्भवति, मम तु सहचारिणो हेतुर्गमकः, अन्वय-मात्रनियमेन । स च विपक्षादर्शनमात्रेण द्वित्रैरेव दर्शनैः सिध्यतीति ॥ ४० ॥

नन्वन्वयवादिनोऽप्यजातातिवृत्तप्रत्युत्पन्नानन्तदेशवर्तिवह्निसहच-रितधूमदर्शनं दुर्लभमेव । अथ कतिपयाग्निसाहित्यदर्शनादेवासहिता-वगता अपि वह्नयोऽनुमीयन्ते, एवं तर्हीहापि चैत्राभावस्य जगद्वर्तिन एकदेशभावेन सम्बन्ध उपपद्यत एव । अत्रापि ह्येकत्र चैत्रे भवति कति-पयेषु तदभावो दृष्ट एव, तावता च सर्वत्राभावोऽनुमास्यत इत्याह — नन्वेवमिति ॥ ४१ ॥

अत्र परिहारमाह — साहित्य इति । अयमभिप्रायः — न हि नो व्यक्तिविषयमनुमानम्, अपि तर्ह्याकृतिविषयम्, आकृत्योश्च प्रतिव्यक्ति कृत्स्नसमवायात्सुलभमेव साहित्यदर्शनम्, सकृद्दर्शनेनैव ह्याकृत्यो-स्साहित्यमवगम्यते । अत एव द्वित्रादिदर्शनमपि व्यभिचाराशङ्कायां निय-मार्थमभ्यर्थ्यते । अवगते हि साहित्ये भवति शङ्का — किमयमौपाधिक-स्संसर्गो धूमस्याग्निना सह आहोस्वित् सहज एवेति, तत्रासकृद्दर्शनेऽन्व-याव्यभिचारादुपाध्यन्तरप्रवेशकारणाभावात्स्वाभाविकोऽस्याग्निनान्वय इति भवति मतिः । अग्नेस्तु प्रथममवगतसम्बन्धस्यापि धूमेन दर्शनान्तरे व्यभि-चारदर्शनादार्द्रेन्धनादिरुपाधिरनुप्रविशति । न च देशादिभेदे व्यभिचारा-शङ्का, सकृद्दर्शनावधारितसाहचर्ययोर्हि द्वयोरप्यग्नेस्तावद् व्यभिचारो दृष्टो

इह साहित्यमेवेदमेकस्य सहभाविनः ।
अनन्तदेशवर्तित्वान्न तावदुपपद्यते ॥ ४३ ॥

ननु देशान्तरं शून्यं चैत्रेणैवं प्रतीयते ।
तद्देशव्यतिरिक्तत्वात्समीपस्थितदेशवत् ॥ ४४ ॥

विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।
समीपदेशाभिन्नत्वाच्चैत्राधिष्ठितदेशवत् ॥ ४५ ॥

पुरुषस्य तु कार्त्स्न्येन यदेकत्रोपलम्भनम् ।

---

द्वित्रादिदर्शनेनैव, तद् यदि धूमोऽप्यग्निं व्यभिचरेत्, अस्यापि हि द्वित्रिचतुरैरेव दर्शनैर्व्यभिचारो दृश्येत, न च दृश्यते । अतोऽग्न्यन्वितस्वभावोऽयमिति निश्चीयते । यस्य त्वेवमप्यनाश्वासः । तस्य सर्वप्रमाणेष्वेव क्वचिद् व्यभिचारदर्शनादनाश्वासः स्यात् । विपक्षव्यतिरेकोऽपि चैवमर्थादेव सिद्धो भवति । स हि प्रथममन्विच्छतो विपक्षदेशानामनन्तत्वाद् दुर्लभो भवति । स्वभावनियमे तु ज्ञाते स्वभावस्याव्यभिचारात् सुलभो व्यतिरेकः । न हि स्वाभाविकमुष्णत्वमन्तरेण क्वचित् कदाचिदग्निर्भवतीति कश्चिदाशङ्कते । मितदेशत्वादिति । परिमितदेशत्वादित्यर्थः ॥ ४२ ॥

एकदेशभावजगदभावयोस्तु नैवं साहित्यज्ञानं भवतीत्याह — इहेति । एको ह्यत्र सर्वत्राभावस्सहभाव्यनन्तदेशवर्ती, न त्वग्निधूमाकृतिवत् परिमितदेशः, अतोऽत्र दुर्ग्रहं साहित्यमिति ॥ ४३ ॥

अत्र चोदयति — नन्विति । अनुमानेन देशान्तराभावश्चैत्रस्य प्रतीयते । एवं ह्यनुमास्यते । परोक्षास्सर्वभूमयश्चैत्राभावसम्बन्धाः, तदाक्रान्तदेशव्यतिरेकित्वात् स्थितचैत्रदेशसमीपवदिति ॥ ४४ ॥

परिहरति — विरुद्धेति । कथं हि विरुद्धाव्यभिचारित्वमत आह — तद्वदिति । तद्वच्चैत्रवद्देशान्तरमिति । अतोऽर्थापत्त्यैव सर्वत्राभावोऽवगन्तव्यः, नान्या गतिरस्ति ॥ ४५ ॥

तथा तु तं गृहीत्वा साहित्यग्रहणपुरस्सरं यदनुमानमिष्यते तदर्थापत्तिपूर्वकम्, एतावता च सिद्धमर्थापत्तेः प्रामाण्यमित्यभिप्रायेणाह — पुरुष-



तस्यान्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥

तेनार्थापत्तिपूर्वत्वमत्र यत्र च कारणे ।
कार्यदर्शनतश्शक्तेरस्तित्वं सम्प्रतीयते ॥ ४७ ॥

---

स्येत्यभ्रान्तेन । यस्तु वदति — स्वात्मनस्तावदेकत्र सतस्सर्वत्राभावेन सम्बन्धो दृष्टः, अतोऽन्यस्याप्यनुमिनोतीति । स वक्तव्यः स्वात्मन एव सर्वत्रासत्ता कथमवगम्यते, यद्यभावेन, कस्येति वक्तव्यम्, न तावत्प्रत्यक्षस्य निवृत्त्या दूरदेशेष्वभावश्शक्यतेऽवगन्तुम्, दूरत्वादेव तेषामनुपलब्धियोग्यत्वान्न स्वात्मनोऽभावस्तेषु शक्यतेऽवगन्तुम् । अथ तत्र सतो दूरस्थत्वमेव न स्यात्, अतस्सहैव देशान्तरे स्वशरीरमुपलब्धियोग्यं भवति, योग्यत्वाच्चोपलभ्येत, अतोऽनुपलम्भान्नास्तीति निश्चीयते । यद्येवं प्रमाणान्तरमिदम्, यो हि यत्र भवति तस्य सहैवाधारेणात्मोपलब्धियोग्यो भवति, न चेह तथा, अतो न देशान्तरेष्वस्तीति । एवं चानुमानेन देशान्तराभावो ग्रहीतव्यः । न प्रत्यक्षाभावेन । तत्र च विरुद्धाव्यभिचारितोक्तैव — देशान्तराणि विमतिपदानि चैत्रवन्ति चैत्रवद्देशसमीपव्यतिरिक्तदेशत्वाच्चैत्रवद्देशवदिति । यत्र च प्रतिहेतुना सन्देहः क्रियते तत्र बलवतान्येन यदुपबृंहितं प्रत्यक्षादिना भवति तद्विजयते, न चेहार्थापत्तेरन्यत् प्रमाणं सर्वत्राभावे समर्थम् । सा ह्येवं प्रवर्तते, यदेतदेकत्र कार्त्स्न्येन चैत्रस्योपलम्भनं तन्नोपपद्यते, यदि देशान्तरे चैत्रो भवेत्, द्वेधा, हि भावाः प्रादेशिका विभवश्च, विभवोऽपि द्वेधा, सर्वव्यापिनः स्वाश्रयव्यापिनश्च । पूर्वे गगनादयः । उत्तरे जात्यादयः । यद्धि सर्वसंयोगिभिरनागतैरगतं सम्बध्यते, तद्विभुतया प्रसिद्धम्, तया चात्माकाशादय इति विभव इत्युच्यन्ते । न तावदाकाशवच्चैत्रः, एकत्र परिसमाप्तो हि परिमण्डलस्सोऽवगम्यते । न च यथावयवी स्वावयवेषु वर्तते तथा देशान्तरे वर्तितुमर्हति । यदि हि तस्यान्यत्र भागा भवेयुः इह कृत्स्नो नोपलभ्येत । भवन्वान्तराले विच्छेदादन्यो भवेत् । न च जातिवद् वर्तितुमर्हति । जातिर्ह्यमूर्ता, सैकत्र पिण्डे समवेता पिण्डान्तरे समवैति । अस्य तु कुतोऽन्यत्र समवायः । नहीदं सामान्यम् । संयोगोऽस्य देशान्तरेण सम्बन्धः । स च नागतस्य सम्भवति । गत्वा ह्ययं देशान्तरैः संयुज्यमानो दृश्यते । अत एव न विभुः ।

---

१. 'कार्यादर्शनतः' इति मुद्रितपुस्तकपाठः.

कार्यस्य ननु लिङ्गत्वं न सम्बन्धानपेक्षणात् ।
दृष्ट्वा सम्बन्धितां चैषा शक्तिर्गम्येत नान्यथा ॥ ४८ ॥

तद्दर्शने तदानीं च प्रत्यक्षादेरसम्भवात् ।
अर्थापत्तेः प्रमाणत्वं त्रैलक्षण्याद् विना भवेत् ॥ ४९ ॥

अतोऽस्य न कथञ्चिदेकत्र सतोऽन्यत्र सत्त्वमुपपद्यत इत्यन्यत्राभावमन्तरेण कृत्स्नबोधस्समर्थ्यते, का पुनरत्रानुपपत्तिः, नात्र कृत्स्नबोधस्य केनचित् प्रतिघातो दृश्यते । भावानुमानेनैव केवलं तु दुर्बले प्रतिघातहेतौ तद्बाधेनैवार्थापत्तिरात्मानं लभते । दुर्बलं चेह भावानुमानं प्रतिहेतुविरुद्धत्वात् । यत्र तु तुल्यबलमुभयमेकत्रोपनिपतितं भवति, तत्रार्थान्तरकल्पनयोपपत्तिरिति न किञ्चिदनुपपन्नमिति । एवं तावदभावपूर्विकाया अर्थापत्तेरनुमानाद् भेद उक्तः, प्रत्यक्षपूर्विकाया भेदमिदानीं दर्शयितुं तत्प्रतिज्ञां तावदाह— यत्र चेति । यत्रापि दाहादिकार्यदर्शनादग्न्यादेः कारणस्य शक्तिरस्तीति कल्प्यते तत्राप्यर्थापत्तिरेव प्रथमा । यदि तु पश्चादनुमानं भवति भवतु । भाष्योदाहृतत्वाच्चाभावपूर्विकाया एव प्रथममनुमानाद् भेदो वर्णित इति ॥ ४६, ४७ ॥

अत्रानुमानवादिनां लिङ्गमुपन्यस्यति— कार्यस्येति । एवं हि मन्यन्ते— द्विविधमनुमानं दृष्टस्वलक्षणविषयमदृष्टस्वलक्षणविषयं च । तत्र तावत् दृष्टस्वलक्षणविषयं धूमादिनाग्न्यनुमानम्, अदृष्टस्वलक्षणविषयं च संयोगविभागादिभ्य इव क्रियाद्यनुमानम् । कार्यं हि कारणेन सामान्यतो ज्ञातसम्बन्धमिति ततस्तत्प्रतीतिरनुमानमेवेदमिति । एतदपि दूषयति— न सम्बन्धेति । येन ह्येकदा बीजादङ्कुरो दृष्टः सोऽन्यदा तथाविधादेव पुनरनुपलभमानः स्वभावानुमानेन जनयितव्योऽनेनाङ्कुर इत्यनुमिमान एवात्राशङ्कते कथमङ्कुरो न जायत इति, ततः कल्पयति — अस्ति कश्चिद् बीजसमवायी शक्तिभेदो यद्वशात् प्राक् कार्यमासीदद्य च नास्तीति । तच्चेदमनपेक्षितसम्बन्धस्यैव पुरातनेदानीन्तनाङ्कुरदर्शनादर्शनविचारादेव ज्ञानं जायमानं कथमनुमानमिति । अपि च सम्बन्धग्रहणाधीनमेव सर्वमनुमानं न तदगृहीतयोस्सम्बन्धिनोस्सम्भवति । न चेह तयोरतीन्द्रिया शक्तिः



अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ ।
वध्यघातकभावेन यौ सर्पनकुलादिषु ॥ ५० ॥

पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ५१ ॥

सामर्थ्यगोचरां[1] केचिदपरे शब्दगोचराम् ।
कल्पयन्त्यागमात्तेनामभिन्नां प्रतिजानते ॥ ५२ ॥

प्रमाणान्तरेण शक्यतेऽनुभवितुम्, अत एव च न तद्गतोऽपि ग्रहणं सम्भवति, अतः कथमगृहीतसम्बन्धात् कार्याच्छक्तितद्गतोऽसिसिद्धिरिति । तदेतदाह—दृष्ट्वेति । नन्ववगतं तावत् कार्यसामान्यं कारणसामान्येन व्याप्तमिति, अतस्तदनुमास्यते । सत्यम्, किन्तु शक्तिकल्पनया विना कारणास्यैव न निर्वर्तते । अङ्कुरो हि बीजभावभावी व्यभिचरितभावान्तरश्च बीजकारणक इत्यवगतः सत्यपि तु बीजेऽजायमानस्तदपि व्यभिचरतीति कारणावगतिरेवावसीदति, तां शक्तिकल्पनयोत्तम्भाति । कल्पितायां च शक्तौ कारणसम्बन्धिन्यामर्थापत्त्या यदि सम्बन्धोऽवगम्यते तदस्तु सिद्धान्तवच्छक्तिसिद्धावर्थापत्तिः प्रमाणमिति । अनुमानलक्षणाद् विनाऽर्थापत्तिर्जायमाना प्रमाणान्तरमित्युपसंहरति — अर्थापत्तेरिति ॥ ४९ ॥

वृत्त्यन्तरोदाहृतमुदाहरणं दूषयति — अनुमानादिति । जयो हि पराजयेन विदितव्याप्तिरिति तमेकत्र घातके नकुले दृष्ट्वा प्रतिपक्षस्य पराजयोऽवगम्यते । पराजयदर्शनेन प्रतिपक्षस्य जय इति । नेदमर्थापत्त्यावुदाहार्यमिति ॥ ५० ॥

श्रुतार्थापत्तिरभिधास्यत इत्युक्तम्, तामिदानीमुदाहरति — पीन इति ॥ ५१ ॥

अस्याश्च विषयं प्रत्यस्ति विवादः । तमेकनिर्धारणार्थमुपन्यस्यति— सामर्थ्येति कल्पयन्त्यन्तेन । सर्वे चागमाबहिर्भूतामातिष्ठन्त इत्याह — आगमादिति ॥ ५२ ॥

१ 'विषयामि'ति तात्पर्यटीकापाठः. (Page 399. Madras University Sanskrit Series, No. 13)

प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः ।
सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५३ ॥
वचनस्य श्रुतस्यैव सोऽप्यर्थः कैश्चिदाश्रितः।
तदर्थोपप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥
न तावच्छ्रूयमाणस्य वचसोऽर्थोऽयमिष्यते ।
न ह्यनेकार्थता युक्ता वाक्ये वाचकता तथा॥ ५५ ॥
पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते ।
न राज्यादिपदार्थश्च दिवावाक्येन गम्यते ॥ ५६ ॥
न दिवादिपदार्थानां संसर्गो रात्रिभोजनम् ।
न भेदो येन तद्वाक्यं तस्य स्यात् प्रतिपादकम्॥ ५७ ॥

---

आगमाभेदाभ्युपगमेऽभिप्रायमाह — प्रायश इति । फलापूर्व-विध्यन्तादिसिद्धौ भूयानस्या वेदे उपयोगः, सर्वोऽनागमत्वेऽवैदिकः स्यादिति ॥ ५२ ॥

आगमिकत्वेऽप्यवान्तरविप्रतिपत्तिमुपन्यस्यति — वचनस्येति ।

अत्र निष्कर्षं दर्शयति — न तावदिति । कारणमाह — न हीति । वाक्यं तावदवाचकम्, प्रागेवानेकेषामर्थानामिति ॥ ६५ ॥

यद्यवाचकं कथं वाक्यादर्थप्रतीतिरत आह — पदार्थेति । एतच्च तद्भूताधिकरणे वक्ष्यत इति । ननु राज्यादिवाक्यार्थो यदि दिवावाक्ये-नानभिहितः पदार्थान्वयरूपेणैव स्वार्थवद् गमयिष्यते । अत आह — न राज्यादीति । न हि दिवावाक्ये राज्यादिपदार्थास्सन्ति, कुतस्तत्र तेषामन्वय इति ॥ ५६ ॥

ननु दिवादिपदार्थान्वयादेव राज्यादिवाक्यार्थः प्रत्येष्यते, अत आह— न दिवादीति ॥ ५७ ॥



अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ।
तस्माद् वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥५८ ॥
तस्य चागमिकत्वेऽपि यत्तद् वाक्यं प्रतीयते ।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद् भवेत् ॥ ५९ ॥
न ह्यनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ।
नानुमानं न चेदं हि दृष्टं तेन सह क्वचित् ॥ ६० ॥
यदि त्वनुपलब्धेऽपि सम्बन्धे लिङ्गतेष्यते ।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥ ६१ ॥
न चार्थापत्तिगम्यानि सर्वैस्सर्ववचांसि हि ।
सम्बद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६२ ॥

---

न ह्यनेकार्थतेति यदुक्तं तद् विवृणोति — अन्यार्थेति । अतो वाक्यान्तरस्यैवायमर्थो न दिवावाक्यस्येत्याह— तस्मादिति ॥ ५८ ॥

एवं तावन्न मूलागमस्यायमर्थः, येन तु वाक्यान्तरेण बुद्धिस्थेनायमर्थोऽवगम्यते, तस्यैव प्रत्यक्षादिषु मध्ये प्रमाणं निर्धारणीयमित्याह — तस्येति ॥ ५९ ॥

तत्र प्रत्यक्षं तावन्न तत्सिद्धौ प्रमाणमित्याह — न हीति । अनुमानमपि तेन सम्बद्धस्य दिवावाक्यस्यादर्शनान्न सम्भवतीत्याह— नानुमानमिति ॥ ६० ॥

अविदितसम्बन्धे तु दिवावाक्ये लिङ्ग इष्यमाणेऽव्यवस्थेत्याह — यदि त्विति ॥ ६१ ॥

यदि तूच्यते सम्बन्धमेव दिवावाक्यस्य रात्रिवाक्येन गृहीत्वा ततस्तदनुमास्यत इति, सिध्यत्येवम्, न तु श्रुतार्थापत्तिवेद्यानि सर्वाणि लोकवेदवाक्यानि सर्वैः प्रतिपादकवाक्यैस्सम्बद्धान्यवगतानि । अतः कथं तेभ्यस्तान्यनुमीयन्त इत्याह — न चेति ॥ ६२ ॥

न च सत्तानुमानेन विशेषो वानुमीयते ।
इह वाक्यविशेषस्य सत्तैव त्वत्रगम्यते ॥ ६३ ॥
पूर्वसिद्धः स्वतन्त्रोऽर्थः स्वतन्त्रेण विशेषितः ।
धर्मी धर्मविशिष्टोऽत्र नानुमेयः प्रतीयते ॥ ६४ ॥
अथ श्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।
ततः पक्षोऽभ्युपेतः स्यादप्रसिद्धविशेषणः ॥ ६५ ॥
किञ्च लिङ्गान्तराभावादेतस्य यदि लिङ्गता ।
प्रतिज्ञार्थैकदेशत्वं पदवत् ते प्रसज्यते ॥ ६६ ॥
तद्वदेव निराकार्या वचसोर्धर्मधर्मिता ।
नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६७ ॥

---

इतश्च नानुमानमित्याह — न चेति । केनचिद्धि सामान्यात्मना ज्ञातसम्बन्धेन विशिष्टं किञ्चिदनुमीयते न वस्तुसत्तामात्रम् । न च विशिष्टः, अज्ञातसम्बन्धत्वात् इह तु तदुभयं विपरीतमिति ॥ ६३ ॥

यतश्चात्र वाक्यस्वरूपमेव प्रमेयमतः पर्वतादिरिव पूर्वसिद्धः स्वतन्त्रोऽसम्बद्धः केनचिदग्न्यादिनेव स्वतन्त्रेण केनचिद् विशेषितो धर्मी धर्मविशिष्टो नास्तीत्याह — पूर्वसिद्ध इति ॥ ६४ ॥

अथ श्रुतमेव वाक्यं धर्मितयोपादायाश्रुतवाक्यविशिष्टता साध्यते ततस्तदप्रसिद्धेरप्रसिद्धविशेषणः पक्ष इत्याह — अथेति ॥ ६५ ॥

अपि च श्रुते वाक्येऽश्रुतवाक्यविशिष्टे साध्यमाने न तावत् किञ्चिल्लिङ्गमुपलभ्यते, न चालिङ्गकमनुमानं भवति, तद् यदि तदेव पुनर्लिङ्गमिष्यते ततः प्रतिज्ञार्थैकदेशित्वम्, यथा पदे पक्षीकृतेऽर्थविशिष्टे साध्यमानेऽभिहितमित्याह — किञ्चेति ॥ ६६ ॥

धर्मधर्मिभावोऽपि दिवावाक्यरात्रिवाक्ययोश्शब्दार्थयोरिव निराकार्य इत्याह — तद्वदेवेति । यथा तत्रार्थे धर्मिण्यप्रतिपन्ने न पदं तद्धर्म इत्युक्तम्, एवमिहापि नाप्रतिपन्ने रात्रिवाक्ये तद्धर्मतया दिवा-



क्रियाकारकसम्बन्धादृते नास्ति तु धर्मता ।
अवाचकतया चैतन्न धर्मो विषयात्मना ॥ ६८ ॥
प्रतीतेर्वाचकत्वं चेत् प्रसक्तानेकशक्तिता ।
अनुमाविषयोत्थं तु धर्मत्वं निष्फलं भवेत् ॥ ६९ ॥
पदार्थैरपि तद्वाक्यं नासम्बन्धात् प्रतीयते ।
सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ७० ॥

---

वाक्यं प्रतीयते । अथ तु पक्षधर्मताप्रतिपत्त्यर्थं तत् प्रथममवगतमित्युच्यते ततोऽनुमेयाभाव इत्यभिप्रायः । अभिप्रायं विवृणोति — नागृहीत इति ॥ ६७ ॥

अपि च तत्रैव पदे वर्णितम् — न क्रियाकारकसम्बन्धादृते सम्बन्धो भवतीति । अतो यथा पदस्य न कश्चित् क्रियानिबन्धनोऽर्थसम्बन्धोऽस्तीति न तद्धर्म इत्युक्तम्, एवं दिवावाक्यस्यापि रात्रिवाक्यधर्मता[1] निराकार्येत्याह — क्रियेति । न चात्र विषयविषयिभावरूपोऽपि द्वयोर्वाक्ययोश्शब्दार्थयोरिव सम्बन्धो भवति, उच्यते हि शब्देनार्थः, न तु वाक्यं वाक्यान्तरस्य वाचकमित्याह — अवाचकेति । पदे स्वर्थप्रतीतिजनकत्वेन तद्विषयतामङ्गीकृत्यानुमेयाभावो दर्शितः । इह तु वाक्यस्यावाचकत्वात् तद्विषयत्वमेव प्रत्येतुं न शक्यते इति विशेषः ॥ ६८ ॥

यदि तूच्यते प्रतीयते तावद् दिवावाक्याद् रात्रिवाक्यम्, अतस्तस्यापि तद्वाचकत्वमित्यस्ति विषयविषयिलक्षणस्सम्बन्ध इति, तत्रैकं वाक्यमनेकार्थमभ्युपगतं भवेत्, स्वार्थं हि तत्प्रतिपादयति रात्रिवाक्यमपि, न चैवं न्याय्यमित्यभिप्रायेणाह — प्रतीतेरिति । अथोच्येत — माभूद् वाचकतया तद्विषयत्वम्, तेन तु तद्वाक्यमनुमीयते, अतस्तल्लिङ्गमनुमानविषयतया लिङ्गमेव दिवावाक्यं तद्धर्मतयाभिधीयत इति । यत्तावदनुमानविषयभावादुत्थितं तद्धर्मत्वं तदनुमानस्य पूर्वसिद्धत्वान्निष्फलमित्याह — अनुमेति ॥ ६९ ॥

एवं तावद् दिवावाक्यमलिङ्गमित्युक्तम्, तद्गतपदार्थानामप्येवमेव लिङ्गता निराकार्येत्याह — पदार्थैरिति । नन्वगृहीतसम्बन्धा एव पदार्था

---

1. 'चेत्', इति तात्पर्यटीकानुसारी पाठः. (Page 403. Madras University Sanskrit Series No. 13.)

न तु वाक्यान्तरेणैषां विना किञ्चिन्न सिध्यति ।
न चाप्यन्यः प्रकारोऽस्ति तेन वाक्येन सङ्गतौ ॥
अथैतद्वाचि कल्प्येत वाक्यमन्यत् तथैव च ।
प्रसङ्गात् तत्र दूरेऽपि नासम्बन्धात् प्रमुच्यते ॥ ७२ ॥
ततश्च प्रथमादेव वरं ज्ञातुमसङ्गतात् ।
अन्वयव्यतिरेकौ च प्रतिषेध्यौ पदे यथा ॥ ७३ ॥

---

यथा वाक्यार्थं गमयन्ति, एवं रात्रिवाक्यमपि किं न गमयन्ति, अत आह — सामान्येति । क्रियासामान्यं कारकसामान्यं वा प्रतिपन्नमलब्धेतरेतरव्यतिषङ्गमन्यथा न सिध्यतीति तं विशेषं गमयति, यश्चासौ विशेषः स एव तु वाक्यार्थ इत्युच्यते इति ॥ ७० ॥

न चैष प्रकारो रात्रिवाक्यप्रतिपादने सम्भवतीत्याह — न त्विति । अन्योऽपि तद्देशकालादिसम्बन्धो न रात्रिवाक्येन दिवावाक्यस्य तत्पदार्थानां वास्तीत्याह — न चापीति ॥ ७१ ॥

स्यादेतत्, यद्यपि दिवावाक्यं न रात्रिवाक्यस्य वाचकम्, तथापि कल्पयिष्यामः, ततश्च तत्प्रत्येष्यत इति । तदिदमाशङ्कते तावत् — अथैतद्वाचीत्यन्यदन्तेन । अत्र दूषणमाह — तथैवेति । अत्र तावदेवं वाक्यान्तरकल्पनायां प्रमाणमेव नास्तीति तदनादृत्य तावदनवस्थामापादयति, यदपि कल्पितं वाक्यं तदपि न रात्रिवाक्यमवगमयितुं शक्तम् । न च तदसम्बद्धमेव तस्य गमकमिति युक्तम् । पुनरपि वाक्यान्तरकल्पनायां स एव दोषः । एवं यदेव किञ्चिद् वाक्यं कल्पयितुमिष्यते तदेव नासम्बद्धं गमकमित्यनवस्थापात इति ॥ ७२ ॥

अथ त्वन्तिममसम्बद्धमेव गमकमिति कल्प्यते, तद् वरं प्रथमस्यैव तथाविधस्य गमकत्वं कल्पितुम्, किं वाक्यान्तरकल्पनया । न च तद्युक्तमित्यभिप्रायेणाह — ततश्चेति । एवं तावत् पक्षधर्मत्वाद्यसम्भवेन रात्रिवाक्यस्यानुमेयत्वं निरस्तम्, अन्वयव्यतिरेकयोरपि पदवत् प्रतिषेधो दर्शयितव्य इत्याह — अन्वयेति । नहि सत्येव रात्रिवाक्ये दिवावाक्यं



श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किञ्चन ।
तस्मादनुपमानत्वमर्थस्याप्यनया दिशा ॥ ७४ ॥
उपमानत्वलिङ्गेन वाक्यं प्रति निवारिते ।
अर्थेऽपि चैवमेव स्यात् तस्मात् पूर्वेष्वसम्भवः ॥ ७५ ॥
अतश्श्रुतस्य वाक्यस्य यदर्थप्रतिपादनम् ।
तदात्मलाभ एव स्याद् विना नेत्येतदिष्यते ॥ ७६ ॥
एतदर्थाद् विना नायमित्यर्थः किं न कल्प्यते ।
वाक्यार्थेनच्च किं नायमागमार्थः प्रतीयते ॥ ७७ ॥

---

नासतीत्यन्वयव्यतिरेकौ स्तः, तद्देशतत्कालादिसम्बन्धस्याभावात् । न च ज्ञानान्वयोऽसत्यपि रात्रिवाक्यज्ञाने व्युत्पन्नस्य दिवावाक्यज्ञानाद्, विज्ञानोत्तरकालभाविनोश्चान्वयव्यतिरेकयोस्तदनुपयोगादित्यादिपदवद्दर्शयितव्यमित्यभिप्रायः ॥ ७३ ॥

एवं तावत् प्रत्यक्षानुमानागमैर्न रात्रिवाक्यं प्रतीयत इत्युक्तम्, उपमानमपि तत्र न प्रमाणमिति दर्शयति — श्रुतवाक्येति त्वमन्तेन । दिवावाक्यवच्च तदर्थेनापि न रात्रिवाक्यमुपमीयत इत्याह — अर्थस्येति ॥ ७४ ॥

यथा च रात्रिवाक्यस्य दिवावाक्यतदर्थाभ्यामुपमानं निरस्तमेवं रात्रिवाक्यार्थस्यापि ताभ्यां निरसनीयमित्याह — उपमानत्वेति स्यादन्तेन । उपसंहरति — तस्मादिति ॥ ७५ ॥

अतः प्रमाणान्तराभावादर्थापत्तिरेव रात्रिवाक्यावगमे शरणमित्याह — अत इति । प्रत्यक्षदृष्टं पीनत्वं भोजनप्रतिषेधेन प्रतिहन्यते, पीनत्वेन दिवाभोजनम्, अतः परस्परप्रतिघाताद् दिवावाक्यस्य स्वार्थप्रतिपादनमेवानुपपद्यमानं रात्रिवाक्यमनुप्रवेशयति, अतः तद्रात्रिवाक्यं कल्प्यत इति ॥ ७६ ॥

तामर्थविषयामिति यदुक्तं तदिदानीं दूषयितुमुपन्यस्यति — एतदर्थाद्विनेति । अयमभिप्रायः — पीनत्वं हि भोजनप्रतिषेधो वा परस्परेण प्रतिहन्यते तयोश्चार्थकल्पनयैवात्मलाभः । पीनस्य हि दिवा निषिद्धे

**सविकल्पकविज्ञानैश्शब्दः पूर्वं प्रतीयते ।**
**लब्धप्रयोजने वाक्ये परं नागमिकं च नः ।**

---

भोजने, रात्रिभोजनेनैव पीनत्वमुपपद्यते, न रात्रिवाक्येनातोऽर्थकल्पनैव युक्तेति । अपि च, यथा परैरभिधीयमानोऽपि पदार्थानुपपत्त्या गम्यमानो वाक्यार्थ आगमार्थो भवति । एवं वाक्यार्थानुपपत्तिगम्योऽप्यर्थः किं नागमेऽन्तर्भवतीत्याह — वाक्यार्थेति ॥ ७७ ॥

प्रथमपरिचोदनां तावत् परिहरति — सविकल्पकेति । सविकल्पको हि श्रुतार्थापत्तिबोधः सविकल्पकज्ञानानि च शब्दपुरस्सराणि । अतश्शब्दपर्यवसितायामर्थापत्तौ शब्दादेव सिध्यन्नर्थो नार्थापत्तेर्विषय इति । नन्वेवं सर्वप्रमाणविकल्पेषु समानमिदम्, इन्द्रियलिङ्गाभ्यामपि शब्दपुरस्सरमेवार्थः प्रतीयते, ततस्तयोरपि शब्दपर्यवसायितैव भवेत् अतस्तत्र स्मृतिस्थ एव शब्दोऽप्रत्यायकः, तदिहापि समानम् । यथा हि कर्मेन्द्रियमर्थेनैव सन्निकृष्टमिति तमेव प्रकाशयति लिङ्गं चार्थेन सम्बद्धमिति तं गमयति, न शब्दम्, एवमिहाप्यनुपपद्यमानोऽर्थोऽर्थेनैवोपपद्यते न शब्देन । तथा च दृष्टार्थापत्त्योऽर्थविषया एव । अत्रोच्यते । सत्यमर्थद्वारिकैव वाक्यस्यानुपपत्तिः । अर्थान्तरेण चोपपत्तिः । किन्तु तद्वाक्यमनुपपन्नं वाक्यान्तरमेवाकाङ्क्षति, यथा पदं पदान्तरम् । न हि पचतीत्युक्ते ओदनप्रत्यक्षेणाकाङ्क्षा निवर्तते, किं तर्हि, ओदनमिति पदेन, एवं वाक्यमप्यनुपपद्यमानतयाऽङ्गतं वाक्यान्तरमेवाकाङ्क्षति, न तु तमर्थं स्वरूपेण । अत एव निर्वापमन्त्रेऽतिदेशाद् विकृतिं गते प्राकृतदेवताया अभावात् तत्पदनिवृत्तौ तस्य स्थाने सूर्यायेति पदमूह्यते । छेदनमन्त्रे त्विषेत्वेत्यत्र छिनद्मीति पदमध्याह्रियते । हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इत्यत्रावद्यतिपदानुषङ्गः । न चार्थ एवानुषज्यते 'अनुषङ्गो वाक्यसमाप्तिस्सर्वेषु तुल्ययोगित्वा'दिति वचनात् । प्रत्यक्षादिषु तु न शब्देन रूपेणाऽर्थोऽपेक्ष्यते शब्दोल्लेखेनापि गृह्यमाणः, किन्त्वर्थरूपेणैव, तमर्थं विकल्पयन् शब्दस्त्वस्तु नाम सन्मात्रतया । यदि तु तत्रापि शब्दोऽपेक्ष्यते, तिरश्चामर्थविकल्पो न स्यात्, स च नास्ति, दृश्यते हि तेषामपि हिताहितप्राप्तिपरिहारार्थः प्रयत्नः । तृषिता हि गावस्तटाकानि गच्छन्ति, वर्षातपाभि-



**ननु चास्ति सम्बन्धे सति वानवधारिते ।**
**गम्यज्ञानमिदं वाक्यं प्रसज्येताप्रमाणकम् ॥७९॥**

---

भूताश्च तत्प्रतीकारक्षमं देशम् । अतोऽशब्दज्ञानामप्यनुमानादिविकल्पदर्शनान्न तत्र शब्दापेक्षाऽस्तीति निश्चीयते । श्रुतार्थापत्तिबोधस्तु तिरश्चां नास्त्येव, शब्दव्युत्पत्तिजो ह्यसौ, न च तेषामसावस्तीति प्रत्यक्षेऽपि वर्णितम् । अन्येषामप्यव्युत्पन्नशब्दानां श्रुतार्थापत्तिबोधो न दृश्यते । किं पुनस्तिरश्चाम् । अतोऽन्वयव्यतिरेकाभ्यामवगम्यतेऽस्ति शब्दापेक्षा श्रुतार्थापत्तौ । अनुमानादिषु तु संस्कारोद्बोधेनावर्जनीयतयास्तु नाम शब्दस्मृतिः, न तु शब्दापेक्षा । अतोऽत्र वाक्यस्यानुपपन्नस्य वाक्यान्तरमेवार्थवदुपपादकं न त्वर्थमात्रं शब्दमात्रं वा । अत एवागृहीतसम्बन्धस्यार्थमविदुषश्श्रुतेऽप्युपपादके वाक्ये नानुपपन्नवाक्यार्थज्ञानेऽनुपपत्तिश्शाम्यति, प्रतिपन्नार्थस्याप्याशयकल्पना । अतो न श्रुतवाक्यस्य न्यूनताबुद्धिर्निवर्तते । अतस्सिद्धं श्रुतार्थापत्तौ शब्दकल्पनेति । परपरिचोदनायामुत्तरमाह — लब्धप्रयोजन इति । यावद्व्यक्तार्थश्शब्दस्तावद् बोधोऽवगम्यते, स तदर्थो भवति । प्रयोजनवचनो ह्यर्थशब्दः । अत एव वाक्यार्थ आगमार्थो भवति । यावद्धि पदार्था नान्योन्यान्वयमनुभवन्ति तावदप्रयोजनकं जायते, जाते तु क्रियाकारकसंसर्गे लब्धप्रयोजनं वाक्यमिति ततः परमर्थान्तरमवगम्यमानं नागमिकं भवति । न हि प्रयोजनत्वावगतार्थानुपपत्त्या यदवगम्यते तत्प्रयोजनं भवति । प्रयोजनोपपादकं तु तत् । पदार्थानुपपत्तौ प्रयोजनमेव नासाद्यत इति युक्तं वाक्यार्थस्य पूर्वावगतस्यागमार्थत्वम् । कः पुनर्विशेषः, सर्वथा तावदागमार्थोऽसौ, कल्पितस्य श्रुतस्य वेति न विशेषमुपलभामहे । उच्यते । श्रुतागमार्थत्वे यदि प्रमादात् तन्नाशो भवति ततो यजुर्वेदादिविहितनाशनिमित्तं प्रायश्चित्तम्, इतरथा त्वविज्ञातनाशनिमित्तमिति विशेषः । तदा च ऋग्वेदादिविहितनाशे प्रत्येकं महाव्याहृतिभिर्होमं विधाय यद्यविज्ञातो भूर्भुवस्स्वस्स्वाहेति महाव्याहृतीस्समाहृत्य प्रायश्चित्तं समुपदिशति । श्रुतार्थापत्तिवेद्य एव हि वेदोऽविज्ञात इत्युच्यते, स ह्यृगादीनां नान्यतमत्वेन ज्ञायत इति ॥ ७८ ॥

अत्र चोदयति— ननु चेति । न तावद् दिवावाक्यरात्रिवाक्ययोस्सम्बन्धोऽस्ति, सन्नपि वा न विदितः, न चाविदितसम्बन्धान्यदर्श-

सम्बन्धस्य प्रमाणत्वं स्थितं किं (चे? वे)श्वराज्ञया ।
प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतेर्विना ॥ ८० ॥
अस्तीन्द्रियार्थसम्बन्धस्तत्र चेन्नानपेक्षणात् ।
न हि प्रत्यक्षवेलायां सर्वेणासौ निरूप्यते ॥ ८१ ॥
येनापि तु निरूप्येत पश्चादनुभवादसौ ।
न स्यादेव प्रमाणाङ्गमसता तुल्य एव सः ॥ ८२ ॥
अप्राप्यकारिणी येषां चक्षुःश्रोत्रे च ते यथा ।
तज्ज्ञानस्य प्रमाणत्वमिच्छन्त्येवं भविष्यति ॥ ८३ ॥
तस्मादसत्त्वे सत्त्वे वा सम्बन्धस्य यदेव नः ।
जायेताभङ्गुरं ज्ञानं तस्यैव स्यात् प्रमाणता ॥ ८४ ॥

---

नेऽन्यकल्पना युक्ता, अतिप्रसङ्गात् । प्रतिबद्धस्वभावं हि प्रतिबन्धबलादेव प्रतिबन्धकमुपस्थापयति, अप्रतिबन्धेन त्वन्यकल्पनायां न प्रतिनियमे कारणमस्ति । अतोऽप्रमाणमेवेदं रात्रिवाक्यज्ञानमिति ॥ ७९ ॥

परिहरति — सम्बन्धस्येति । प्रमाणत्वं प्रमाकारणत्वमित्यर्थः । करणसाधनश्च प्रमाणशब्द इति । अकारणत्वमेव प्रामाण्ये सम्बन्धस्य दर्शयति — प्रत्यक्षस्येति ॥ ८० ॥

नन्विन्द्रियार्थसन्निकर्षजमेव प्रत्यक्षमतो नाकारणं प्रामाण्ये सम्बन्ध इति चोदयति — अस्तीति चेदन्तेन । परिहरति — नानपेक्षणादिति । अनपेक्षत्वमेव दर्शयति — न हीति । निरूपितो हि सम्बन्धः प्रमाणोत्पत्तौ कारणमनुमाने, न चेह तथेति ॥ ८१ ॥

प्रत्यक्षोत्तरकालं तु निरूपणं न प्रमाणाङ्गमित्याह — येनापीति ॥ ८२ ॥

अपि चाप्राप्यकारीन्द्रियवादिपक्षे स्वरूपसत्त्वमपि सम्बन्धस्य नास्त्येव, अतो यथा ते प्रत्यक्षज्ञानस्य प्रमाणतामिच्छन्ति, एवमिहापि भविष्यतीत्यत आह — अप्राप्येति ॥ ८३ ॥

तेनानादत्यैव सम्बद्धमुत्पन्नमसन्दिग्धमविपरीतं च देशादिभेदेऽपि ज्ञानं प्रमाणमित्याश्रयणीयमित्याह — तस्मादिति । जायत इत्यनुत्पत्तिलक्षणमप्रामाण्यं निरस्यति, अभङ्गुरमिति संशयविपर्ययाविति ॥ ८४ ॥



न चाप्यस्याः प्रमाणत्वे कश्चिद् विप्रतिपद्यते ।
भेदाभेदे विसंवादः कृतस्तत्र च निर्णयः ॥ ८५ ॥
ऋते यत्र च सम्बन्धाद् बुद्धिरेव न जायते ।
तत्र किं क्रियतां सोऽपि प्रामाण्ये नैव कारणम् ॥ ८६ ॥
स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन्
लिङ्गादिभिर्या विनियोजिका च ।
फलादिभिर्यत् परिपूरणं च
सम्बन्धदृक् तत्र न काचिदस्ति ॥ ८७ ॥

---

अपि चार्थापत्तिरप्रमाणमित्यलौकिको विवाद इति । न हि तया प्रवर्तमानानां प्रवृत्तिः प्रतिहन्यते । प्रवृत्तिसामर्थ्यं च प्रामाण्यम् । अनुमानाद् भेदाभेदयोरस्ति विवादः, तत्र चास्माभिः कृतो निर्णय इत्याह — न चापीति ॥ ८५ ॥

यद्येवमनुमानेऽपि सम्बन्धो नाङ्गमेवाभ्येतात आह — ऋत इति । तत्र हि बुद्धिरेवासति सम्बन्धज्ञाने न जायत इति तदुत्पत्तौ कारणमाश्रीयत एव । प्रामाण्यं तु तत्रापि बाधविरहादेवेति ॥ ८६ ॥

वेदोपयोगमर्थापत्तेर्दर्शयति — स्मृत्येति । भूयान् खलु वेदभागः श्रुतार्थापत्तिप्रमाणकः स तामन्तरेण न सिध्येत, यथैव हि पाठेनाभिव्यक्ता श्रुतिरात्मानं लभते, एवं श्रुतार्थापत्तिप्रमाणका हि । यदाह —

'यथैव पाठः प्रतिवस्तुपायस्तथैव सामर्थ्यमपि श्रुतीनाम् ।
तेनैव चैकां न समामनन्ति सहस्रभागं तु समामनेयुः ॥' इति ।

यथा तावदष्टकादिविषयां मन्वादिस्मृतिमुपलभ्य तन्मूलकारणान्विच्छायामसम्भवत्सु भ्रमविप्रलिप्सानुभवपुंवाक्यान्तरेषु स्मृतेस्स्वमूलकारणमन्तरेणानुपपत्त्या श्रुतिरेव मूलतया कल्प्यते । तथा लिङ्गादिभिः स्वविनियोजिका श्रुतिरुपकल्प्यते — यथा तावत् प्रकरणाम्नाते मन्त्रे स्वाध्यायविध्यध्यापिते प्रयोजनमन्तरेणानुपपद्यमाने क्रत्वपेक्षया च सामान्यतः क्रतूपकारावगतौ विशेषापेक्षायां मन्त्रशक्तिनिरीक्षया यच्छक्नुयादित्युपबन्धेन शक्यार्थ-

**तत्सर्वमित्याद्यसमञ्जसं स्यात्**
**न चेदियं स्यादनुमानतोऽन्या ।**
**एवंस्वभावाप्यनुमानशब्दं**
**लभेत चेदस्ति यथेप्सितं नः ॥ ८८ ॥**

इति अर्थापत्तिवार्त्तिकम् ।

---

विषया मन्त्रस्य विनियोजिका श्रुतिरुपकल्प्यते । यथा बर्हिर्मन्त्रेऽनेन लुनीयादिति सोऽयं लैङ्गिको विनियोगः । वाक्येन तु यथा — तस्मिन्नेव मन्त्रे दामीत्येतत् पदं लवने शक्तमिति तदेव लिङ्गे विनियुज्यते, पदान्तराणि तु तत्समभिव्याहारात्मना वाक्येनैव । प्रकरणविनियोगस्तु दर्शपूर्णमासप्रकरणाम्नातानां समिदादीनाम्, ते हि प्रयोजनाकाङ्क्षाः, क्रतुश्चोपकारसाकाङ्क्षः, तदेवमुभयाकाङ्क्षायामेभिः क्रतुमुपकुर्यादिति श्रुतिः कल्प्यत इति । स्थानविनियोगस्तु यथा—दर्शपूर्णमासयोरेवोपांशुयाजक्रमाधीतस्य दब्धिर्नामासीति मन्त्रस्य । तस्य चानेनोपांशुयाजमुपकुर्यादिति श्रुतिः कल्प्यत इति । समाख्याविनियोगस्तु यथा—आध्वर्यवसमाख्यातेषु पदार्थेषु गुणभूतं कर्तारमपेक्षमाणेषु समाख्यया कर्तृनियमः क्रियते । भवति चात्र श्रुतिः, अध्वर्युरेतान् कुर्यादिति । अश्रुतफलेतिकर्तव्यताकेषु च कर्मसु विश्वजित्सौर्यादिषु पूरणसमर्था श्रुतिः कल्प्यते 'विश्वजिता यजेत स्वर्गकाम' इति, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति, आग्नेयवदितिकर्तव्यतेति । भूयानेवञ्जातीयकः श्रुतार्थापत्तेर्वेदोपयोगः । न चायमनुमानादेव सिध्यति । न ह्यत्रानुपपद्यमानस्य कल्पनीयेन सम्बन्धः केनचिद् दृष्टः । न चानपेक्षितसम्बन्धमनुमानं भवति, अतोऽर्थापत्तिरेवात्र शरणम् । सम्बन्धदृगिति । बुद्धावौपचारिको दृग्भाव इति । यदि नार्थापत्तिः प्रमाणमाश्रीयते सर्वमिदमसमञ्जसं स्यादित्याह— तत्सर्वमिति । यदि तु लक्षणतो भिन्नापि पश्चादनुमानसामान्यादनुमानशब्देन वक्तुमिष्यते तदस्तु, सिद्धं नः प्रमाणान्तरमित्याह— एवमिति ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
अर्थापत्तिपरिच्छेदः समाप्तः ॥

---



# अथाभावपरिच्छेदः ।

---

अत्र भाष्यम् — 'अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्ये'ति । किं पुनरनेन लक्ष्यते । न तावत् प्रमाणम् । न हि प्रमाणाभावेन प्रमाणं लक्ष्यत इति युक्तम् । पूर्वोक्तप्रमाणाभावो लक्षणमिति चेत् । एवं तर्हि सर्वेषां प्रमाणानां समानमिदम्, सर्वाण्यपि हि प्रमाणानीतरेतराभावरूपाणि शक्यन्ते प्रमाणाभाव इति वदितुम् । न च सर्वप्रमाणसाधारणं किञ्चिदेकं लक्षणमस्ति, यदभावेन षष्ठं लक्ष्यते । अपि च— प्रमाणं नाम कस्यचित्प्रमेयस्य व्यवस्थापकं भवति । तदनेन किं व्यवस्थाप्यत इति न विद्मः । ननूक्तं नास्तीत्यस्यार्थस्यासन्निकृष्टस्येति । किमुक्तं भवति । प्रत्यक्षाद्यविषयो नास्तीत्ययमर्थोऽभावस्य प्रमेयमिति । तदयुक्तम् । नास्तीति नेदमिह प्रमीयत इत्यर्थः । न चाप्रमीयमाणस्य प्रमेयतेति शक्यतेऽवगन्तुम् । कस्य च प्रमाणस्य प्रमेयमिदम्, यदि प्रमाणाभावस्य । तन्न । प्रमाणाभावो हि प्रमितेरनुत्पत्तिः । सा च प्रमाणमित्यलौकिकमिव प्रतिभाति । यदि मतम् — अस्ति तावन्नास्तीति बुद्धिः सर्वलौकिकपरीक्षकाणामविवादसिद्धा, न च बुद्धेरनालम्बनत्वं स्वांशालम्बनत्वं चेति विज्ञानवादे वर्णितमेव । अतोऽस्या एव बुद्धेर्द्रढिम्नः प्रमेयमुपकल्प्यते । सोऽभावस्य विषयः । तदिदं नास्तीति विज्ञानं प्रमाणं घटाद्यभावः प्रमेयमिति मन्यन्ते । अत एव प्रागभावादिभेदेन चतुर्धाभावं विभजन्ते । न ह्यवस्तुनो विभागस्सम्भवति । यदि तु नाभावस्तत्त्वान्तरमिष्यते, कस्तर्हि क्षीरे दध्यभावः । यं प्रागभाव इत्याचक्षते । अतश्चैष दध्नि क्षीराभावः, यः प्रध्वंसाभाव इत्युच्यत इति । अपि च— इह घटो नास्तीति धियः किमालम्बनमिति वक्तव्यम् । यदि भूतलमेव, तन्न । घटवत्यपि प्रसङ्गात् । केवलमेव भूतलमालम्बनमिति चेत् । कः केवलार्थः । यदि भूतलमेव, स एव प्रसङ्गः । अथ भावान्तरविवेकः स तर्हि तत्त्वान्तरमिति सिद्धः प्रमेयभेदः, तद्भेदाच्च प्रमाणभेदः । न हि तत् प्रत्यक्षेण शक्यतेऽनुभवितुम् । अक्षाधीनत्वात्प्रत्यक्षस्य, अक्षाणां च भावरूपाणां भावेनैव सन्निकर्षः, नाभावेन । असत्यपि च तद्व्यापारे नास्तीति बुद्धेरुत्पत्तिर्दृष्टा, यथा स्वरूपमात्रदृष्टे गृहादौ देशान्तरगमने कस्यचिदभावं

प्रत्यनुयुक्तेन तदैव तदभावोऽवसीयते । तदेवमसत्यपीन्द्रियसन्निकर्षे जायमानं नास्तीति विज्ञानं नैन्द्रियकम् । न चास्य किञ्चिल्लिङ्गं जनकमस्ति । अनुपलब्धिर्लिङ्गमिति चेत् । न । अविज्ञानात् । न ह्यविज्ञातरूपं लिङ्गं लिङ्गिनमनुमापयति । न चाज्ञातसम्बन्धम् । न च तथानुपलब्धिर्ज्ञाता सत्यभावं प्रकाशयति । तस्या अप्यभावरूपत्वेनापरसजातीयापेक्षायामनवस्थापातात् । अतः प्रमाणान्तरमेवेदं भावानामसङ्करसिध्यर्थमास्थेयम् । अस्ति च मीमांसकानां प्रसिद्धिः— षष्ठं किलेदं प्रमाणमिति । अतस्तल्लक्षणार्थोऽयं ग्रन्थ इति । तदयुक्तम् । न ह्यनेन प्रमाणं (व?ल)क्ष्यते । ग्रन्थतो हि प्रमाणाभाव एवावसीयते न प्रमाणम्, नास्तीत्यपुले प्रमेयाभावमेव लौकिकाः प्रतिबुध्यन्ते न प्रमेयं किञ्चित् । अतो न तावत् ग्रन्थानुगुणं प्रमाणान्तरम्, न च युक्त्या सङ्गच्छते, सिद्धस्य हि ज्ञानस्य प्रमाणमप्रमाणं वेति विचारणा युक्ता । न च भूतलोपलम्भादन्यन्नास्तीति विज्ञानमस्ति । तदेव हि द्वेधा प्रकाशते । अन्यसहितमसहितं च तत् । यदा घटादिसहितं तदुपलभ्यते तदा घटोऽस्तीति व्यवहारः प्रवर्तते । तन्मात्रबोधे तु नास्तीति । न च वाच्यं सत्स्वपि सूक्ष्मेषु भावेषु तन्मात्रबोधो दृष्टः । अतस्तत्रापि नास्तीति प्रकाशत इति । तदेव हि द्वेधा प्रकाशते । द्वेधा हि तन्मात्रबोधः, दृश्ये प्रतियोगिन्यदृश्ये वा । तत्र या दृश्ये प्रतियोगिनि तन्मात्रबुद्धिः सैव घटादेर्नास्तित्वम् । येषामप्यभावः प्रमेयस्तेषामपि दृश्यादर्शनादेव नास्तीत्यभावो निश्चीयते । अतो येयं सर्ववादिसिद्धा तन्मात्रबुद्धिः सैव नास्तीति व्यपदिश्यते । यच्चाभावस्य कारणमिष्यते तत्तन्मात्रबुद्धेरेवोभयवादिसिद्धायाः कारणमाश्रीयताम् । अतो यत्रैव प्राक् संसृष्टबुद्धिरासीत् तत्रैव विलक्षणकारणोपनिपाते तन्मात्रबुद्धिरेव जायते न पुनर्घटाद्यभावः । (अवश्यं) चैतदेवाभ्युपगन्तव्यम् । अन्यथा हि नाभावो गृहीतुं शक्यते, प्रमाणाभावो हि तत्र प्रमाणम्, न चागृहीतेन स प्रतिपादयितुं शक्यते । अस्ति हि सुषुप्तस्यापि प्रमाणा .... (ता?भावः) । नच नास्तीति निश्चयः । अतो नागृहीतमदर्शनमभावं निश्चाययति, तद्ग्रहीतिरपि चाभावरूपत्वादपरेणादर्शनेनेत्येवमनवस्थापातः । यदि च सन्मात्रमेवादर्शनं निश्चाययति, ततो निवृत्तेऽप्यदर्शने प्राक् देवदत्तो



प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।

नासीदिति प्रतिपत्तिर्न स्यात् । भवति हि कदाचिदेतत् । यो यत्र न दृष्टस्तस्मिन् पुनर्दृश्यमान एवासत्यप्यदर्शने प्राचीनाभावज्ञानं तदसत्यदर्शने न स्यात् । अतः प्राचीनादर्शनविमर्शजमेव तज्ज्ञानमिति वाच्यम् । एवं च गृह्यमाणमेव तदभावं प्रकाशयति । ग्रहणे चानवस्थाप्रसङ्गः । तन्मात्रसंविदेव त्वदर्शनमित्याश्रीयमाणे न किञ्चिद् दुष्यति । स्वप्रकाशा हि सा फलभूता न प्रकाशान्तरमपेक्षते । अतस्तन्मात्रानुभव एव स्वप्रकाशो भावः । यदा चासौ घटाद्यदर्शनरूपतया विमृश्यते तदा तदभावत्वेनापदिश्यते । अतो न प्रमेयान्तरमभावः । न च नास्तीति ज्ञानं प्रमाणम्, उभयोरभावात् । ज्ञानाभाव एवायं ज्ञानभ्रमः, आलोकादर्शनेऽन्धकारदर्शनभ्रमवदिति न विद्मः किमत्र लक्ष्यते इति । अत्राह—किमत्र न ज्ञायते, यथोक्तं भवता ग्रन्थतस्तावत् प्रमाणाभाव एवावसीयते, केचित्किलाभावं नाम प्रमाणमातिष्ठन्ते, तन्निराकरणार्थ एवायं भाष्यकारस्य प्रयत्नः । कथमनेन निराक्रियते । श्रूयताम् । यदेके वदन्ति— नास्तीत्यस्यार्थस्य असन्निकृष्टस्येति, प्रत्यक्षाद्यविषयस्याभावः प्रमाणमिति, तन्न, प्रमाणाभावो ह्यसौ— प्रमाणं न भवतीत्यर्थः । अप्रमाणत्वे चोक्तो हेतुः । एतदपि नोपपद्यते । यदि ग्रन्थानुगुण्येनायमर्थो व्याख्यास्यते ततो विस्पष्टः प्रदेशान्तरे भाष्यविरोधः, एवं हि चित्रापरिहारे भाष्यकारो वक्ष्यति— 'स्यादेवं यदि पञ्चैव प्रमाणान्यभविष्यन्' इति । तत्र स्फुटमेव हि षट् प्रमाणानि दर्शयति । न च तद्व्यवहाराभिप्रायम्, न हि प्रमाणगता संख्या व्यवहारं भिनत्तीति साम्प्रतम् । इहापि चाप्रामाण्ये न भाष्यकारेण कश्चिद्धेतुरुक्तः । न च प्रतिज्ञामात्रेण प्रतिपक्षनिराकरणं भवतीति साम्प्रतम् । तस्माद् व्याख्येयमेतत् । अत्राह— प्रमाणेति । अयमर्थः । प्रमाणलक्षणमेवेदम् । यत्तूक्तं तदभावेन कथं तल्लक्ष्यते इति । सत्यम् । न प्रमाणमात्रविवक्षया प्रमाणशब्दः अपि तु सामान्यवचनोऽपि प्रमाणशब्दोऽधिकाराद् विशेषेऽवतिष्ठते । प्रमाणाभाव इति किमुक्तं भवति, पूर्वोक्तप्रमाणपञ्चकाभाव इति । अस्ति च तेषानां भावोपधानमेकम्, सर्वाणि हि भावप्रमाणानि, अतो भावप्रमाणा-

वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १ ॥

भावोऽभावप्रमाणमिति । स चोपरिष्टाद् द्वेधा व्याकरिष्यते — आत्मनोऽपरिणामो वा नास्तीति वा भावज्ञानमिति । अस्ति वा भूतलमात्रोपलम्भादन्यन्नास्तीति विज्ञानम् । बाढम् । कोऽस्य विषयः । चतुर्धा व्यूढः प्रमेयाभावः । असति हि तस्मिन् कार्यकारणादीनामितरेतरसङ्करो वार्तिककृता दर्शित एव । यश्चायं पादविहारादिव्यवहारः कण्टकाद्यभावावधारणपुरस्सरः सोऽप्यभावस्यासति प्रमेयत्वे न स्यात् । यदि भूतलमात्रमन्नोपलभ्यते न कण्टकादिविवेकः, सत्स्वपि तेषूपलभ्यत इति नास्तीति धिया गृह्येत । बुध्यपलापस्तु संविद्विरुद्ध एव । न हि भावाभावयोः प्रकाशो विशिष्यते । यत्तूक्तं तन्मात्रधीरेव घटो नास्तीति व्यपदिश्यत इति । तत्र न विद्मः किं मात्रशब्देन व्यवच्छिद्यत इति । यदि न किञ्चिद् व्यावर्तयति, अनर्थकस्तर्हि । अथ व्यावर्तयति । अस्ति तर्हि व्यावृत्तिविषयः, इतरथा सदात्व एव व्यावर्तयतीति व्यवहारो भवेत् । अयमेव संसृष्टधियस्तन्मात्रधियो विशेषः । यदसौ विविक्तविषया । विषयान्तरविवेकश्चाभावः । बुद्धिरेव विषयः न ततोऽन्य इति चेत् । सा तर्हि संसर्गोपलम्भेऽप्यस्तीति नास्तीति प्रकाशेत । अपि च यद्यत्र प्रतिषिध्यते तत्तत्र नास्तीत्युच्यते । न चेह घटो नास्तीति बुद्धिः प्रतिषिध्यते, बुद्धिगोचरे हि नास्तीति शब्दे बुद्धेरेवाभावः स्यात् । अथोच्यते घटो नास्तीत्ययमर्थः— भूतलमात्रमुपलभ्यत इति । न तावदेवं लौकिका बुध्यन्ते । अपि चैवं सूक्ष्मस्य वस्तुनस्सदसद्भावौ प्रति जिज्ञासा न स्यात्, यद्यभावो नाम न कश्चिदस्ति, तर्हि वस्तुन्युपलब्धे कोऽयमपरस्संशयस्सूक्ष्मेषु केशकीटादिषु, तन्मात्रोपलम्भो हि भावान्तराणामभावः, स च ज्ञात एवासंशयितव्यश्च, संविदः स्वप्रकाशत्वात् किमपरमन्विष्यते । दृश्ये प्रतियोगिनि तन्मात्रबोधोऽभावो नादृश्य इति चेत्, किं पु(न)रदृश्यतया, यदा बुद्धेरभावो नातिरिच्यते । यदि तत्त्वान्तरमभावो भवेत्, तदा तदवधारणे दृश्यादर्शनमुपयुज्यते । आत्मेन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानजननकारणम्, तद् यदा सत्स्वप्यविगुणेष्विन्द्रियादिषु जिज्ञासितोऽप्यर्थः प्रयत्नेनान्विष्टो न दृश्यते तदा तदभावाददर्शनमिति कल्प्यते । तदेवं



दृश्यत्वसिद्ध्यर्था युक्ता सूक्ष्मजिज्ञासा । तन्मात्रोपलम्भे त्वभावेऽदृष्टार्थमेव दृश्यविशेषणमापद्येत । यच्चोक्तम् — यदभावस्य कारणं तत्तन्मात्रमिव एव कल्पनालाघवादस्त्विति । तदयुक्तम् । न हि कल्पनालाघवं भवतीति प्रमाणावगतमुपेक्षितुं शक्यम् । न च यदभावस्य कारणं तत्तन्मात्रधिय इति युक्तम् । मुद्गरप्रहारादिर्घटाभावस्य कारणम् । न च तेन तन्मात्रबोधो जन्यते । भूतलादिवस्तुरूपप्रकाशो हीन्द्रियादिकारणकः, नासौ घटादेरुत्सारणं प्रहरणं वापेक्षते । यत्तु नानिरूपितमदर्शनमभावं निश्चाययति, सुषुप्ते प्रसङ्गादिति । तदयुक्तम् । न ह्यगृहीते वस्तुनि निराश्रयोऽभावः प्रकाशते, क्वचिद्धि कस्यचिदभावः प्रतिभाति न स्वतन्त्रः । अत एवाह— वस्तुरूपे न जायत इति । न च सुषुप्तस्य किञ्चित् प्रकाशते । क्व चाभावः परिच्छिन्द्यात् । अपि च योग्यप्रमाणानुत्पत्तिरभावं निश्चाययति, न च सुषुप्तस्य प्रमाणयोग्योऽर्थः, यो न प्रकाशत इति कथमभावनिश्चयो जायते, अतो नादर्शनमगृहीतामिति सुषुप्तस्याभावो न प्रकाशते, किन्तु योग्यादर्शनमेतन्न भवतीति । यच्चापि निवृत्तेऽप्यदर्शने प्राङ्नास्तित्वं व्यपदिश्यते सम्प्रति दृश्यमानस्यापीति । तत्र । तत्र हि समानोपलम्भयोग्येषु बहुषु स्मर्यमाणेषु यदेको न स्मर्यते, तेन स्मृतिनिवृत्त्या फलतः प्रत्यक्षनिवृत्त्या तदभावः प्रतीयते स्मृत्येव भावान्तराणाम् । तदानीन्तनोऽभावः स्मृतिनिवृत्तिश्च तदानीमस्त्येव । न चावगम्यते । वस्त्वभावमेव तु प्राचीनमवगमयतीति नानवस्था । अतो नास्तीति ज्ञानं प्रमाणम्, अभावश्च प्रागभावादिभेदभिन्नः प्रमेयमिति साम्प्रतम् । तदयमर्थो भवति । यत्र पञ्च प्रमाणानि सम्भवत्प्रतिपत्तीनि यथायथं पटादेर्वस्तुनस्सत्तां बोधयितुं न जायन्ते, तस्मिन् विषयेऽभावस्य प्रमाणता सम्भवति, तदनेन प्रमाणशब्दोऽधिकारात् प्रमाणपञ्चके प्रयुक्त इति दर्शितम् । वस्तुरूपे न जायत इति च स्वतन्त्राभावमात्रजार्न न प्रमाणमिति दर्शयति । लौकिकप्रमाणलक्षणकथनाच्च यत्रैव प्रमाणानां शक्तिसम्भवस्तत्रैव तेषामनुत्पादः प्रमाणमभावोऽभावावधारणे । तादृशेनैव हि लौकिका नास्तीति बुध्यन्त इति । भाष्यस्याप्ययमर्थः— अभावोऽपि न परीक्षणीयः । अव्यभिचारात् । प्रमाणाभावो ह्यसन्निकृष्टेऽर्थेऽभावाख्ये नास्तीत्यनेन रूपेण प्रकाशमाने यां बुद्धिमुत्पादयति साभावप्रमा(णः?) ।

वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया ।
क्षीरे दध्यादि यन्नास्ति प्रागभावस्स उच्यते ॥ २ ॥
नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते ।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥ ४ ॥
क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥ ५ ॥

---

न चैवञ्जातीयकस्य व्यभिचारस्सम्भवतीति । व्यवहितमपि चाकाङ्क्षावशात् यां बुद्धिमुत्पादयतीति सम्बन्धनीयम् ।

'येन यस्याभिसम्बन्धो दूरस्थेनापि तेन तत्' ।

इति न्यायात् ॥ १ ॥

यत्र वस्तुसद्भावबोधार्थं योग्यप्रमाणानुदयस्तत्राभावः प्रमाणमित्युक्तम्, किं पुनस्तत्रानेन प्रमीयते, अभावस्तावत् स्वप्रमाणैरेव यथास्वमवगम्यते, अत आह—वस्त्वसङ्कर इति ॥ १½ ॥

वस्त्वसङ्करमेव विवृणोति—क्षीरे दधीति सार्धद्वयेन । योऽयं कार्यकारणादिना परस्परविवेकश्चतुर्धा दर्शितः स वस्त्वसङ्कर इत्याख्यायते । सोऽभावेन प्रमीयते । शशशृङ्गादिरूपेणेति । तेन रूपेणालोच्यमानाः शशमूर्ध्न्यवयवा अभावः, स्वरूपेण तु भावा एवेति ॥ २—४ ॥

असति त्वभावप्रामाण्ये सर्वस्सर्वेण सङ्कीर्येत इत्याह—क्षीर इति द्वयेन । एवमिति । यथा क्षीरे दधि एवं दध्नि क्षीरमित्यर्थः । शशे शृङ्गमित्यतः प्रभृत्यत्यन्ताभावासिद्धौ दोषप्रसञ्जनम् । अभावप्रमाणानाश्रयणे हि न शशादिषु शृङ्गादीनामात्यन्तिकोऽभावस्सिध्यति । परिपन्थिनश्च भूतचैतन्यवादिनो न निराकर्तुं शक्यन्ते । महाभूतानां च वाय्वादीना-



अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ॥ ६ ॥
न च स्याद् व्यवहारोऽयं कारणादिविभागतः ।
प्रागभावादिभेदेन नाभावो विद्यते[1] यदि ॥ ७ ॥
न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।
कार्यादीनामभावः को यो भावः[2] कारणादिना ॥ ८ ॥

---

मात्यन्तिको गन्धाद्यभावो न सिध्येत् । यथोत्तरं हि चत्वारि महाभूतान्येकैकगुणरहितानीति स्थितिरिति ॥ ५, ६ ॥

सर्वत्र सङ्करे दोषमाह — न चेति । योऽयं कारणादिविभागेन लौकिकानां व्यवहारो दृश्यते, सर्वसङ्करे न स्यात्, क्षीरमानयेति नियुक्तो यत् क्षीरमेवानयति न दधि, दध्यानयने न क्षीरम्, इदमसति कार्यकारणादीनामितरेतरविवेके न सिध्यतीति ॥ ७ ॥

ननु नाभावो नाम तत्त्वान्तरमुपलभ्यते, भूतलं हि स्वप्रमाणादवगच्छामः, घटं चासति प्रमाणे न पश्यामः, न तु घटाभावो नामापरः कश्चित् बुद्धौ भवति । घटो नास्तीत्यपि घटो न प्रमीयत इत्यर्थः, न तु घटाभावः प्रमीयत इति । अतस्सर्वोपाख्याविरहलक्षण एवाभावो न किञ्चित् तत्त्वान्तरमत आह— न चेति । यत्तावत् भावप्रमाणैर्नोपलभ्यत इति । सत्यम् । अत एवाभावः प्रमाणान्तरम् । घटो नास्तीत्यपि नायमर्थः घटो न प्रमीयते इति, सन्नपि हि घटो न प्रमीयत इत्युच्यते । अत एव घटोऽस्ति न वेति पृष्टोऽनिर्णीताभावो न नास्तीति व्यपदिशति, किन्तु अनुपलब्धिमात्रम् । अतोऽभावप्रमितिरेवायं घटो नास्तीति । यश्चायं चतुर्धा भेदो वर्णितः सोऽपि सर्वोपाख्याविरहलक्षणेऽभावे न सिध्यति । प्रयोगश्च भवति— वस्तु अभावः, चतुर्धा भेदाद्, द्रव्यादिवदिति । यदप्याहुः — नाभावो नाम किञ्चित् तत्त्वम्, प्रत्यर्थनियतेन ह्यात्मना नीलादयः परस्परं भिद्यन्ते, नैवमभावस्य भावात् किञ्चिद् भेदकम् ।

---

१. 'भिद्यते' M. U. S. and C. S. S.   २. 'भावो यः' M. U. S.

अतो न व्यावृत्तमुपलभामह इति कथं तत्त्वान्तरमवस्थापयामः । तद्व्यवहारस्तु नास्तीति विकल्पशब्दप्रयोगात्मा भावाश्रय एव कथञ्चिदुपपादनीयः; न त्वेकाकारप्रतिनियतादन्यासंसर्गिणो(र?)भावादन्योऽभाव इति । तदप्येकदेशिनिराकरणेनैव निराकृतम् । अपि च, अविषयो नास्तीति विकल्पः कथं संवेद्यत इति वक्तव्यम् । शब्दसंस्पृष्टं हि रूपं विकल्पस्य विषयः, न चेह तदस्ति । न चात्मा विकल्पस्याभिलापसंसर्गयोग्यः, असाधारणत्वात् । अत एवात्मनि निर्विकल्पकत्वात् कल्पना स्वसंवित्तिं प्रत्यक्षामाह । यदाह 'नैनमियमभिलापेन संसृजति । तथा वृत्तेरात्मनि विरोधात्' इति । यदि मतं— जात्यादिवदभावविकल्पा अपि समारोपितविषया एव, नानेनाभावविकल्पो दुष्यतीति । तन्न । समारोपितं हि यत्किञ्चिज्जातीयकं तत्प्रतिविकल्पमन्यदन्यच्च, कथमेकशब्दालम्बनं भवेत् । कल्पिताकारभेदानध्यवसायादेकत्वाध्यवसाय इति चेत् । कस्य तर्हि, न हि नैरात्म्यवादिनामेकः कश्चिदस्ति प्रतिसन्धाता, यः पूर्वापरयोरारोपितैकत्वाध्यवसायादेकशब्दं प्रयुञ्जीत । विकल्पास्तु क्षणिकाः स्वविषये नियता नान्योन्यस्य विषयमभिनिविशन्त इति कथं प्रतिसन्दधीरन् । असति च विपर्यये समारोपितविषयत्वाभिधानमलीकमेव । तदवश्यं नास्तीत्येकशब्दोपाश्लिष्टमुपेयतयाश्रयणीयं भाववदभावाख्यमपि किञ्चिदवस्थितं रूपम् । अत एव किं पुनस्तत्त्वमित्यपेक्षिते सतस्तु सद्भावोऽसतस्त्वसद्भाव इति द्वेधैव तत्त्वविद्भिस्तत्त्वमाश्रितम् । अपि च—असत्यभावे कस्य हेतोराहतस्य घटस्यानुपलम्भः, विनष्टत्वादिति चेत् । को विनाशः । यदि न किञ्चित्, प्रागवदुपलम्भप्रसङ्गः । न ह्यप्रच्युतप्राच्यार्थक्रियारूपस्यानुपलम्भे घटस्य किञ्चित्कारणमधुना पश्यामो यद्यस्य विनाशो नाम किमपि तत्त्वान्तरं नाश्रीयत इति सिद्धं तत्त्वान्तरमिति । एतच्चानुपाख्येयत्वमभावस्य निराकर्तुमुक्तम्—न ह्यभावो वस्तु, लोकविरोधात् । यथा ह्यचन्द्रश्शशीति लोकविरुद्धम्, एवमभावो वस्त्विति । सत्ता हि वस्तुत्वम्, न चासावभावे समवैति, सदसद्विवेकाभावप्रसङ्गात् । अतोऽवस्तु । कार्यकरणादभावे वस्तुत्ववादः, न मुख्यतया । अभावो ह्यर्थक्रियासमर्थ एव, ज्ञानजननदर्शनात् । विहिताकरणे च प्रागभावस्यैव क्रियान्तरविशेषणतया प्रत्यवायहेतुत्वात् । एवमुत्तरत्रापि वस्तुताप्रसाधनं वेदितव्यमिति । इतश्चाभावो



यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् ।
तस्माद् गवादिवद् वस्तु प्रमेयत्वाच्च गम्यते ॥ ९ ॥

न चौपचारिकत्वं वा भ्रान्तिर्वापि यदृच्छया ।
भवत्यतो न सामान्यविशेषात्मकता मृषा ॥ १० ॥

वस्त्वित्याह — कार्यादीनामिति । वस्त्वेव सदसदात्मकमिति सिद्धान्तः । तत्र कथं वस्तुरूपस्यैवाभावस्य निस्स्वभावत्वम् । किमिदानीं भावाभावयोरभेद एव, नेति वदामः, भेदोऽपि ह्यनयोर्धर्मधर्मितया कियानप्यस्त्येव रूपादीनामिव । कः पुनरनयोस्सम्बन्धः, संयोगस्समवायो वा; न तावत्संयोगः, द्रव्यधर्मत्वात् तस्य । न च समवायः, भावाभावप्रसङ्गात् । अभावसमवाये हि भावो न स्यादेव । नाभावसमवायादसत्त्वम्, न हि घटोऽभावसमवायादसन् भवति । असति समवायानुपपत्तेः । किन्तु प्रहारादेव घटस्याभावः । यत्त्वनाहतमनपसार्य च भावान्तरमभावरूपेणावगम्यते तत् कथमसद् भविष्यति । अतस्स्वहेतोरेव जायमानो नित्यो वा सर्वोऽसङ्कीर्णस्वभाव एव जायत इति सिद्धमस्य जात्यादिवद् भावधर्मत्वम् । ततश्च वस्तुत्वमिति ॥ ८ ॥

इतश्च वस्तु अभाव इत्याह — यद्वेति वस्त्वन्तेन । अभाव इति सामान्यात्मना प्रागभावादिभेदेन च व्यावृत्त्यात्मना गृह्यमाणोऽभावस्सामान्यविशेषात्मकः, ततश्च वस्तुविषयप्रयोगार्थः—अभावो वस्तु, सामान्यविशेषात्मकत्वात् गवादिवदिति । तस्मिन्नेव साध्ये हेत्वन्तरमाह — प्रमेयत्वादिति ॥ ९ ॥

नन्वयमसिद्धो हेतुः, औपचारिको हि सामान्यविशेषभावोऽभावे । एकशब्दवाच्यं सामान्यरूपं दृष्टं गवादि, नानाशब्दवाच्यं च विशेषरूपं शाबलेयादि । अतोऽत्राप्यौपचारिकस्सामान्यविशेषभावो विवेकज्ञस्य । असति तु विवेके एकशब्दनिबन्धनभ्रम एवायम्—अभावस्सामान्यविशेषात्मेति । अत आह — न चेति । सति हि बाधके भ्रान्तिरुपचारो वा कल्प्यते, न चेह तथेति भाव इति ॥ १० ॥

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ ११ ॥

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते कैश्चिद्रूपं किञ्चित् कदाचन ॥ १२ ॥

यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते ।
चेत्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते ॥ १३ ॥

---

एवं तावत् 'नास्तीत्यस्यार्थस्यासन्निकृष्टस्य' इति यदुक्तं भाष्ये तद् विवृतम् । इदानीं प्रमाणाभावशब्दं व्याचष्टे—प्रत्यक्षादेरनुत्पत्तिरिति । अनुत्पत्तिरेव केति चेदत आह — सात्मन इति । आत्मनो हि ज्ञानात्मकः परिणामः । तद् यदा आत्मा भूतलादौ न घटादिज्ञानात्मना परिणमति सा तस्य प्रत्यक्षाद्यनुत्पत्तिः स्वरूपावस्थानं प्रमाणाभाव इत्याख्यायते, तत्प्रामाण्ये च नास्तीति ज्ञानं फलम् । नास्तीत्येव वा भावज्ञानं प्रत्यक्षाद्यनुत्पत्तिरित्युच्यते, अतस्तदेव प्रमाणम् , (ना ? हा)नादिबुद्धिः फलमिति विवेकः ॥ ११ ॥

ननु यदि द्व्यात्मकं वस्तु, तर्हि सकृदेव तथा प्रतिभातमिति किं प्रमाणान्तरेणात आह — स्वरूपेति । स्वरूपेण तद्वस्तु गवादि सद्रूपमश्वादिरूपेण चासद्रूपम् । तदस्मिन्नेव द्विरूपे किञ्चिदेव कदाचित् प्रतीयते न तु सर्वात्मकमेव गृहीतव्यमिति नियम इति ॥ १२ ॥

किं पुनः कारणं द्व्यात्मकस्यैकमेव रूपं गृह्यते नापरं किञ्चिदत आह— यस्य यत्रेति । उद्भूतं हि गृह्यते नानुद्भूतम् , यथैव रात्रौ रूपं न स्पर्शः, जिघृक्षितं वा प्रायेण । अतो यदेव सदसतोरुद्भूतं भवति तेनैव बुद्धिव्यपदेशौ भवतः । चेत्यतेऽनुभव इति किमिदम् , न ह्यनुभवश्चेत्यते, स एव चेतना, विषयस्तु चेत्यते । सत्यम् । विषयप्राप्त्यन्यथानुपपत्त्यानुभवोऽपि चेत्यत एव । तदनेन प्रकारेण विषयप्रकाशमेव दर्शयतीत्यदोष इति ॥ १३ ॥



तस्योपकारकत्वेन वर्ततेंऽशस्तदेतरः[1] ।
उभयोरपि संवित्तावुभयानुगमोऽस्ति हि ॥ १४ ॥

अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ १५ ॥

नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमादृते ।
ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम् ॥ १६ ॥

प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते ॥ १७ ॥

न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १८ ॥

---

उद्भूतजिघृक्षितैकग्रहणे चेतरस्तदनुगुणतयैव लीनो भूत्वावतिष्ठते । सामान्यविशेषयोरिवैकग्रहणेऽन्यतर इत्याह — तस्येति । इदं चान्वारुह्यवचनेनास्माभिरुक्तम् । अस्त्येव तु भावाभावप्रतीतावन्यतरानुगम इत्याह — उभयोरिति ॥ १४ ॥

उभयानुगममेव दर्शयति— अयमेवेति द्वयेन । अयमेवेति । भावान्तरेणासङ्कीर्ण इत्यर्थः । न ह्यप्रतिसंहिते भावान्तराभावे सङ्कीर्णस्वभावो न निश्चेतुं शक्यते । नास्तीत्यपि प्रतिषेध्यप्रतिषेधाधारभावोपष्टम्भनवर्जितं न किञ्चित् ज्ञानं जायते । किञ्चिच्छब्देन भावस्याभावानुगमशून्यमपि ज्ञानमस्त्येव, न त्वेवमभावस्येति दर्शयति ॥ १५, १६ ॥

दर्शितं तावत् सदसदात्मकं वस्त्विति । कदाचित् किञ्चिदनुभूयत इति च । उभयोरंशयोरिदानीं प्रमाणविभागं दर्शयति — प्रत्यक्षादीति ॥ १७ ॥

कथं पुनरिदमवगम्यते, विस्फारिताक्षस्य हि सहसा नेह घटोऽस्ति, अघटं वा भूतलमित्यभावविशिष्टं भूतलज्ञानं जायमानमुपलभ्यते? दण्डि-

---

१. 'येणैजा' M. U. S.

प्रत्यक्षवत्, तदभावस्याप्रत्यक्षत्वे नावकल्पते । न ह्यप्रत्यक्ष एव विशेषणे विशिष्टः प्रत्यक्षो भवति, दण्ड इव दण्डी । न च नास्त्येव विशिष्टा धीरिति वक्तव्यम्, अनाश्रयाभावसंवित्त्यभावात् । अपि चात्मा भावस्याभावः, स कथं स्वतन्त्रोऽनुभूयते । न हि रूपादयो भावधर्माः स्वतन्त्रा एवावसीयन्ते । स्वतन्त्राभाववादस्तु स्वातन्त्र्यमेव, सदसदात्मके वस्तुनीति हि दर्शयति । भावांशोऽभावांश इति च विस्पष्टं तदभावविशिष्टं ग्रहणमित्याह । किञ्चास्य स्वातन्त्र्ये प्रमाणम्, न ह्ययं कदाचिदपि तथावसीयते । किमिदानीमभावो नावसीयत एव, स्वतन्त्रो वावसीयते । न तावत् पूर्वः कल्पः, तदवगमे प्रमाणान्तराभावात् नित्यासंवित्तिप्रसङ्गात् । न च संयोगप्रतिषेधे स्वतन्त्राभावावसायोऽस्ति, प्रतियोगिसंयोगप्रतिषेधात्मैव ह्यभावः, स चापरतन्त्र एवेति संयुक्तविशेषणत्वलक्षणया प्रत्यासत्त्या सतीन्द्रियसन्निकर्षे ऐन्द्रियज्ञानगोचर एव । एकं हीदं विशिष्टं ज्ञानम् । तदस्याभावः प्रमाणमिन्द्रियं वा, यद्यभावः स तर्हि भावमपि गोचरयेत् । न चैतदिष्टम् । अतस्सत्युपलभ्यमाने तदैव यन्नोपलभ्यते तन्नास्तीति सत एव प्रकाशकमसतोऽपीति न प्रमाणविभागं पश्यामः । अत आह — न तावदिति । तावच्छब्दो लिङ्गापेक्षया । तच्चोपरिष्टान्निराकरिष्यत इति । अत्र कारणमाह — भावांशेति । योग्यता हि कार्यदर्शनसमधिगम्या, सा चेन्द्रियाणां भावात्मकग्रहण एवोपलभ्यते नाभावेऽपि । विनापि तु तेन तद्ग्रहणादिति वक्ष्यामः । अत्र तु योग्यतासहिता प्राप्तिरिन्द्रियार्थयोस्सम्बन्ध इत्यभिप्रायः । यत्त्वेकज्ञानसंसर्गिणोरेकप्रमाणत्वमिति । तन्न । एकस्या अपि बुद्धेर्नानाकारणत्वदर्शनात् । एकं हीदं भावनेन्द्रियसमाहारजं प्रत्यभिज्ञानमिति वक्ष्यामः । एकज्ञानप्रतिभासिनोरपि च गृह्यमाणस्मर्यमाणयोर्विवेक उक्तः । विविक्ता एव ते ह्यर्था इति । न हि स्मृत्युपस्थापितनामविशिष्टो डित्थो न प्रत्यक्षो भवति । नाम चाप्रत्यक्षं स्मर्यमाणत्वात्, तस्यागृहीते हि विशेषणे विशिष्टो नावगम्यते नाप्रत्यक्षे । एवमिहापि प्रमाणाभावोपनीताभावविशिष्टे सत्युपलभ्यमाने न किञ्चिदनुपपन्नम् । दण्डिन्यपि शाब्दे तावद् दण्डपदोपनीतविशेषणविशिष्ट एव प्रत्ययार्थो न दण्डोऽपि । प्रत्यक्षं तु योग्यतयोभयत्र प्रवर्ततां नाम, न चैवमुभयत्राक्षाणां योग्यता । अभावज्ञाने तदनपेक्षाया



ननु भावादभिन्नत्वात्सम्प्रयोगोऽस्ति तेन च ।
न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ॥ १९ ॥
धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नः स्थिते ।
उद्भवाभिभवात्मत्वाद् ग्रहणं चावतिष्ठते ॥ २० ॥

वक्ष्यमाणत्वात् । किमिदानीमनुमानेऽपि प्रत्यक्षानुमानसमाहारजो विशिष्टबोधः । न । अनुमानस्यान्वयाधीनजन्मत्वात् । विशिष्टेनैव चान्वयानुगमात् । धूमवानग्निमानिति हि व्याप्तिरवगता । उक्तं च —

"नैवं न ह्यत्र लिङ्गस्य शक्त्यनन्तत्वकल्पना ।"

इति । अत्रापि चायमग्निमानिति विशेषबोधेऽस्त्येव प्रत्यक्षापेक्षा । अयमेवाभावस्य प्रतीतिप्रकारः, यत्प्रमाणान्तरज्ञापिताश्रयं विशिनष्टीति न किञ्चिदनुपपन्नम् । यत्तु संयुक्तविशेषणतया इन्द्रियसन्निकर्षोऽभावस्येत्युक्तम्, तदयुक्तम् । असम्बद्धस्य विशेषणत्वानुपपत्तेरतिप्रसक्तेः । इतरथा विशेषणार्थमर्थितेनैव सन्निकर्षोपपत्तौ वृथैव संयुक्तविशेषणार्थत्वाश्रयणमित्यलमनेनेति ॥ १८ ॥

अभिप्रायमजानानश्चोदयति — नन्विति । प्राप्तिमात्रं ह्यर्थेन्द्रिययोस्सन्निकर्षः । अस्ति च भावादभिन्नस्याभावस्य भाववदेवेन्द्रियप्राप्तिरिति । अत्र च योग्यताया उद्घाटनेनैवोत्तरं देयम्, तदुपेक्ष्यैव तावदत्यन्ताभेदमेवायमाह, तदेतमेव तावन्निराकरो(षी ? मी)त्यभिप्रायेणाह — न हीति । यदि भावाभावयोरेकान्तमभेद एव स्यात् ततो भावेन्द्रियसन्निकर्षे तदभिन्नस्याभावस्यापि स्यात्, न त्वेवमस्ति । अभावस्यापि रूपादिवदत्यन्ताभेदाभावादिति ॥ १९ ॥

रूपादितुल्यतामेवाभावस्य दर्शयति — धर्मयोरिति । भावाभावात्मनोर्धर्मयोर्धर्म्यभेदेऽपि स्थिते भेदोऽपीष्ट इत्यर्थः । भेदे कारणमाह — उद्भवेति । भावाभावयोरप्यु(द्भवा ? द्भूता)भिभूतयोर्ग्रहणाग्रहणव्यवस्था दृश्यते । न चैतदेकत्वे कल्पते । न ह्येकमेव तत्त्वमुद्भूतमभिभूतं चेति प्रतीयत इति ॥ २० ॥

इदमेव निमित्तं च विवेकस्य प्रतीयते ।
भावाभावधियोरक्षैः सम्बन्धोऽक्षानपेक्षणम् ॥ २१ ॥

रूपादेरपि भेदं च केचिद् ग्राहकभेदतः ।
वर्णयन्ति यथैकस्य पुंसः पुत्रादिरूपताम् ॥ २२ ॥

बुद्धिमात्रकृतो भेदो रूपादौ नित्यमेव हि ।
न च देशाद्यभिन्नानां समुदायावकल्पना ॥ २३ ॥

---

इदं चानयोर्विवेककारणमित्याह — इदमेवेति । अक्षानपेक्षता चाभावधियो वक्ष्यत इति ॥ २१ ॥

अयं च ग्राहकभेदनिबन्धनो भेदो रूपादीनामिति कैश्चिदिष्यते । सोऽनयोरपि शक्यतेऽवगन्तुमित्याह — रूपादेरिति । एवं हि केचिद् वदन्ति — यथा ह्येकमेव मुखं मरतकपद्मरागाद्युपाधिभेदाद् भिन्नमिव प्रतिभाति, यथा चैक एव पुरुषोऽपेक्षाभेदात् पुत्रादिभेदभिन्न इव गृह्यते, यथैकमेव तत्त्वं श्रोत्राद्युपाधिभेदाद् भिन्नमिव प्रतिभाति, एवमिहापि भावाभावयोरौपाधिको भेदो भविष्यतीति । नन्वेवमौपाधिके भेदे तात्त्विकमेकत्वं प्राप्नोति । भवत्वस्मिन्मते, तथापि रूपादिव्यवस्था सिध्यत्येवेति ॥ २२ ॥

इदं चान्वारुह्यवचनेनास्माभिरुक्तम्, न हि रूपादीनां ग्राहकभेदनिबन्धनो भेदः, किन्तु बुद्धिभेदनिबन्धन एव, मुखं हि प्रमाणान्तरादेकरूपमवगतं तदुपाधिभेदाद् भिद्यत इति युक्तम् । न त्वेकत्वे रूपादीनां किञ्चित् प्रमाणमस्ति, नित्यमेव वैलक्षण्यात् । अयं च बुद्धिभेदो भेदहेतुर्भावाभावयोरपि समान एवेत्यभिप्रायेणाह — बुद्धिमात्रेति । कः पुनरयं भावाभावात्मको धर्मी, यद्धर्मौ भावाभावौ, नैकं रूपादिसमुदायाद् भिन्नमुपलभ्यते, वृत्त्यादिविकल्पाक्षमत्वात् । अतो देशाद्यभिन्नानां रूपादीनां समुदायो धर्मी, न तत्त्वान्तरमत आह — न चेति । नात्र वन इव बाधिका बुद्धिरस्तीति भावः । इदं च सविकल्पकसिद्धावुक्तमप्यभावाश्रयसमर्थनार्थमत्रोक्तमित्यपुनरुक्ततेति ॥ २३ ॥



सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते ।
स्वरूपापेक्षया चैषां परस्परविभिन्नता ॥ २४ ॥

यदि तद्वदपेक्षात्र न स्याद् भेदोऽत्र नैव हि ।
सदसद्रूपता बुद्धेर्भवेदन्यतरत्र नः ॥ २५ ॥

सत्सम्बन्धे सदित्येवं सद्रूपत्वं प्रतीयते ।
नास्त्यत्रेदमितीदं तु तदसंयोगहेतुकम् ॥ २६ ॥

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥ २७ ॥

---

एवं तावदभावस्य भावाद् भेदाभेदौ दर्शितौ । तावेव रूपादिदृष्टान्तेन द्रढयति — सद्गुणद्रव्येति । न हि रूपादयस्सदादिरूपेण न भिद्यन्त इति स्वरूपापेक्षयापि तेषां भेदश्शक्यते वारयितुम्, तथा वा भेद इति न सदाद्यात्मनाऽभेदः प्रतिक्षिप्यते । एवमभावोऽपि भावधर्मतया ततो भिन्नोऽपि स्वरूपापेक्षयाऽभिन्न इष्यते । द्रव्यरूपेणेति । रूपादयो द्रव्यादभिन्नाः, तच्चाभिन्नमिति तद्रूपेणैषामभेद इत्यर्थः ॥ २४ ॥

स्वरूपापेक्षया रूपादिवद् भेदानाश्रयणे भावाभावयोरन्यतरत्र न बुद्धेस्सदसद्रूपता भवेदित्याह — यदीति ॥ २५ ॥

अस्ति त्वसाविन्द्रियसम्बन्धासम्बन्धहेतुको बुद्धिभेद इत्याह — सत्सम्बन्ध इति । एतेन, यदाहुः — न भावाद् भेदकमभावस्य रूपमुपलभामहे इति, तन्निराकृतम् । सदसद्रूपविवेकादिति । यदिन्द्रियेण संयुज्यते भूतलं तदस्तीति प्रतीयते, यन्न सम्बध्यते घटादि तन्नास्तीति प्रतीयत इति ॥ २६ ॥

नन्विन्द्रियव्यापारानन्तरमेवेह घटो नास्तीति ज्ञानमुत्पद्यते, तत् कुतोऽयं विवेको नेन्द्रियेणाभावबुद्धिर्जन्यत इति । न ह्यसति तद्व्यापारे भावबुद्धिवदभावबुद्धिरपि जायमाना दृश्यते । यद्यपि भावादभावो भिद्यते, तथापि तस्य रूपादिवत्संयुक्तसमवायेन वा तद्विशेषणतया वेन्द्रिय-

---

१. 'तस्य', २. तद् Chou. ३. क्षणाद्, Chou and M. U.

स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ २८ ॥

सन्निकर्षोऽस्त्येव । अतस्तज्ज्ञानमैन्द्रियकं भवेदत आह—गृहीत्वेति । अयमभिप्रायः — नानाश्रयोऽभावःशक्यते ग्रहीतुमित्याश्रयग्रहणार्थमेवात्रेन्द्रियापेक्षा नाभावग्रहणाय, यथा नास्मृते प्रतियोगिन्यभावो गृह्यत इति तत्स्मरणार्थं प्राचीनज्ञानजन्मनस्संस्कारस्योद्बोधोऽप्यपेक्षितः, एवमाश्रयग्रहणार्थमिन्द्रियम् । न च प्राप्तिमात्रमैन्द्रियकज्ञानजन्मनि कारणम् । अपि तु योग्यतासहिता प्राप्तिरिति प्रत्यक्षे वर्णितम् । न चेन्द्रियाणामभावज्ञानजननयोग्यता, तेष्वसत्स्वपि तद्भावादिति वक्ष्यते । मानसमिति कोऽर्थः । किं सुखादिज्ञानवन्मनसा जन्यत इति । यद्येवं तथापि प्रत्यक्षतैव । न चान्तरिव बहिर्मनसस्स्वातन्त्र्यमस्ति । सत्यम् । सर्वप्रमाणसाधारणस्तु मनसो व्यापारोऽत्र कथितः । केवलात्ममनस्सन्निकर्षादेव बाह्येन्द्रियानपेक्षं प्रमाणाभावेनाभावज्ञानं जन्यत इत्युक्तं भवति । गृहीत्वा स्मृत्वेति च धर्मधर्मिणोरभेदात् समानकर्तृकत्वाभिधानमिति ॥ २७ ॥

कथं पुनरिदमवगम्यते भावग्रहणमिन्द्रियापेक्षं नाभावग्रहणमिति । समानो हि तद्भावभावः । अत आह—स्वरूपेति । यो हि गृहस्वरूपमेवावधार्य क्वचिद्गतः पृच्छ्यते — तत्र चैत्रोऽस्ति न वेति, तदासौ पृष्टस्तत्र नास्तितां तदैव प्रतिपद्यते । यदि त्विन्द्रियाधीनमभावज्ञानं भवेत् नासति तद्व्यापारे जायेत । न च पूर्वावगताभावस्मरणमेवेति वाच्यम् । न ह्यसति प्रतियोगिस्मरणे भावो दृश्यते । न चाश्रयग्रहणकाले प्रतियोगिस्मरणमस्ति । बहूनामेव हि पृष्टेनाभावः कथ्यते । न च तावतां स्मरणं तत्रासीदिति चिन्तयितुं शक्यते । यदि तूच्यते सामान्येनाभावोऽवगतः, सम्प्रति विशेषेण स्मर्यत इति, तदयुक्तम् । न ह्यभावत्वं नाम सामान्यमस्ति, विशेषाणामेव स्मृतिविपरिवर्त्तिनामेवाभावोऽवसीयते । न च सामान्यतोऽवगतो विशेषेण स्मर्यत इति, युक्तम् । पूर्वानुभवाहितभावनाबीजा हि सा स्मृतिः, नाल्पमप्यतिरेकं गोचरयितुमुत्सहते । अतस्तदानीमेव प्रतियोगिस्मरणपुरस्सरमिन्द्रियानपेक्षमभावज्ञानं जायत इति मनोहरमिदम् । तदिदमुक्तं तदैव प्रतिपद्यत इति । इदं च प्रत्यक्षफलस्मृतिनिवृत्त्या फलतः प्रत्यक्षानवृत्तिरित्युक्तमेवेति ॥ २८ ॥



न चाप्यत्रानुमानत्वं लिङ्गाभावात् प्रतीयते ।
भावांशो ननु लिङ्गं स्यात् तदानीं नाजिघृक्षणात् ॥

अभावावगतेर्जन्म भावांशे ह्यजिघृक्षिते ।
तस्मिन् प्रतीयमाने तु नाभावे जायते मतिः ॥३०॥

न चैष पक्षधर्मत्वं पदवत् प्रतिपद्यते ।
सह सर्वैरभावैश्च भावोऽनैकान्तिको मतः ॥ ३१ ॥

क्वचिद् भावेऽपि सद्भावो ज्ञातो यस्य कदाचन ।
तस्याभावोऽपि तत्रैव कदाचिदवगम्यते ॥ ३२ ॥

एवं तावदक्षजत्वमभावधियो निराकृतम् । इदानीं लैङ्गिकत्वं निराकरोति—न चाप्यत्रेति । अत्र चोदयति—भावांशेति ।

परिहरति — तदानीमिति मतिरन्तेन । द्वावत्र भावौ प्रतिषेध्यः प्रतिषेधाधारश्च, तत्र न तावत् प्रतिषेध्यो लिङ्गम्, अवगतं हि लिङ्गं भवति । न च तदा घटो गृह्यते, न हि तस्मिन् गृह्यमाणे तदभावो ग्रहीतुं शक्यते । तदिह प्रतिज्ञाहेत्वोर्विरोधः । सति भावे तदभावो न प्रतिज्ञातुं शक्यते । सत्यां तु प्रतिज्ञायां नासतोऽदृष्टस्य लिङ्गत्वम् । अतो नाभावे जिघृक्षितेजिघृक्षितप्रतिषेध्यभावो लिङ्गमिति ॥ २९, ३० ॥

अस्तु तर्हि प्रतिषेधाधारभावो लिङ्गमत आह—न चैष इति । एष इति परोपस्थितमपरोक्षं भावं निर्दिशति । यथार्थे पक्षीकृते पदमतद्धर्मतया न हेतुरित्युक्तम्, एवमेषोऽपि भूतलभावो न घटाद्यभावधर्म इति । अपि चान्वयाधीनात्मलाभमनुमानज्ञानम्, न च भूतलभावस्य सर्वैरभावैस्सम्बन्धो ज्ञायते । तत् कथं ततस्ते प्रत्येष्यन्त इत्याह—सहेति ॥ ३१ ॥

अस्तु तावदभावान्वयः क्वचिद् भूतलादौ भावे, सद्भावोऽपि यस्य घटादेः कदाचित् ज्ञातः तस्यापि तत्राभावोऽवगम्यत इत्याह—क्वचिदिति ॥ ३२ ॥

यत्राप्यदृष्टपूर्वत्वं यदभावस्य तत्र च ।
तदभावमतिर्दृष्टा सम्बन्धेऽक्षानपेक्षया ॥ ३३ ॥
कस्यचिद् यदि भावस्य स्यादभावेन केनचित् ।
सम्बन्धदर्शनं तत्र सर्वमानं प्रसज्यते ॥ ३४ ॥
गृहीतेऽपि च भावांशे नैवाभावेऽन्यवस्तुनः ।
सर्वस्य मतिरित्येवं व्यभिचारादलिङ्गता ॥ ३५ ॥
सम्बन्धे गृह्यमाणे च सम्बन्धिग्रहणं ध्रुवम् ।
तत्राभावमतिः केन प्रमाणेनोपजायते ॥ ३६ ॥
तदानीं नहि लिङ्गेन सम्बन्धिग्रहणं भवेत् ।
तत्रावश्यमभावस्य प्रमाणान्तरतो गतिः ३७ ॥

न केवलं यद्यत्र कदाचिद् दृष्टं तन्मात्रस्य तत्राभावोऽवगम्यते, यस्यापि तु यत्राभावो न दृष्टपूर्वस्तस्यापि तत्राभावोऽवगम्यत इत्याह — यत्रेति ॥ ३३ ॥

यदि तु येन केनचिदेकेनाभावेन गृहीतसम्बन्धाद् भावादभावान्तरानुमानमिष्यते, ततोऽतिप्रसक्तिरित्याह— कस्यचिदिति ॥ ३४ ॥

न चैवमतीति व्यतिरेकेण दर्शयति— गृहीतेऽपि च भावांशे नैवाभावेऽन्यवस्तुनः । सर्वस्यमतिरित्यन्तेन । अनैकान्तिकश्चायं भावोऽभावान्तरैरपि सम्बन्धात् । अतोऽनैकान्तिकत्वादस्य घटादेरभावं गमयितुमलिङ्गत्वमित्याह — एवं व्यभिचारादलिङ्गतेति ॥ ३५ ॥

अपि च सम्बन्धग्रहणं सम्बन्धिग्रहणाधीनम् । तदिहाभावाख्ये सम्बन्धिनि ग्रहीतव्ये किं प्रमाणमिति वक्तव्यमित्याह— सम्बन्ध इति ॥ ३६ ॥

न तावल्लिङ्गमविदितसम्बन्धं तदवधारणे प्रमाणम्, इतरेतराश्रयं हि तथा स्यादित्यभिप्रायेणाह — तदानीमिति । अतोऽवश्यं तद्ग्रहणे प्रमाणान्तरमर्थनीयमित्याह— तत्रेति ॥ ३७ ॥

1. सर्वत्र मुद्रितपुस्तकपाठः।



प्रत्यक्षादेरनुत्पत्तिर्न तु लिङ्गं भविष्यति ।
न विशेषणसम्बन्धस्तस्याः सामान्यतो भवेत् ॥ ३८ ॥

अत्रेदानीमनुपलब्धिलिङ्गवादिनो बौद्धस्य प्रत्यवस्थानमाह — प्रत्यक्षादेरिति । द्वेधा हि हेतवो बौद्धैर्विभज्यन्ते— कार्यं स्वभाव इति, अनुपलब्धिश्चैकज्ञानसंसर्गिणोरेकोपलब्धिरेव, तस्याश्च स्वरूपं ज्ञेयरूपं च प्रकाशते इति ज्ञानज्ञेयस्वभावा । न ह्यसौ स्वरूपमिव ज्ञेयसत्तामपि व्यभिचरति । तस्याश्च स्वसाध्येन नास्तीति विकल्पशब्दात्मकव्यवहारेण तद्योग्यतया वा तादात्म्यमेव प्रतिबन्धः । न ह्यसौ नास्तीति व्यवहारं व्यभिचरति शिंशपेव वृक्षताम् । तदेवं ज्ञातप्रतिबन्धानुपलब्धिः यो नाम भ्राम्यन् विविक्तदेशोपलब्धावपि घटाय घटते तं प्रति नास्तीति व्यवहारं तद्योग्यतां वानुमापयति । एवं च घटाद्यभावानुपलब्धिप्रयोगः— यद् दृश्यं हि सद्यत्र नोपलभ्यते तत्तत्र नास्ति । नोपलभ्यते चोपलभ्यमाने देशे दृश्यो घट इति । एतदपि दूषयति — न विशेषणसम्बन्धस्तस्या इति । य एवानुपलब्ध्यानुमातुमिष्यते घटाभावो नास्तीति व्यवहारस्तद्योग्यता वा नैकेनापि विशेषेणानुपलब्धेस्सम्बन्धोऽवगतः, कथं ततो विशेषानुमानम् । भूतलोपलब्धिर्हि सा, तस्याश्च नानाविधानेकघटपटादिविषया नास्तीति व्यवहारा दृश्यन्त इति कथं विशेषेण घटो नास्तीति व्यवहारयेत् । घटानुपलब्धिरसौ, अतो घटाभावं तद्व्यवहारं वा प्रसाधयतीति चेत् । कस्तस्या घटेन सम्बन्धः । देशोपलब्धिर्हि सा, तावदेव तस्या घटानुपलब्धित्वम् । तच्च सर्वान् प्रत्यविशिष्टमिति कथमेकेनैव व्यपदिश्यते न चेद् घटाभावो नाम कश्चित् । कस्माच्च सत्यपि घटे घटो नास्तीति व्यवहारो न प्रवर्तते । सद्व्यवहारविरोधादिति चेत् । कथं घटानुपलब्धौ सद्व्यवहारः । अस्ति हि तदानीमपि देशोपलब्धिः । विविक्तोपलब्धिर्हि घटानुपलब्धिः, नासौ घटे सतीति चेत्, को विवेकार्थ इति । नन्वयमभाव एव । तदभावेऽनर्थकं विविक्तवचनम्, अतोऽनुपलब्धेरयमपि विशेषो दुस्साध एव, यदसति घटे नास्तीति व्यवहारो न सतीति । यच्चेदं घटाभावमतिलङ्घ्य नास्तीति व्यवहारानुमानमवस्थितं तदपि केन विशेषेणेति न विद्मः । सोऽपि भावातिरेकी न कश्चिदुपलभ्यते । योग्यता तदनतिरेकिणी तस्मिन् बुद्धे बुद्धैवेति न किञ्चिदनुमेयं पश्यामः । वार्तिककारेण त्विदमुपेक्ष्यैव तावद् दूषणान्तरमुक्तमिति ॥ ३८ ॥

न चाप्यभावसामान्ये प्रमाणमुपजायते ।
व्यभिचाराद् विशेषास्तु प्रतीयेरन् कथं तया ॥ ३९ ॥
न चानवगतं लिङ्गं गृह्यते चेदसावपि ।
अभावत्वादभावेन गृह्येतान्येन हेतुना ॥ ४० ॥
स चान्येन ग्रहीतव्यो नागृहीते हि लिङ्गता ।
तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता ॥ ४१ ॥
लिङ्गाभावे तथैव स्यादनवस्थेयमित्यतः ।
क्वाप्यस्य स्यात् प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम् ॥
नास्तीति धीः फलं चैषा प्रत्यक्षादेरजन्मनः ।
तस्यैव च प्रमाणत्वमानन्तर्यात् प्रतीयते ॥ ४३ ॥

---

अभावसामान्येन त्वनुपलब्धेस्सम्बन्धस्सिध्यत्येव, न त्वभावसामान्ये प्रमाणमुपजायत इत्याह — सामान्येति । विशेषास्त्वनैकान्तिकतया नानुपलब्ध्या बोधयितुं शक्यन्त इत्याह — व्यभिचारादिति ॥ ३९ ॥

अपि च—नानवगतरूपं लिङ्गमनुमाने लिङ्गं भवति, तदियं प्रत्यक्षाद्यनुत्पत्तिरभावत्वादपरेण लिङ्गेनावगन्तव्या । एवं हि वदन्ति, यावान् कश्चित् प्रतिषेधः स सर्वोऽनुपलब्धेरेवेति । एवं च तत्र तत्र सदृशापरापरलिङ्गानुसारेणानवस्थापात इत्याह—न चेति द्वयेन । एतच्चोपलब्ध्यभावोऽनुपलब्धिरित्यापाद्योक्तम्, विविक्तेतरपदार्थोऽनुपलब्धिरिति तु प्रत्युक्तमिति ॥ ४०, ४१ ॥

एवं योऽप्यसौ लिङ्गिरूपाभावः सोऽपि सम्बन्धग्रहणार्थमवश्यं प्रथममवगन्तव्यः । तदवगमेऽपि तद्रूपापरलिङ्गाभ्युपगमादनवस्थैव । अतः क्वचिदवश्यमनुमानाभावात् प्रमाणान्तरमभ्युपगन्तव्यमित्याह — लिङ्गेति ॥ ४२ ॥

यदि तु नास्तीति बुद्धिरेव लिङ्गमित्युच्यते तन्न । फलं हि सा, प्रत्यक्षाद्यनुत्पादस्य कथं तल्लिङ्गम्, तत्सिद्ध्यर्थमेव हि लिङ्गमिष्यते । सिद्धायां तु बुद्धौ किं लिङ्गेन । तदेतदाह — नेति । यदि सा फलं किं तर्हि प्रमाणमत आह — तस्यैवेति । यस्यैव सा फलं तदेव प्रत्यक्षाद्यनुत्पत्तेः फलानन्तर्यात्प्रमाणमिति ॥ ४३ ॥



त्रिलक्षणेन या बुद्धिर्जन्यते सानुमेष्यते ।
न चानुत्पत्तिरूपस्य कारणापेक्षिता क्वचित् ॥ ४४ ॥
मानं कथमभावश्चेत् प्रमेयं चास्य कीदृशम् ।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥ ४५ ॥
भावात्मके तथा मेये नाभावस्य प्रमाणता ।
तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता ॥ ४६ ॥

---

किञ्च सौगतसमयसिद्धानुमानलक्षणग्रन्थानुसारेणापि न प्रत्यक्षाद्यजन्मनोऽनुमानत्वमित्याह — त्रिलक्षणेति । एवं हि ते पठन्ति । 'त्रिरूपाल्लिङ्गतोऽर्थदृगनुमान'मिति । न चानुत्पत्तिरुत्पत्तेः प्रागभावो बुद्धेः केनचिज्जन्यते, प्रागेव त्रिलक्षणेन हेतुनेति । ननु च हेतुतयानुपलब्धिरनुमानमिष्यते, न त्वनुमितिरनुमानमिति भावसाधनतया । अतः किं तन्निरासेन । सत्यम्, अहेतुतया तावदनुमानत्वं निराकृतमेव । अनेन तु लक्षणानन्तःपातो वर्ण्यत इति ॥ ४४ ॥

अत्र चोदयति—(मानमिति)प्रमाणता हि भावात्मना व्याप्ता प्रत्यक्षादिष्ववगता, तन्निवृत्त्या निवर्त्यत इति भावः । इतरस्तु—वर्णितोऽस्माभिः प्रागभावानामसङ्करश्चतुर्णां । न च तद्बोधस्य भावबोधवैलक्षण्यमुपलभ्यते, बाधविरहसामान्यात् । स च प्रामाण्ये कारणं न भावस्वरूपता । सा तु प्रामाण्यं प्रत्यप्रयोजिकैव कथंचित्तेषु सङ्गता, अतो नाभावत्वेनाप्रामाण्यं भवति । भावे तु प्रमेये तदप्रमाणमेवेत्यभिप्रायेणाह — प्रमेयमिति । अनुरूपमेवेदं यदभावेऽभावः प्रमाणमित्याह — मेय इति ॥ ४५ ॥

यथा भावात्मके मेयेऽभावः प्रमाणं नानुरूपं तथा तदभावे भाव इत्याह — भावात्मक इति ॥ ४६ ॥

भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम् ।
परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि ॥ ४७ ॥
यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते ।
वस्तुनः कारणत्वं हि दृष्टमित्यभिमानिता ॥ ४८ ॥
न लिङ्गत्वप्रमेयत्वे भवेतां तद्वदेव हि ।
तथा सति च पूर्वोक्तो व्यवहारो न सिध्यति ॥ ४९ ॥
प्रमाणानामनुत्पत्तेर्नाभावस्य च धर्मता ।
यत्राभावोऽस्ति तेनास्याः सम्बन्धो नैव विद्यते ॥ ५० ॥
यो न सन्निहितस्तत्र तस्य धर्मो भवेदियम् ।
न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात् ॥ ५१ ॥

न भावात्मकमेव प्रमाणमिति राजाज्ञा, यदेव तु परिच्छेदफलं तदेव तु प्रमाणम्, तच्च प्रत्यक्षाद्यजन्मनोऽपि समानमित्याह — भावात्मकस्येति ॥

स्यादेतत् — वस्तुन एव प्रामाण्यदर्शनान्नावस्तुनोऽनुपलब्धेः प्रमाणत्वमिति । तथा च सति बौद्धानामपि लिङ्गप्रमेयत्वे न स्याताम्, तेऽपि हि नावस्तुनो दृष्टे इत्याह — यदीति सार्धेन । अनुज्ञाने दोषमाह — तथा सतीति । 'न च स्याद् व्यवहारोऽयमि'ति कारणादिविभागेनोक्तो व्यवहार इत्यर्थः ॥ ४८, ४९ ॥

अपक्षधर्मत्वादपि प्रत्यक्षाद्यनुत्पत्तिर्न लिङ्गमित्याह — प्रमाणानामिति । नाभावे पक्षीकृते प्रत्यक्षाद्यनुत्पत्तिस्तद्धर्मतयावगम्यते । अभावेन सम्बन्धाभावादित्यभिप्राय इति । नन्वभावविशिष्टं भूतलं साधयिष्यामः, तच्च पूर्वमवगतमिति तद्धर्मो भविष्यतीत्यत आह — यत्रेति । न हि भूतले प्रत्यक्षानुत्पत्तिः, ज्ञायमानत्वात् तस्येति ॥ ५० ॥

घटस्य तर्हि धर्मो भविष्यति तद्गोचरे प्रत्यक्षादीनामनुत्पत्तेरत आह — य इति । सत्यम् । यत्र प्रत्यक्षादीनि नोत्पद्यन्ते तद्धर्मता कथञ्चिद् भवेदपि, न त्वसाविह प्रमीयते । धर्मधर्मित्वयोरभावात् । न हि

१. 'स्यापि' Ch. S. and M. U. S.



अभावेन तु सम्बन्धो भवेत्तद्विषयत्वतः ।
तज्ज्ञानाद् विषयत्वं च ज्ञाने मेयं न विद्यते ॥ ५२ ॥
संयोगसमवायादिसम्बन्धो नैव विद्यते ।
नागृहीते हि धर्मित्वं गृहीते सिद्धसाधनम् ॥ ५३ ॥
अभावशब्दवाच्यत्वात्प्रत्यक्षादेश्च भिद्यते ।
प्रमाणानामभावो हि प्रमेयानामभाववत् ॥ ५४ ॥
अभावोऽपि[1] प्रमाणेन स्वानुरूपेण मीयते ।
प्रमेयत्वाद् यथा भावस्तस्माद् भावात्मकात् पृथक् ॥
कर्माणि सर्वाणि फलैस्समस्तैः सर्वैर्यथा नञ्च यदङ्गकाण्डैः ।
न सङ्गतानीह[2] परस्परं हि नाङ्गं तदेतत्प्रभवं क्रतूनाम् ॥

तद्धर्मिणं कृत्वाभावविशिष्टता साध्यते तस्याप्रतीतेः । नापि तद्विशिष्टं भूतलादि, तदानीं तस्य तत्राभावादिति ॥ ५१ ॥

अभावस्य तु सा धर्मो भविष्यति तद्विषयत्वात् तस्याः । अभावे हि प्रमेये सा लिङ्गं भवत्येव । किन्तु नास्तीतितो भावो विषयो भविष्यति, ज्ञाते च प्रमेयाभाव इत्याह — अभावेनेति ॥ ५२ ॥

अन्यस्तु न कश्चिदभावेनानुत्पत्तेस्सम्बन्धप्रकारो विद्यते, येन तद्धर्मतामनुगम्यानुमानं भविष्यतीत्याह — संयोग इति । इतश्चापक्षधर्मत्वमित्याह — नागृहीत इति । न ह्यगृहीते पर्वते धूमस्तद्धर्मतयावगम्यते । अथ तद्वदभावोऽपि प्राक् प्रतीयत इत्युच्यते, सिद्धं तर्हि साध्यत इति ॥ ५३ ॥

एवं प्रत्यक्षानुमानाभ्यां प्रसाधितं भेदं प्रयोगेण दर्शयति — अभावशब्देति ॥ ५४ ॥

प्रयोगान्तरमाह — अभावोऽपीति भावान्तेन । अतस्सिद्धं भावात्मकात् प्रमाणादन्यत्वमभावस्येत्युपसंहरति — तस्मादिति ॥ ५५ ॥

वेदोपयोगमभावस्य दर्शयति — कर्माणीति । योऽयं सर्वकर्मणां फलासङ्करः परस्परासङ्करश्च परस्परमङ्गाङ्गिभावाभावः, नासावभावप्रमा-

१. 'अभावो वा' Ch. S. and M. U. S.   २. 'च' Ch. S.

युक्त्यागमाभ्या[1]मिह तर्कितोऽयं
प्रमाणषट्कं प्रविभज्य भाष्ये ।
ततोऽधिकं यद् द्वयमिष्टमन्यै-
र्भेदो न तस्येत्यपि सिद्धमेतत् ॥ ५७ ॥

इह भवति शतादौ सम्भवाख्या सहस्रा-
न्मतिरवियुतभावात् सानुमानादभिन्ना ।
जगति बहु न तथ्यं, नित्यमैतिह्यमुक्तं
भवति तु यदि सत्यं नागमाद् भिद्यते तत् ॥ ५८ ॥

ण्यावृत्ते सिध्यतीति । (यथेति । यावत् तावद् यथावदिति ।?) इहेति । वेदं प्रति निर्देश इति ॥ ५६ ॥

ननु च व्यासमतानुसारिणोपमानातिरिक्तं प्रमाणद्वयमुपवर्णितम् , ऋषिणा च सम्भवैतिह्ययोरपि प्रमाणत्वमाश्रितम् , तत्परित्यागे कारणं वक्तव्यमत आह — युक्तीति । प्रमाणषट्कमेव हि युक्त्या सङ्गच्छते । आगमानुगतञ्च । आगमश्च मीमांसातन्त्रम् , अतो युक्त्यागमाभ्यामिह शाबरे भाष्ये प्रमाणषट्कमेव प्रविविच्य तर्कितम् । यत्तु द्वयमधिकमिष्टं तदत्रैवान्तर्गतमिति ॥ ५७ ॥

(कः ? क्व) पुनस्तस्यान्तर्गतिरत आह — इह भवतीति । या तावत् सहस्राच्छते मतिस्सम्भवाख्यं प्रमाणमिष्यते सानुमानान्न भिद्यते । सहस्राच्छतमवियुतिभावादविनाभावादवगम्यते । अतस्तावदनुमानान्न भिद्यते । ऐतिह्यप्रमाणमुक्तं तावदसत्यमेव । निधिप्राप्त्यसुरकन्यावशीकरणादि, द्रौपदीपञ्चभर्तृकेत्यादि, यदि तत् सत्यं तदागमाद् (न) भिद्यते । आप्तागमो ह्यसौ । उक्तं च — 'पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ।' इति । अतोऽनुमानागमयोरन्तर्भावान्न सम्भवैतिह्ययोः पृथगुपन्यासस्सिद्धः ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिका-
टीकायामभावपरिच्छेदस्समाप्तः ॥

1. 'भिति' Ch. S and M. U. S.



## अथ चित्राक्षेपः ।

परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।
इदानीमैहिकाक्षेपस्सूत्रकारेण वो[1]च्यते ॥ १ ॥

भाष्यपाठो विचार्यः, अत्र भाष्यम् — 'ननु भवन्त्वन्यानि प्रमाणानि, शब्दस्तु न प्रमाणम् , कुतः ? अनिमित्तं विद्यमानोपलम्भनत्वात्' इति । अस्यार्थः — यद्यपि सर्वप्रमाणाव्यभिचाराद्य प्रमाणसामान्यभाविना धर्मेण शब्दोऽपि न प्रमाणम् , विशेषेण त्वात्मभाविना धर्मेणाप्रमाणम् । तथा हि — चित्रया पशवो भाव्यन्त इति चित्रया यजेतेत्यस्यार्थः । कृतचित्रस्यापि यजमानस्यानन्तरमविकलसकलेन्द्रियैरपि पशवो न दृश्यन्ते । तत्र नूनमिष्टिः पशुफलेति भवति मतिः । तदिदमुक्तम् 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इति । किमुक्तं भवति — उपलम्भनानि हि चक्षुरादीनि पशूनां विद्यन्ते । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । तस्मादुक्तविसंवादादप्रमाणं चित्राचोदनेति । स पुनरयमाक्षेपो गतार्थ उपलक्ष्यते । चोदनासूत्रे हि 'नन्वतथाभूतम्' इत्यादिना भाष्यकारेणाक्षेपपरिहारावुक्तौ । अतः पुनरुक्तमिदमित्याशङ्क्याह — परलोक इति । अस्यार्थः — परलोकफला हि तत्र स्वर्गकामो यजेतेत्येवमादिचोदना वेदबाह्यबौद्धादिपरमतेनाक्षिप्ताः । इदानीमैहिकफलाश्चित्रादिचोदना आक्षिप्यन्ते । नन्भयीमपि चोदनामाक्षेप्तुं शक्यत एव वाक्यत्वादयो हेतवः । त एव तत्र भाष्यकारेण 'यत् किञ्चन लौकिकं वचनम्' इति दर्शयतान्वर्णिताः । वार्तिककृतापि — 'यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः' इति विवृताः । तस्मादसदेतत् परलोकफला एव तत्राक्षिप्ता इति । यदपि चेदानीमैहिकाक्षेप इत्युक्तं तदयुक्तम् , इहापि च — 'एवं दृष्टापचारस्य वेदस्य स्वर्गादावपि फले नास्तीति मन्यामहे' इति सर्वाक्षेपः कृतः । वार्तिककारेणापि च

'एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता'

इति वदता । तस्मादुभयत्राप्युभयाक्षेपमेव न्याय्यं मन्यन्ते । केयं व्यवस्था । अत्रोच्यते । सत्यमुभयत्राप्युभयाक्षेपः, तथापि हेतुभेदादपौनरुक्त्यम् । तथाहि — तत्र वाक्यत्वादयः परैरुक्ता आक्षेपहेतवः,

१. 'वोच्यते', Ch. S.

चित्रापशुफलत्वादिविषयाश्चोदना मृषा ।
प्रत्यक्षाद्यविकारेऽपि तैरर्थासङ्गतिर्यतः ॥ २ ॥

---

इदानीं तु शब्दशक्तिपरामर्शद्वारेणाभ्यन्तरा एव हेतव उपपत्स्यन्ते । तथा चोक्तम्—

आनन्तर्यमनुक्तं चेन्न सामर्थ्यावबोधनात् ।

इति । सामर्थ्यं हि सर्वाख्यातानामर्थं ब्रुवतां सहकारि । तद् यद्यपि नेष्टिरनन्तरफलेति श्रुतिः, तथाप्यर्थसामर्थ्यादेतदवगम्यते, कथमपरथा 'यदासौ विद्यमानासीत् तदा फलं न दत्तवती, कालान्तरे पुनरसती कथं दास्यति' इति । न च पशवोऽनन्तरमसम्भवद्भावनाः, स्वर्गो हि नानाक्षिप्तविशिष्टदेहेन्द्रियादिपरिग्रहो भवितुमुत्सहते, अतो माभूदनन्तरम्, अमी पुनः पशवः सम्भवन्ति यजमानस्यात्रैवेति स्वहेतुसमनन्तरमनुपलभ्यमाना दृष्टप्रतिग्रहादिहेत्वन्तराः श्रुतचित्रादिफलतया न शक्यन्तेऽवगन्तुम् । अयमेव तु शब्दशक्तिपरामर्शो वार्तिककृता तार्किकप्रक्रियामनुविदधानेन 'न वा पशुफले'त्यादिना साधनप्रयोगैरुपदर्शितः । तदेवमैहिकफलासु चित्राचोदनास्वाक्षिप्तासु तत्सामान्यादितरासु तथात्वमिति पुनरप्यग्निहोत्रादिचोदनाक्षेपेऽवतिष्ठते । स चायमैहिकाक्षेपद्वारेणापि नोच्यते । अत एव चैहिकाक्षेप इत्युक्तम् । एतदुक्तं भवति—ऐहिकफलानामामुष्मिकफलानां चायमैहिकाक्षेपपुरस्कारेणैवाक्षेपः, यदामुष्मिकस्वर्गादि तन्मा नाम कर्मानन्तरमुपलभ्यतामैहिकफलं तु पश्वादि किं नोपलभ्यते, न चेदमुपलभ्यते, तन्न नूनं तत् फलमिति ऐहिकफलकर्मचोदनाव्यभिचारेणान्यासामपि परलोकफलानां तत्सामान्यादाक्षेपः । पूर्वं तु ताः परतः प्रामाण्यमाश्रित्य परोक्तैरेव वाक्यत्वादिभिर्हेतुभिराक्षिप्ताः । तदुक्तं परैरिति । परिहारान्तरमाह — सूत्रेति । अयमभिप्रायः—चोदनासूत्रे भाष्यकृता सूत्रकारेण वक्ष्यमाणाक्षेपपरिहारावनागतावेक्षणेन प्रतिज्ञासमर्थनार्थमुपवर्णितौ । इदानीं तु सूत्रकारेण स्वयमेवोच्यत इति तेनेदमेव सर्वचोदनाक्षेपक्षेत्रमित्युक्तमिति ॥ १ ॥

अत्र परिहारे पूर्वोक्त एवाक्षेपहेतुरिति, तमुपन्यस्यति— चित्रेति फलानीत्यन्तेन । अयमर्थः — चित्रापशुफलत्वादिविषयाश्चोदना धर्मिण्यः



यदीदृक्तन्मृषा दृष्टं विप्रलिप्सोर्यथा वचः ।
नदीतीरे फलानीति तत्राहश्यानि तानि चेत् ॥ ३ ॥
न वा पशुफला चित्रा स्वकाले तददानतः ।
स्नानभुज्यादिवत् तेऽपि तत्साध्या न भवन्ति वा ॥ ४ ॥
तदुत्पत्तावसद्भावात् स्वर्गतृप्तिसुखादिवत् ।
वैधर्म्येणोभयत्रापि भवेतां सुखमर्दने ॥ ५ ॥
आनन्तर्यमनुक्तं चेन्न सामर्थ्यावबोधनात् ।

---

मृषेति साध्यो धर्मः । अधिकृतैः प्रवृत्तियोग्यैरपि प्रत्यक्षादिभिरर्थानवगतेः । यदीदृशं तन्मृषा— यथा विप्रलिप्सोर्वचः । आदिशब्देनाग्निहोत्रादिविषया अपि चोदनाः पक्षीकरोति । ननु विप्रलिप्सुवाक्यमत्र दृष्टान्तः । न च तन्नियमेन प्रत्यक्षाद्यसङ्गतार्थमसत्यं च । तस्मादुभयविकलो दृष्टान्तः । अत आह — तत्रेति । असत्यार्थं प्रयुक्तमेव नदीतीरादिवाक्यमिह दृष्टान्तः । प्रायेण चैवञ्जातीयकं विप्रलिप्सुरेव प्रयुङ्क्ते इति विप्रलिप्सोरित्युक्तमिति ॥ २, ३ ॥

इदानीमैहिकाक्षेप इत्युक्तं विवृणोति — न चेति वदन्तेन । चित्रेष्टिर्धर्मिणी, न पशुफलेति साध्यम्, स्वकाले पश्वदानात्, स्नानादिवदिति । प्रयोगान्तरमाह — तेऽपीति । ते पशवो न चित्रासाध्याः, चित्रोत्पत्तावसद्भावात् स्वर्गतृप्तिसुखादिवत् । आदिशब्देनात्र भोजनजन्या तृप्तिरभिप्रेता । एतौ च प्रयोगौ 'नेष्टिः पशुफला, कर्मकाले च कर्मफलेन भवितव्यम्' इति भाष्योक्तौ वेदितव्याविति । अत्रानन्तरं 'यत्कालं हि मर्दनं तत्कालमेव मर्दनसुखम्' इति भाष्यकारेणोक्तम्, तद् वैधर्म्यदृष्टान्ततया प्रयोगद्वये योजयति — वैधर्म्येणेति । चित्रा न पशुफला पशवो न तत्साध्या इत्युभयत्रापि प्रयोगे वैधर्म्येण सुखमर्दने भवेताम्, ईदृशी चात्र वैधर्म्यरचना, यद्यत्साध्यं तत्तत्समकाले प्रसूते, मर्दनमिव सुखम् । यच्च यत्साध्यं तत् तदुत्पत्तौ भवत्येव सुखमिव मर्दनोत्पत्ताविति ॥ ४, ५ ॥

ननूक्तिविसंवादादप्रामाण्यमुक्तम् । न च किञ्चिदिह विसंवादः, न हि कृते कर्मणि तावत्येव फलेन भवितव्यमिति शब्दो ब्रूते, किन्तु अस्येदं

शब्दैकदेशभूतेन तेन तत्प्रतिपादितम् ॥ ६ ॥
कालान्तरानुपादानात् कर्मस्वाभाव्यतोऽपि च ।
चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् ॥ ७ ॥
अत्र तावदसंवादो विरोधश्चोत्तरत्र तु ।
स्वर्गयानविरुद्धो हि भस्मीभावोऽत्र दृश्यते ॥ ८ ॥

---

फलमिति । एतावति च पर्यवसानात् । अतः कालान्तरे फलं दास्यति । तदेतदुक्तम्—'कालान्तरे फलं दास्यतीति चेत्' इति, तदेतदाह—आनन्तर्यमिति । परिहरति — न सामर्थ्येति । साक्षादनुक्तस्यानन्तर्यस्याप्यत्र सामर्थ्येनावबोधनं कृतम्, यदैव ह्यस्येदं फलमित्युक्तं तदैवमर्थादेवावगम्यते अनन्तरमनेन भवितव्यमिति । कथं नामान्यथासत्कालान्तरे फलं दास्यतीति । नन्वेवमपि सामर्थ्यलभ्यमानन्तर्यमनन्तरफलानुपलम्भनेन बाध्यताम्, अविशेषप्रवृत्ता तु चोदना कथं बाध्यते अत आह—शब्देति । न हि सामर्थ्यं नाम पृथक् प्रमाणम्, अपि तर्हि सर्वाख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणीति शब्दैकदेश एव । अतस्तुवावदानमिवाप्यद्रव्येष्वर्थादनन्तरमेव फलं निश्चीयत इति तद्बाधेऽपि शाब्दबाधो भवत्येवेति ॥ ६ ॥

इतश्चानन्तर्यमवगम्यत इत्याह — कालान्तरेति । यदि ह्यत्र फलं दास्यतीति लड्श्रोष्यत् तदा तत्सामर्थ्येन कल्पना काचिदप्यभविष्यत् । अद्य पुनरस्येदं कर्मणः फलमिति पर्यवसिते वचसि सर्वकर्मणामनन्तरफलोपलम्भाद् वैदिकस्यापि चित्रादेश्चोद्यमानस्यापि कर्मणस्तत्स्वाभाव्यादानन्तर्यं विशेषणतयावतिष्ठत इति ॥ ७ ॥

अत्रानन्तरमपरं भाष्यम् — 'दृष्टविरुद्धमपि किञ्चित् वैदिकं वचनं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति । तद् येन विशेषेणोक्तं तमाह — अत्रेति । अत्र हि चित्रादिवाक्येषूक्तिविसंवादादप्रामाण्यमुक्तम् । उत्तरत्र तु यज्ञायुधिवाक्ये प्रत्यक्षादिविरोध इति विरोधमभिद्योतयति — स्वर्गयान इति । यजमानस्य निरतिशयानन्दात्मनः स्वर्गादतिदूरमपभ्रष्टो भस्मीभावः प्रत्यक्षमुपलभ्यते, चित्रादिचोदना-



यज्ञायुधिवचो मिथ्या प्रत्यक्षेण विरोधतः ।
साधर्म्येण शिलावाक्यं वैधर्म्येणासभापितम् ॥ ९ ॥
शरीराद् यदि चान्यः स्यान्नासौ यज्ञायुधी भवेत् ।
न चास्य यजमानत्वं सद्भावोऽपि च दुर्लभः ॥ १० ॥

---

सु त्वनन्तरफलानुपलम्भमात्रं न तु विरुद्धोपलम्भः कश्चिदस्तीति स्यादपि कालान्तरे फलकल्पना, भस्मीभूतं तु शरीरं कालान्तरेऽपि स्वर्गं लोकं यास्यतीति न सम्भवतीति पूर्वस्माद् विशेषः ॥ ८ ॥

अपरमपि च 'एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम्—अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्त इति यथा' इति भाष्यम्, तद् व्याचष्टे—यज्ञेति वाक्यमन्तेन । यज्ञायुधवचो धर्मी, मृषेति साध्यो धर्मः, प्रत्यक्षविरोधात्, यत्प्रत्यक्षविरुद्धं तन्मिथ्या, यथा ग्रावाणः प्लवन्त इति शिला वाक्यं साधर्म्येण यथेति दर्शयितव्यमिति । वैधर्म्यदृष्टान्तमाह — वैधर्म्येणेति । यदमिथ्या न तत्प्रत्यक्षविरुद्धं यथासभापितमिति । पूर्वं तु मर्दनसुखयोर्वैधर्म्ये दृष्टान्ततयोपन्यासाच्छिलावाक्यमपि वैधर्म्येण भाष्यकृतोक्तमिति भ्रान्तिमपनेतुं साधर्म्यवैधर्म्यविवेको वार्तिककृता दर्शितः ॥ ९ ॥

ननु प्रत्यक्षविरोधादिति हेतुरसिद्ध एव, अस्ति हि परलोकफलभोक्ता चेतनः कर्मणां कर्ता, स स्वर्गं लोकं यास्यतीति । तमेवाभिप्रेत्य स्वर्गं लोकं यास्यतीत्युक्तम् । अतः को विरोधोऽत आह — शरीरादिति । यदि हि शरीरादन्यश्चेतनो भवेत्, भवेदपि, न तस्य यज्ञायुधैरस्ति कश्चित् सम्बन्धप्रकारः, शरीरस्यैव तु जुहूकपालादियज्ञायुधैस्सम्बन्धः, यद्यज्ञायुधी यजमान इति तदभिप्रायेण मत्वर्थसंयोगो घटते । अपि च 'स एष' इत्यपरोक्षप्रतिनिर्देशः, सोऽपि शरीरस्यैव प्रत्यक्षत्वादुपपन्नो नात्मनः । तदेतदपि भाष्यकारेणोक्तं हि—'शरीरकं व्यपदिशति' इति । किञ्च यजमानशब्दो ह्यात्मन्यसमञ्जसः, यागस्य हि कर्ता यजमान इत्युच्यते, न च यथाचोदितविततपूर्वापरीभूतानेककर्मक्षणात्मकक्रतुक्रियाकर्तृत्वमात्मनस्सम्भवति, विभोः पूर्वापरदेशविभागसंयोगफलकर्मणामसमवायात् । तदेतदाह — न

---

१. 'शरीरान्याभिधायित्वात्' M. U. S.

यदि स्याद् विधिशब्दोऽत्र नैवादर्शनतो भवेत् ।
विशेषोऽस्येति भेदेन नोपात्तं स्यादिदं ततः ॥ ११ ॥

विधिशब्दे भविष्यत्त्वं फलस्य परिकल्प्य हि ।
विरोधपरिहारः स्याद् वर्तमानेऽपि नास्त्यसौ ॥ १२ ॥

फलं च न भवेदेवं भस्मीभावाद् विधावपि ।
तत्सामर्थ्येन यान्यापि कल्पना तां निषेधति ॥ १३ ॥

---

चेति । अभ्युपगम्य चात्मनस्सद्भावमिदमस्माभिरुक्तम्, परमार्थेन तु देहेन्द्रियव्यतिरिक्तात्मसद्भावोऽपि प्रमाणाभावाद् दुर्लभ इत्याह — सद्भाव इति । प्रपञ्चयिष्यते चैतदात्मवाद इतीह न प्रतन्यत इति ॥ १० ॥

अपरं च— 'न चैष यातीति विधिशब्दः' इति भाष्यम् । तस्याभिप्रायमाह — यदीति । अस्यार्थः— यदि ह्यत्र यज्ञायुधिवाक्ये विधिशब्दो भवेत्, तदा चित्रादीनामनन्तरफलादर्शनाद् भेदेन विरोधोपन्यासार्थं यज्ञायुधिवाक्योपादानं नोपपद्यते । अतः स्वकृतभेदोपादानसमर्थनार्थं विधिशब्दनिराकरणमिति ॥ ११ ॥

विधिशब्दे को विशेषः, अत आह— विधीति । विधिशब्दे हि कालविशेषानुपादानाद् विधिसामर्थ्यादेव कालान्तरभावितां फलस्य परिकल्प्य स्यादपि चित्रादिचोदनास्वित्राभावविरोधपरिहारः । इह तु यातीति वर्तमानापदेशान्न प्रत्यक्षविरोधश्शक्यते परिहर्तुमित्यदर्शनाद् विशेष इति ॥ १२ ॥

चित्रादिवाक्याभिप्रायेण चेदमस्माभिरुक्तम्— विधिशब्दे भविष्यत्त्वं फलस्य परिकल्प्य विरोधश्शक्यते परिहर्तुमिति । इह तु प्रत्यक्षेण भस्मीभावोपलम्भान्न कालान्तरफलभावितया स्वर्गगमनं फलमिति शक्यते कल्पयितुम् । न हि विधिसहस्रेणाप्याशङ्कनीयोऽर्थः शक्यः प्रत्याययितुम् । तदेतदाह — फलं चेति । किं तर्हि विधिशब्दतानिराकरणस्य फलमत आह — तत्सामर्थ्येनेति । चेतनप्रवर्तनात्मको हि विधिरन्तरेण परलोकफलोपभोक्तार-

---

१. 'तत्सामान्ये' M. U. S. २. 'चान्या' Ch. S.



प्रायश्चैवंप्रकारत्वमर्थवादेषु दृश्यते ।
मन्त्रेषु चेति ते सर्वे पक्षीकार्याः प्रयत्नतः ॥ १४ ॥

एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।
वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्विव ॥ १५ ॥

इति चित्राक्षेपवादः ।

---

मनुपपद्यमानः कल्पयेदपि कायकरणसङ्घातातिरिक्तमात्मानम्, तस्य च स्वर्गलोकगमनमुपचर्येतापि शरीरे, तस्य वा प्रत्यक्षत्वमात्मनि भाक्तमित्येवमादिकल्पनानिषेधार्थं विधिशब्दनिराकरणमिति ॥ १३ ॥

भूयांश्चायं प्रमाणान्तरविरुद्धो मन्त्रार्थवादात्मको वेदभागः । यथा 'अदितिर्द्यौरदितिरन्तरीक्षं' 'यजमान एककपालः' इत्येवमादिः । स च सर्व एवात्र प्रयत्नतो मुख्यतया मिथ्यात्वेन ऐहिकाक्षेपे पक्षीकार्यः, तन्मिथ्यात्वेन चानुषङ्गिकं परेषां मिथ्यात्वं भविष्यतीत्यभिप्रायेणाह — प्राय इति ॥ १४ ॥

'तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वास' इति भाष्यम्, तस्याभिप्रायमाह — एवं सतीति । यदा हि चित्रादिवाक्यादिष्वप्रामाण्यं समर्थितं भवति, तदा वेदवाक्यैकदेशतयाग्निहोत्रादिवाक्येष्वपि मृषार्थता शक्यतेऽनुमातुम्, अतः कृत्स्नस्यैव वेदस्याप्रामाण्यान्न चोदनालक्षणार्थो धर्म इत्याक्षेपः ॥

इत्युपाध्यायसुचरितमिश्रकृतौ काशिकाटीकायां
चित्राक्षेपवादः समाप्तः ।

---

१. 'अपि' Ch. S.

## अथ सम्बन्धाक्षेपवादः ।

स्वपक्षसाधनं तावदमृषा वैदिकं वचः ।
स्वार्थे वक्त्रनपेक्षत्वात् पदार्थे पदबुद्धिवत्[1] ॥ १ ॥

---

अत्रानन्तरम् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम्" इति भाष्यकारेण सम्बन्धनित्यताद्वारेणाक्षेपपरिहारोऽवतारितः, सोऽयुक्तः, परोक्ताक्षेपहेत्वनन्तरं हि तस्यैव विरुद्धासिध्यादिदोषोद्भावनमुचितम् । यत्तु तमदूषयित्वैवान्यदुच्यते तदसङ्गतमेवात आह— स्वपक्ष इति । अयमभिप्रायः— यावद्धि सम्बन्धौत्पत्तिकत्वेनानपेक्षालक्षणं चोदनायाः स्वतःप्रामाण्यं न प्रतिपाद्यते तावद् दूषितेऽपि साधने न 'चोदनालक्षणो धर्म' इति प्रतिज्ञा सिध्यति । भूयांश्चानेन क्रमेणार्थो वक्तुमभिप्रेतः शब्दार्थसम्बन्धनिरूपणादिः । अन्यथा क्रियमाणं तदाकाशपतितमिवापद्येत । तच्चैतत् शब्दस्वरूपनिरूपणावसरे वक्ष्यते । न चेदमाक्षेपेण न सङ्गच्छते, द्वेधापि प्रत्यवस्थानदर्शनात् । यथोक्तम् —

'द्वेधापि प्रत्यवस्थानं परहेत्ववबाधनात् ।
आत्मीयसाधनोक्त्या वा तत्रात्मीयमिहोच्यते' इति ।

न चात्र परसाधनदूषणं न करिष्यते 'तत्र हेतोरासिद्धत्वम्' इति चित्रापरिहारे वक्ष्यते । अनेन तु क्रमेण तत् कर्तव्यमिति तावदित्युक्तमिति । तच्च स्वपक्षसाधनं तार्किकाणां चित्तमनुरञ्जयितुं प्रयोगद्वारेणाह—अमृषेति । वैदिकवचो धर्मी, स्वार्थे सत्यमिति साध्यो धर्मः, स्वार्थे वक्त्रनपेक्षत्वात्, यत् स्वार्थे वक्तारं नापेक्षते तत् सत्यम्, यथा पदात् पदार्थगता बुद्धिः । पदं हि स्वभावादेव स्वार्थेन सम्बद्धं तत्प्रतिपादनाय वक्तारं नापेक्षत इति सम्बन्धपरिहारे वक्ष्यते । स्वार्थ इति तन्त्रेणोभयविशेषणतया योजनीयम् । यदि ह्यमृषा वैदिकं वचनमित्येतावदुच्यते पूर्वपक्षार्थसम्यक्त्वापाताद्- निष्टार्थताप्रसाधनप्रसङ्गः । न हि स्वर्गकामो यागं कुर्यादित्याद्यर्थे स्वर्गकामो यजेतेति वाक्यं सम्यगिष्यते, पक्षाद्यसिद्धान्ताविरोधात् । यागेन स्वर्गं कुर्यादिति हि तत्र स्थास्यति । वक्त्रनपेक्षत्वादिति चाविशिष्टो हेतुरूपात्तोऽसिद्ध एव स्यात् । अस्ति हि वैदिकवाक्यानामपि स्वरूपाभि-

[1] 'पदार्थे' Ch. S.



तत्कृतः प्रत्ययस्सम्यङ्नित्यवाक्योद्भवत्वतः ।
वाक्यबुद्धिवदेवात्र पूर्वोक्ताश्चापि हेतवः ॥ २ ॥
नित्यान् शब्दार्थसम्बन्धानाश्रित्योक्तेन हेतुना ।
स्वतः प्रामाण्यसिद्ध्यर्थमप्रामाण्ये निराकृते ॥ ३ ॥
असम्बन्धोद्भवत्वेन परो मिथ्यात्वमब्रवीत् ।
सम्बन्धोऽस्ति च नित्यश्चेत्युक्तमौत्पत्तिकादिना ॥

---

व्यक्तये वक्त्रपेक्षा, स्वार्थे तु प्रत्याययितव्ये न वक्तारमपेक्षन्ते, अपौरुषेयत्वात् । शब्दार्थसम्बन्धनित्यत्वाच्च । पौरुषेयं प्रमाणान्तरप्रमितगोचरमाप्तवचनमपि वक्तुः प्रमाणमपेक्षते । यथोक्तम्, 'आप्तोक्तिषु नरापेक्षे'ति ॥ १ ॥

प्रयोगान्तरमाह— तत्कृत इत्येवान्तेन । वैदिकवाक्यकृतः प्रत्ययस्सम्यगिति साध्यम्, नित्यवाक्योद्भवत्वात्, यथा तद्वाक्यस्वरूपविषया बुद्धिः । सापि हि वाक्यादुद्भवति, निर्विषयबुद्ध्यनुत्पत्तेः । वेदवाक्यनित्यता च वेदाधिकरणे स्थापयिष्यत इति । अत्रैव साध्ये पूर्वोक्ताः—'नान्यत्वात्' इति भाष्यव्याख्यानावसर उक्ताः—दोषवर्जितैः कारणैः जन्यमानत्वात्, अनाप्तप्रणीतोक्तिजन्यत्वात्, देशादिभेदेऽपि बाधवर्जनात् इति हेतवो दर्शयितव्या इत्याह — अत्रेति ॥ २ ॥

अत्र भाष्यम्—'स्यादेतत्, नैव शब्दस्यार्थेन सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वा' इति । तस्याभिप्रायमाह — नित्यानित्यब्रवीदन्तेन । अस्यार्थः — शब्दार्थसम्बन्धानां नित्यत्वमाश्रित्यानपेक्षत्वादिति सूत्रकारेण यो हेतुः स्वतः प्रामाण्यसिध्यर्थमुक्तः, तेन चोदनानामप्रामाण्ये निराकृतेऽधुना सम्बन्धोद्भवत्वाभावेन परो बौद्धादिर्मिथ्यात्वमुक्तवान् । एवं च तदा वार्तिककारेण वृत्तिकारमतेनात्रैव स्वतः प्रामाण्यं व्युत्पाद्यमिति दर्शितम् । तथा च 'सूत्रकारेण चोच्यत' इति पुनरुक्तिपरिहारे परतः प्रामाण्योक्तिरेवाक्षेपहेतुभिः पूर्वपक्षोऽभिहितः । इहापि च भाष्यकारेण 'ब्रूत' इत्युच्यते— अवबोधयति बुध्यमानस्य निमित्तं भवति, इत्यादि चोदनासूत्रोक्तमेव स्वतः प्रामाण्यकारणमुक्तमिति ॥ ३½ ॥

मिथ्यात्वस्य निरासार्थं तत्परैर्नेष्यते द्वयम् ।
नैव वास्त्यत्र सम्बन्धः कृतको वेति वक्ष्यते ॥ ५ ॥

असम्भवेन शेषाणां संश्लेषः परिशिष्यते ।
तस्मिन्नेव च सम्बन्धे प्रतीतिर्लौकिकी ध्रुवम्[2] ॥ ६ ॥

एतदेव विवृणोति — सम्बन्ध इति वक्ष्यतेऽन्तेन । चोदनामिथ्यार्थनिरासार्थं हि सम्बन्धसद्भावो नित्यता च हेतुरुक्तः । तच्च द्वयमपि परैर्नेष्यते । तत्र सम्बन्धाभावस्तावदनेनैव भाष्येणोक्तः । कृतकत्वं तु 'यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि' इत्यनेन वक्ष्यते । तदत्र सम्बन्धाभावेनानपेक्षत्वादिति हेतोरसिद्धिरुक्ता । न चासति सम्बन्धे परोक्षार्थप्रतीतिरुत्पद्यत इति दर्शितम् । प्रतिबन्धबले ह्यर्थान्तरदर्शिनोऽप्यर्थान्तरे ज्ञानमुत्पद्यते । अनादृतप्रतिबन्धस्तु यत्किञ्चिद् विद्वान् स सर्वं जानीयादित्यतिप्रसज्यत इति ॥ ४, ५ ॥

अत्र भाष्यकारेण कार्यकारणभावादयस्सम्बन्धाश्शब्दस्यानुपपन्ना इत्युक्त्वा संश्लेषसम्बन्धभाव एव दर्शितः, तदेतद्वार्तिककारो दर्शयति — असम्भवेनेति । निमित्तनैमित्तिकाश्रयाश्रयिभावादयस्सम्बन्धाश्शब्दार्थयोरत्यन्तासम्भाविता एव, कार्यकारणभावस्तु बौद्धगन्धिवैयाकरणैरभ्युपगत एव । तेऽप्याहुः —

'अर्थाश्शब्दाश्च दृश्यन्ते प्रत्यक्षा यद्यपि स्फुटम् ।
अभिधानाभिधेयौ तु ज्ञानाकारौ तथापि नः' ॥

इति । एवं हि मन्यन्ते — न तावद् वर्णाश्शब्दः, प्रत्येकमवाचकत्वात् । अयुगपद्वर्तिनां चावयविसमुदायारम्भानुपपत्तेः । अत एव गोशब्दत्वादिजात्यसम्भवात् भूतादिविशेषाणां च प्रतिप्रयोगमन्यत्वेनावाचकत्वाद् वर्णबुद्धिस्मृतिसंस्काराणां चाक्षरवत् प्रत्याख्यानात् पूर्ववर्णजनितसंस्कारसहितान्त्यवर्णस्यापि वर्णत्वेनापूर्ववर्णवदवाचकत्वात् पूर्वपूर्वनिखिलवर्णपदोपसंहारक्रमेण चरमस्य कस्यचित् स्फोटात्मनोऽनवग्रहाद् युगपदवस्थितानेकवर्णाकारज्ञानात्मैव शब्दः । अर्थोऽपि जातिव्यक्त्यवयवावयविगुणगुणिव्यतिरेकाव्यतिरेकादिविकल्पदूरीकृतनिरूपणो न बाह्यस्सम्भवतीति ज्ञानात्मकशब्दवेदनानन्तरोत्पद्यमानबाह्यजात्यादिनिर्भासप्रत्ययमात्रात्मैव ।

१. 'वसिष्ठ' Ch. S.   २. 'ध्रुवा' Ch. S. and M. U. S.



तन्निषेधमतः प्राह न शब्दोऽर्थेन सङ्गतः ।
तद्देशानन्तरादृष्टेर्विन्ध्यो हिमवता यथा ॥ ७ ॥

एवमर्थो द्वयं वापि साधनीयमसङ्गतम् ।
क्षुरेत्यादि च सिद्ध्यर्थं हेतोरुक्तमथापरः ॥ ८ ॥

शक्तिरूपं गृहीत्वाह संश्लेषो यदि वार्यते ।
सम्ब(न्धा ? न्धः)सिद्धसाध्यत्वमथ सम्बन्धमात्रकम् ॥

स चायमेवम्भूतोऽर्थश्शब्देन जन्यत एवेति कार्यकारणभावमेव शब्दार्थयोस्सम्बन्धमातिष्ठन्ते । तच्चेदमतिदूरमपभ्रष्टम्, एवं च सत्यविदितस्वरूपशक्तीनामप्यर्थसंविदुपजायेत । दृष्टा हि खलु मृत्सलिलप्रच्छन्ना अपि व्रीह्योऽङ्कुरादिकार्यमारभमाणा अविदितस्वरूपशक्तयोऽपीति सूक्तम् — असम्भवेन शेषाणामिति । कथं तु संश्लेषः परिशिष्यत इति, प्रतीतेरभ्युपगमाच्च । गौरयमिति हि सामानाधिकरण्येन शब्दोपश्लिष्टमर्थमवयन्तो लौकिका दृश्यन्ते । अभ्युपगतश्च कैश्चिच्छब्दार्थयोस्संश्लेष एव सम्बन्धः । प्रपञ्चितश्चासावध्यासवाद इति । लौकिकाश्च प्रायेण संश्लेषमेव संबन्धं मन्यन्ते इति स एव सम्बन्धः प्रसक्तो निराकार्य इत्याह — तस्मिन्निति प्राहान्तेन । निषेधमेव प्रयोगेण दर्शयति — न शब्द इति । संश्लेषो हि यस्य येन भवति स तद्देश एव दृश्यते रज्जुरिव वटे, तदनन्तरदेशे वा प्रदेशिनीव मध्यमायाः । न च शब्दार्थयोरन्यतरदेशे वान्यतरो दृश्यते । अतो हिमवद्विन्ध्ययोरिव नानयोस्सम्बन्ध इति ॥ ६, ७ ॥

अर्थो वा पक्षीकार्य इत्याह — एवमिति । द्वयं वा परस्परमसम्बद्धमितरेतरदेशे तदनन्तरदेशे वाऽदृष्टेः साध्यमित्याह — द्वयमिति । अत्र भाष्यकारेण 'स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्', इत्युक्तम् । तस्याभिप्रायमाह — क्षुरेत्युक्तमन्तेन । अस्यार्थः — अत्र भाष्यकारेण शब्दार्थयोस्सम्बन्धसिद्ध्यर्थं तद्देशानन्तरादृष्टेरिति हेतुरन्तर्णीतः, तं च गौरयमिति सामानाधिकरण्यप्रतीतिप्रसाद् यो नामासिद्धं मन्यते, स एवं प्रतिबोध्यते — यदि शब्दार्थयोरुपश्लेष-

पितापुत्रादिसम्बन्धैरनैकान्तः प्रसज्यते ।
एकभूम्यादिसम्बन्धाद् दृष्टान्ते साध्यहीनता ॥ १० ॥
वाच्यवाचकसम्बन्धनिषेधे लोकबाधनम् ।
विरोधश्च स्ववाक्येन न हि सम्बन्धवर्जितैः ॥ ११ ॥

---

लक्षणस्सम्बन्धो भवेत्, अर्थोऽपि शब्ददेश एव स्यात्, मुखं च तस्य देश इति क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्, न च ते स्तः, तस्मान्मोदकाद्यर्थक्रियानुपलम्भाच्छब्ददेशे तद्देशान्तरादृष्टेरिति सिद्धो हेतुः । सामानाधिकरण्यबुद्धिस्तु शब्दार्थयोर्नास्त्येव । न हि नीलिम्नेवानुरक्तमुत्पलं शब्दानुरक्तमर्थमुपलभामहे । गादिसास्नादिमद्रूपा हि तयोर्बुद्धिरुदेति । अत्र सिद्धान्तभाष्यं 'योऽत्र व्यपदेश्यस्सम्बन्धः तदेत(तमेक)न्न व्यपदिशति भवान्' इत्यादि । तस्याभिप्रायमाह — अथेति हीनतान्तेन । अत्रायमभिप्रायः — प्रत्याय्यप्रत्यायकशक्तिरूपो हि नश्शब्दार्थयोस्सम्बन्धोऽभिप्रेतः, तद् यदि संश्लेषलक्षणसम्बन्धाभावस्साध्यते, तदा सिद्धसाध्यतादोषः । सम्बन्धाभावमात्रे तु यौनादिसम्बन्धैरनैकान्तिकत्वम् । हिमवद्विन्ध्ययोरपि चैकभूम्यादिसम्बन्धात् साध्यहीनो दृष्टान्त इति ॥ ८—१० ॥

यदि तु वाच्यवाचकसम्बन्धमेवाभिप्रेत्य न शब्दोऽर्थेन सङ्गत इति साध्यते ततो लौकिकविरोध इत्याह — वाच्येति । दूषणान्तरमाह — विरोध इति । अत्र कारणमाह — न हीति परान्तेन । अयमभिप्रायः — चतुर्विधो हि पुरुषः, प्रतिपन्नोऽप्रतिपन्नस्सन्दिग्धो विपर्यस्तश्चेति । तत्र प्रतिपन्नः प्रतिपादयिता, इतरे सापेक्षाः प्रतिपाद्याः, तत्प्रतिपादनार्था च प्रतिज्ञा, तत्र एव तेषामन्यतमः परः प्रतिपादयितुमभिप्रेतो भवति स एव वाच्यवाचकसम्बन्धवर्जितैः प्रतिज्ञार्थगोचरैः पदैः प्रतिपादयितुमशक्यः, अतः प्रतिज्ञां प्रयुञ्जानैराश्रितश्शब्दार्थयोर्वाच्यवाचकलक्षणसम्बन्ध इति तन्निराकरणे स्ववाग्विरोध इति । स चायमभिधेया स्ववाग्विरोधः । पञ्चधा हि तद्विरोधः । उच्चारणाभिधाधर्मधर्म्युभयोक्तिभिरिति ॥ ११$\frac{1}{2}$ ॥



प्रतिज्ञार्थं पदैः शक्यः प्रतिपादयितुं परः ।
अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् ॥ १२ ॥
शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितः[1] ।
प्रतिपत्तावुपादानात् साहित्ये च विवक्षिते ॥ १३ ॥

---

वाच्यवाचकसम्बन्धस्वरूपमिदानीमभिद्योतयति — अभिधानेति । अस्यार्थः — एकस्यामभिधानक्रियायां शब्दः करणं कर्ता वा, विवक्षातः कारकप्रवृत्तेः । अर्थस्तु कर्मैव । अतो (यद् ? अ)नयोः कर्मकरणत्वं (कर्म) कर्तृत्वं वा । निरूपितः — सम्बन्ध इति वक्ष्यमाणेन सम्बन्ध इति । यद्वा — एकस्यां गवाद्यर्थप्रतिपत्तौ साध्यमानायामेकेन वक्त्रोपादीयमानावरुणैकहायनीवद्विवक्षितसाहित्यौ शब्दार्थौ यन्नियम्येते सोऽनयोः सम्बन्ध इत्याह — प्रतिपत्ताविति । उपादानादित्युपादीयमानतया विशेषणविवक्षां दर्शयति । उपादेयस्य हि विशेषणं विवक्षितं भवति पशोरिवैकत्वं — पशुना यजेतेति । उद्देश्यविशेषणं त्वविवक्षितं भवति, यथा ग्रहविशेषणमेकत्वम्, उद्देश्या हि ग्रहाः, तेषु सम्मार्जनविधानात् । इह चार्थप्रतिपत्तावेकस्यामुपादेयौ शब्दार्थौ, पशुरिव यागे । अतो विवक्षितमनयोः साहित्यं विशेषणमित्यरुणैकहायन्योरिवानयोर्नियमः, सम्बन्ध इति । (न त्वे ? न्वे)वमरुणैकहायन्योः श्रूयमाणयोः साहित्यविवक्षा युक्ता । समुदाये हि तत्र वाक्यं समाप्यते । (शब्दार्थौ तु) नैव प्रतीतिक्रिया(यां विशेष)णतया श्रुतौ, कथमनयोः साहित्यविवक्षा । न श्रूयमाणता विशेषणविवक्षाहेतुः । अपि तु अर्थसंव्यवहारोऽपि हि । पाकादौ यदौदनादिस्थाल्यादि .... (क्रिया)व्यवहारदर्शनात् अनभिहितमप्यर्थं जानाति तदा स्थाल्यादीनां विवक्षितं साहित्यं मन्यते, तथा मन्वानः स्वयमपि पक्तुकामस्तत्सर्वमाहरति । एवमिहापि बालः प्रयोज्यवृद्धस्य विशिष्टार्थव्यवहारदर्शनेन तद्विषयां बुद्धिमनुमाय शब्दानन्तरभावितया शब्दकारणतां तावदवधारयति । वक्तुश्चास्यां प्रयोज्यवृद्धप्रतिपत्तौ दर्शनपारार्थ्यात् प्रधानभूताया(मुपा)दीयमानयोः शब्दार्थयोः साहित्यं विवक्षितमिति । एवं च विदित्वा स्वयमपि परार्थप्रयोगे सहितौ शब्दार्थौ हृदयमावेशितावुपादाय शब्दं चोच्चार्य परप्रतिपत्तिं भावयतीति सूक्तं साहित्यविवक्षा वर्णसाहित्यविवक्षावदिति ॥ १२—१३$\frac{1}{2}$ ॥

---

१. 'निरूपितम्' । Ch. S. and M. U.

नियम्येते यदेकस्यां सम्बन्धः सोऽर्थशब्दयोः ।
तत्र यद्यप्यसम्बन्धः कारकाणां परस्परम् ॥ १४ ॥

तथापि यत्क्रिया तस्यामुपकार्योपकारिता ।
तत्क्रियासङ्गतेः पश्चात् सम्बन्धः कीर्त्यते तयोः ॥

---

नन्वेवं वदता शब्दार्थयोः क्रियासम्बन्ध एव दर्शितः, न परस्परसम्बन्धः । तथा हि—यत्तावदुक्तम् 'अभिधानक्रियायां हि' इति, अनेनाभिधानक्रियासम्बन्ध एव कर्मकरणादिरूपेणोभयोरुपवर्णितः, न परस्परसम्बन्धः । प्रतिपत्तावुपादानादित्यपि प्रतिपाद्यप्रतिपादकतया प्रतिपत्तिक्रियासम्बन्धमात्र एव दर्शितः, न परस्परम्, गुणप्रधानभावमन्तरेण सम्बन्धायोगात् । वक्ष्यति हि—'गुणानां च परार्थत्वादसम्बन्धः समत्वात्' इति । स्यादेतत् । क्रियाकारकसम्बन्धपूर्वकत्वात् सर्वसम्बन्धानां क्रियाकारकसम्बन्ध एव दर्शित इति । अस्तु तावत्, तदुत्तरकालभावी तु कोऽनयोः सम्बन्ध इति वाच्यमेव । तदेतत् सर्वमनुभाष्य परिहरति—तत्रेति त्रयाणेन्मने । अस्यार्थः—यद्यपि कारकाणां प्रधानार्थत्वान्न परस्परसम्बन्धः, तथापि प्रतिपत्त्यभिधानयोर्या काचित् क्रिया गृह्यते, तस्यां च क्रियाकारकसम्बन्धोत्तरकालभावी परस्परोपकार्योपकारकत्वलक्षणः शब्दार्थयोरस्ति सम्बन्धः ॥

तत्पुनरिदं पूर्वापरविरुद्धं प्रदेशान्तरविरुद्धं च । तथाहि—अत्र तावदेकस्यां क्रियायामुपकार्योपकारकत्वं शब्दार्थयोः सम्बन्ध इत्युक्तम्, 'प्रतिपत्तावुपादानात्' इति क्रियानुमानाङ्गत्वमेव परस्परनियमात्मको दर्शितः सम्बन्धः । 'अभिधानक्रियायां हि' इति च कर्मत्वकरणत्वे सम्बन्ध इत्युक्तम् । प्रदेशान्तरे शक्तिरेव सम्बन्ध इति वक्ष्यति । क्वचिच्च शब्दशक्तिनियममेव सम्बन्धमाह—

'वाच्यवाचकशक्त्योश्च नियमः फललक्षणः ।'

इति ब्रुवाणः । अन्यत्राप्युक्तम्—

---

१. 'स क्रिया' Ch. S. and M. U. S.



'एकाभिधानिमित्तत्वं कर्मकर्तृत्वयोश्च यत् ।
यो वा करणकर्मत्वनियमोऽभिधयैकया ॥
स नोऽर्थशब्दसम्बन्धः'

इति । अतो विवेचनीयमिदम्—कोऽत्र सम्बन्धः शब्दार्थयोर्वार्त्तिककारस्याभिमत इति ।

अत्रोच्यते—यथैकेन क्रयकर्मणा परिगृहीतयोर्द्रव्यगुणयोरितरेतराकांक्षापरिपूरणेन परस्परोपकार्योपकारकत्वलक्षणः सम्बन्धः न ह्यनाश्रितः क्रयक्रियामभिनिर्वर्तयति । न द्रव्यं गुणविशेषानवच्छिन्नमुत्सहते क्रयक्रियां निर्वर्तयितुम् । न च गुणेन स्वमहिम्ना आश्रयभूतद्रव्यमात्रमुपादीयमानमपि क्रये गृह्यते, (स्वकीयगो) द्रव्यावरोधात् । द्रव्ये(गुणमात्रा)वच्छेदात् तद् गुणमात्रमुपादीयमानमपि क्रयक्रिया न प्रतीच्छति स्वकीयारुणिमगुणावरोधात् । सोऽयमर्थो नियमः सम्पद्यते । तदेवमिहाप्येकार्थप्रतिपत्त्यभिधानक्रियासिद्ध्यर्थमुपादीयमानयोर्विवक्षितसाहित्ययोः शब्दार्थयोः क्रियाकारकसम्बन्धोत्तरकालभावी योऽयमुपकार्योपकारकभावः, स एव सम्बन्धः ।

कः पुनरनयोः परस्परोपकारः । श्रूयताम्—अर्थो हि न प्रतिपादकमन्तरेण प्रतिपाद्यो भवति, शब्दो न प्रतिपाद्यमन्तरेण प्रतिपादकः । अतः प्रतिपाद्यप्रतिपादकतयावतिष्ठमानावन्योन्यस्योपकार्योपकारकौ भवतः । तच्चेदं रूपमनयोर्नियतमित्यत्यन्तसन्निकर्षमात्रेण नियमे सम्बन्धाभिधानम्, न तु नियम एव सम्बन्धः । शक्तिसम्बन्धवादोऽपि चात एव । वाच्यवाचकशक्त्योरेव हि सतोरुपकार्योपकारकभावो भवति । न तु शक्तिरेव सम्बन्धः, तदत्र प्रत्यासत्तेरभेदोपचारेण शक्तिः सम्बन्धः, नियमः सम्बन्धः, कर्तृत्वं करणत्वं वा सम्बन्ध इत्येवमादयः समुल्लापाः । वस्तुतस्तूपकार्योपकारकत्वमेव सम्बन्धः ।

कथं पुनस्तद्रूपमनयोर्नियतमित्युच्यते । न ह्यनुच्चरिते शब्दे परस्परोपकार्योपकारकभावः शब्दार्थयोरस्ति । न च तदानीं तौ न स्तः, नित्यत्वात् । तस्मादसदेतत् । तत्र । शक्त्यात्मना विद्यमानत्वात्

न चाप्यत्राविनाभाव उपयोगीति साधितम् ।
संज्ञेति गमकत्वं चेन्न तदङ्गमियं भवेत् ॥ १६ ॥
गमयन्ती[1] श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः ।
न चैषा गमयत्यर्थं सम्बन्धेऽनवधारिते ॥ १७ ॥

---

अनुच्चरितेऽपि हि शब्देऽस्ति प्रतिपादकशक्तिः, अर्थे च प्रतिपाद्यशक्तिः अत एव सम्बन्धो नित्य इत्युच्यते ।

नन्वेवमपि करहस्तादिभिरनेकैः शब्दैरेकस्मिन्नर्थे प्रतिपाद्ये अनेकार्थवचने चैकस्मिन् गवादिशब्दे कथमव्यभिचारः शक्यतेऽवगन्तुम् । अतः प्रकरणादीनामपि पदार्थावधारणापेक्षत्वाद् वृद्धव्यवहारे हि बालेन केवलपदाप्रयोगादावापोद्धारभेदेनैतदवधारितम् — यदा यदर्थविवक्षया शब्दः प्रयुज्यते स तस्यार्थ इति । विवक्षा चार्थप्रकरणादिवशोन्नेया । गामानय दोग्धुमित्युक्ते अर्थादेतदवगम्यते सास्नादिमत्यस्य विवक्षेति । योत्स्यामीत्युक्ते अर्थादि(सु ?)षौ प्रतीतिरुदेति । तदेवमर्थप्रकरणादिभेदाभिन्नमन्यथाऽन्यथा च शक्त्योपहितमन्यदन्यच्च पदमन्यस्यान्यस्य वाचकमिति न पदव्यभिचारः । अर्थोऽपि चोद्भूततत्पदाभिधानयोग्यावस्थाभेदभिन्नो हस्तादिरन्योऽन्यश्च करादिपदानां वाच्य इति न पदं व्यभिचरति । अपि चैकस्यां क्रियायामयं नियम इत्युक्तः । न चैकस्यां प्रतिपत्तावभिधाने वोपादीयमानयोः शब्दार्थयोरन्योन्यव्यभिचारोऽस्ति । तदिदमुक्तं हि 'नियम्येते यदेकस्याम्' इति ॥ १४, १५ ॥

नन्वेवमेकक्रियानिमित्तको नियमः शब्दार्थयोः सम्बन्ध इत्युच्यमानेऽनुमानाङ्गमविनाभाव एवाश्रितो भवेत्, अतस्तद्बलेन धूमादिवाग्निज्ञानं शब्दादर्थज्ञानमुपजायमानमनुमानं स्यादत आह— न चापीति । इदं च शाब्दे प्रसाधितमित्याह — साधितमिति । ननु यद्यविनाभावो नोपयुज्यते, कस्तर्ह्युपयुज्यते । उक्तं भाष्यकारेण — 'संज्ञासंज्ञिसम्बन्धः' इति । ननु चायमपि सम्बन्धोऽनुपयोग्येव । तदेतदाशङ्कते — संज्ञेति । तदङ्गं गमकत्वाङ्गमित्यर्थः ॥ १६ ॥

कथमनङ्गमत आह —गमयन्तीति । व्यवहारदर्शनेन गम-

---

1. 'गमयन्ती' Ch. S. and M. U. S.



तस्माद् गमकता पश्चाद् धूमादेरिव जायते ।
सानङ्गं तद्वदेव स्यान्नेयं धूमादिभिः समा ॥ १८ ॥
निरूपितेऽविनाभावे तत्र तत्कारिता ह्यसौ ।
गमकत्वेन पूर्वं च तत्र नोत्पद्यते मतिः ॥ १९ ॥
इह वाचकतायाः प्राङ् नाविनाभावितामतिः ।
यदैव चेह सम्बन्धं वृद्धेभ्यः प्रतिपद्यते ॥ २० ॥
तदैव गमकोऽस्यायमिति नान्यस्वरूपतः ।
कथयन्ति क्वचित्तावद् बोद्धव्योऽस्मादयं त्विति ॥ २१ ॥
क्वचिद् वाचक इत्येवं वाच्योऽयमिति चोच्यते ।
क्वचिदुच्चारिताच्छब्दाद् दृष्ट्वार्थविषयां क्रियाम् ॥ २२ ॥

---

यन्ती एषा संज्ञा कल्प्यत इति । किमतो यद्येवमत आह— न चैषेति । एतदुक्तं भवति । गमकत्वमेव संज्ञात्वं, न तत्सम्बन्धान्तरमन्तरेणेति ॥ १७ ॥

यतश्चैवमतो धूमादेरिव गमकत्वं सम्बन्धान्तरपूर्वकमेव पश्चादापतितमित्याह— तस्मादिति । तत्तुल्यत्वे दोषमाह —सानङ्गमिति । यथैवाविनाभाव एव धूमादौ प्रतीत्यङ्गं न तदुत्तरकालभावि गमकत्वम्, एवं तत्रापि स्यादिति । धूमादिवैषम्येणेदानीं परिहारमाह — नेयमिति ॥ १८ ॥

वैषम्यमेव दर्शयति — निरूपित इति । तत्र हि धूमादौ महानसादिदेशेऽन्यथाविनाभावनिरूपणोत्तरकालं तत्कृतैवासौ गमकतेति । अपि च धूमे प्रथमं गमकत्वं नावगम्यत इत्याह— गमकत्वेनेति ॥ १९ ॥

शब्दे तु विपरीतमित्याह —इहेति सार्धेन ॥ २०½ ॥

गमकत्वेनैव शब्दे प्रथमं व्युत्पत्तिरित्युक्तं तद् विवृणोति — कथयन्तीति त्रयेण । अयमर्थः — त्रेधा हि शब्दे व्युत्पत्तिः, वृद्धोपदेशात् तद्व्यवहारात् पदान्तरसमभिव्याहाराद्वा । सर्वत्र चात्र गमकतैवादाववगम्यते । तथाहि—वृद्धोपदेशे तावदयमस्य वाच्यः अयमस्य वाचक

केषाञ्चित् तत्र बोद्धृत्वमनुमानात् प्रतीयते ।
एतेनास्माद् यतश्शब्दादर्थोऽयमवधारितः ॥ २३ ॥

तेन नूनमिमौ लोके सिद्धौ वाचकशाब्दिकौ ।
इत्थं वाचकता सिद्धा सङ्कीर्णापि[1] ततः परम् ॥ २४ ॥

अन्वयव्यतिरेकाभ्यां निष्कृष्टैर्[2]ऽवधारिते ।
बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः ॥ २५ ॥
प्रत्ययान्[3] सहसा जातान् श्रौतलाक्षणिकात्मकान् ।
न लोकः कारणाभावान्निर्धारयितुमिच्छति ॥ २६ ॥

इति गम्यगमकभाव एवावगम्यते । यत्रापि क्वचिदुच्चरिताद् वाक्यात् प्रयोज्यवृद्धस्यार्थविषयां क्रियां दृष्ट्वा चेष्टानुमानेन गवाद्यर्थबोद्धृत्वमुपकल्प्यते तत्रापि यस्मादतश्शब्दादनेनायमर्थोऽवगतः, तस्मादयमस्यार्थ इति गमकतैव शब्दस्यादाववगम्यते । प्रसिद्धपदान्तरसमभिव्याहारेऽपि इह सहकारतरौ मधुरं पिको रौतीत्येवमादौ विदितसहकाराद्यर्थोऽविदितपिकाद्यर्थश्च योऽयं सहकारतरौ रौति तस्य पिकशब्दो गमक इति गमकत्वमेवावगच्छतीति सिद्धं सर्वत्र गमकत्वं न व्युत्पत्तिरिति ॥ २१—२३½ ॥

नन्वाकृतिः शब्दार्थ इति वस्सिद्धान्तः । न च तद्वाच्यत्वमन्वयव्यतिरेकावन्तरेण शक्यतेऽवगन्तुम् । अतस्तत्प्रधानैव शब्दप्रतीतिरापद्येत । अत आह— इत्थमिति । अयमर्थः — अन्वयव्यतिरेकयोरत्र निष्कृष्टार्थनियममात्रे व्यापारः,वाचकता तु नानाजात्यादिसङ्कीर्णार्थविषया सिद्धैवेति ॥ २४½ ॥

नन्वागोपालं शब्दार्थव्यवहारो दृश्यते । न च तेऽन्वयव्यतिरेकाभ्यामर्थनिष्कर्षं कुर्वन्ति । न च तान् प्रत्यवाचकाश्शब्दा इति युक्तं वक्तुम् । तुल्यवत् प्रतीतेः । पिकाद्यर्थनिर्णयस्य च म्लेच्छादिनिबन्धनस्य

१. 'र्णार्थां' M. U S. २. 'नियम्यते' Ch. S. and M. U. S. ३. 'प्रत्ययात् सहसा जातात् श्रौतलाक्षणिककमात्' Ch. S.



बलाबलादिसिद्ध्यर्थं वाक्यज्ञास्तु विविञ्चते ।
कक्ष्यान्तरितसामान्यविशेषेषु हि दुर्बलः ॥ २७ ॥
सामान्यवचनश्शब्दो जायते लक्षणाबलात् ।
तेनावश्यं विवेक्तव्यं शब्देन कियदुच्यते ॥ २८ ॥

वक्ष्यमाणत्वादत आह—बहुजातीति सार्धेन । अयमभिप्रायः—लौकिका हि हानोपादानादिव्यवहारमात्रार्थिनः, न च तेषां व्यवहारः शब्दोच्चारणक्षणोपजातसङ्कीर्णार्थबोधसाध्य एवेति, श्रौतलाक्षणिकादिविवेकं प्रत्यनादृता इति ॥ २५, २६ ॥

तेन तर्हि किमर्थं विविञ्चते अत आह— बलाबलादीति । शास्त्रस्था ह्यनिरूपितशक्तयो न शास्त्रार्थमनुष्ठातुं शक्नुवन्तीति तेषां हानोपादानोपयोगी शब्दशक्तिविवेक इति ते विविञ्चत इति ॥ २६½ ॥

एतदेव प्रपञ्चयति कक्ष्यान्तरितेति द्वयेन । अस्यार्थः—द्विविधं सामान्यं परमपरं च । परं सत्ताख्यम् , अपराणि द्रव्यत्वादीनि । तानि सामान्यान्यपि सन्ति । व्यावृत्तिबुद्धेरपि हेतुत्वात् विशेषसंज्ञामपि लभन्त इति, तानि सामान्यविशेषशब्देनापदिशन्ति, तत्र च सामान्यविशेषाः सामान्यशब्दस्य स्वार्थेन कक्ष्ययान्तरिता भवन्ति । यथा सच्छब्दस्य सत्तामाचक्षाणस्य तदन्तरिता द्रव्यत्वादयः सामान्यविशेषाः, तेषु चासौ लक्षणाबलेन प्रवर्तमानो दुर्बलो जायते । स्वार्थे तु श्रुत्या वर्तते इति स तत्र बलवान् । का पुनरियं लक्षणा नाम—अभिधेयाविनाभावेन प्रतीतिः । यथोक्तम् —

"अभिधेयाविनाभावप्रतीतिर्लक्षणेष्यते ।"

इति । कियता कियद्वाभिधेयाविनाभावेन लक्ष्यते कियत् स्वमहिम्ना शब्देनोच्यत इति शास्त्रस्थानामनुष्ठानविशेषार्थं विवेको युक्तः । सा चैवं लक्षणा प्रायेण नित्यसम्बन्धाद् भवतीति नित्यसम्बन्धादित्युक्तम् । सम्बन्धमात्रमेव तु लक्षणाया बीजम् । आह — कः पुनरनुष्ठाने श्रौतलाक्षणिकविवेकस्योपयोगः । श्रूयताम् — लोके तावद् ब्राह्म-

## CONTENTS

किंयद्वा नित्यसम्बन्धादभिधेयेन लक्ष्यते ।
तत्र प्रयोगबाहुल्यात् [1]तद्विशेषेष्वसत्स्वपि ॥ २९ ॥

णेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति ब्राह्मणसामान्यस्था ब्राह्मणश्रुतिर्लक्षणया तद्विशेषं कौण्डिन्यमवतरन्ती दुर्बला भवति इत्यव्यवहितविशेषस्थया कौण्डिन्यश्रुत्या बाध्यते । वेदेऽप्येवमेव । यजुस्सामान्यस्था 'उपांशु यजुषा' इति श्रुतिस्तद्विशेषस्थया 'उच्चैर्निगदेन' इति श्रुत्या बाध्यत इत्येवमादि दर्शयितव्यमिति । सामान्यशब्देनात्र विशेषान् विशिंषन्न सामान्यातिरिक्ताः केचन विशेषा विद्यन्त इति दर्शयति । अस्ति हि केषाञ्चिद् दर्शनं—नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । ते च व्यावृत्तिबुद्धेरेव हेतुत्वाद् विशेषा एवेति । परमाणुकारणकं हि काणादा द्व्यणुकादिक्रमेण जगतो निर्माणमातिष्ठन्ते । न चाणुत्वेन परस्परमनतिशयानैरणुभिरसङ्कीर्णाकारजगदुत्पादयितुं शक्यते । अतः सन्ति केचनाणुसमवायिनो विशेषा नाम ये तानितरेतरतो व्यावर्तयन्तीति सङ्गिरन्ते । ते च निर्धूतनिखिलकालुष्यैरपरोक्षमीक्षन्त एवेति । तान् प्रत्युच्यते । न तावदक्षाधीनेषु भावेष्ववान्तरसामान्यातिरिक्तान् विशेषानीक्षामहे । द्रव्यत्वेन हि पृथिव्यादयो गुणकर्मभ्यो विशिष्यन्ते (द्रव्य ? पृथिवी)त्वेन पृथिवी अबादिभ्यो द्रव्यान्तरेभ्यः, वृक्षत्वेन वृक्षाः पार्थिवान्तरेभ्यः, शिंशपात्वेन शिंशपा वृक्षान्तरेभ्य इत्येवमणून् यावदियं विशेषकथा वर्तयितव्या । किमत्र विशेषान्तरेण । अणुषु त्वेकजातीयेष्वपि कार्यविभागाद् रूपमेव विभक्तमनुमास्यामहे । नो खल्वविभक्ताकारं पूर्वं वस्तु विभक्ताकारकार्यघटनायोत्सहत इति । पृथक्त्वाख्यो वा गुणस्तेषामन्योन्यस्य विशेषकत्वाद् विशेषो भविष्यति । स एवानपेक्षितविशेषान्तरो न सिध्यतीति चेत् । विशेषा वा कथमनपेक्षितविशेषान्तराः सेत्स्यन्ति । अपेक्षणे वा तदानन्त्यम्, अतो मन्द एवायं विशेषान्तराभ्युपगमः । योगिनस्तु तान् पश्यन्तीति श्रद्दधाना बुध्यन्ते वयमश्रद्दधानाः स्मः, ये युक्तिं प्रार्थयामह इति सूक्तं सामान्यविशेषेष्विति ॥ २७—२८½ ॥

१. 'तत्प्रयोगे' Ch. S.



प्रयोगात् परसामान्ये सति चाप्यप्रयोगतः ।
सास्नाद्येकार्थसम्बन्धिगोत्वमात्रस्य वाचकः ॥ ३० ॥
गोशब्द इति विज्ञानमन्वयव्यतिरेकजम् ।
तस्माद् गमकतैवादावभिधायकता पुनः ॥ ३१ ॥
तन्निमित्तेति सम्बन्धः संज्ञासंज्ञित्वलक्षणः ।
सम्बन्धनियमोऽयं तु याऽविनाभाविवतोच्यते ॥ ३२ ॥
सम्बन्धग्रहणात्पूर्वं यस्मान्न गमयत्यतः ।
गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथा ॥ ३३ ॥

'अन्वयव्यतिरेकाभ्यां वाक्यज्ञास्तु विविञ्चते' इत्युक्तम् । तावन्वयव्यतिरेकौ दर्शयति — तत्रेति द्वयेन । तत्र सामान्ये गवादौ गोशब्दस्य बहुलं प्रयोगात् तद्विशेषेषु च शाबलेयादिषु असत्स्वपि बाहुलेयादिषु प्रयो(गा ? ग)दर्शनात् परसामान्ये च सत्तादौ सत्यपि भावान्तरेऽप्रयोगात् सास्नादिभिस्सहैकावयविरूपार्थसम्बन्धिगोत्वमात्रस्य गोशब्दो वाचक इत्यन्वयव्यतिरेकाभ्यां ज्ञानं जन्यते सास्नाद्येकार्थसम्बन्धीति चाविनाभाविना चिह्नेन गोत्वमुपलक्षयतीति । अतस्सिद्धं गम्यगमकभाव एव शब्दार्थयोस्सम्बन्धः प्रथममवगम्यते न पुनरविनाभाव इति ॥ २९—३०½ ॥

उपसंहरति — तस्मादिति । ननु — संज्ञासंज्ञिसम्बन्धो भाष्यकारेणोक्तः, न च गमकं संज्ञेति लौकिका मन्यन्ते, न ह्यग्नेर्धूमः संज्ञेत्युच्यते, अत आह — अभिधायकतेति । अयमभिप्रायः — अस्यार्थस्यायं गमक इति ज्ञाते नाव्याप्रियमाणस्यावगतौ कारणत्वमुपपद्यत इति तद्व्यापारोऽवसीयते, शब्दव्यापारश्चाभिधेत्युच्यते । अतोऽत्राभिधानक्रियासम्बन्धाद् गमकत्वस्यैव विशेषोऽभिधायकता शब्दे ज्ञायते । अभिधायकतैव संज्ञात्वमित्युपपन्नस्संज्ञासंज्ञिसम्बन्ध इति । अविनाभाविता तु सम्बन्धनियमः, न सम्बन्ध इत्याह — सम्बन्धेति । इदं च 'निष्कृष्टेऽर्थे नियम्यते' इत्यत्रोक्तमस्माभिः । तस्मादिति पदानुषङ्गेणोपसंहृतमिति वेदि-

यथैव गमकश्शब्दो व्यवहारात् प्रतीयते
तथैव शक्तिविज्ञानं तस्योपायोऽवगम्यते ॥ ३४ ॥

स्वरूपग्रहणं चास्य यथा व्याप्रियते फले ।
तथा सम्बन्धविज्ञानं नाशक्तिस्तत्कृता भवेत् ॥

तव्यम् । अन्वयव्यतिरेकाविनाभावश्शब्दौ पर्यायाविति नार्थभेदश्शङ्कितव्य इति ॥ ३१, ३२ ॥

'यदि प्रत्यायकः' इति भाष्यकारेण प्रयोगोऽन्तर्णीतः, तमाह — सम्बन्धेति । देवदत्तादयो हि यदृच्छाशब्दा यत्रैव सङ्केत्यन्ते तमेव प्रतिपादयन्ति । न चैषां क्वचिदपि स्वाभाविकी शक्तिः । तदयं प्रयोगार्थः — गवादिशब्दो धर्मी, नाभिधाशक्त इति साध्यम्, उपायान्तरापेक्षत्वादिति हेतुः । यदुपायान्तरापेक्षं तन्न स्वरूपतश्शक्तम्, देवदत्तादिपदमिव सङ्केतग्रहणापेक्षमिति ॥ ३३ ॥

अत्र भाष्यकारेण 'यदि प्रत्यायकश्शब्दः प्रथमश्रुतः किं न प्रत्याययति' इति परिचोद्य 'सर्वत्र नो दर्शनं प्रमाणम्' इत्यादिना दर्शनबलेन गृहीतशक्तिकः प्रत्याययतीति परिहार उक्तः, तद्दर्शयति — यथैवेति । अस्यार्थः — गमकत्वमेव तावत् शब्दस्य किमभ्युपगम्यते, व्यवहारदर्शनबलेनेति चेत्, समानमिदं शक्तिसंवेदनेऽपि । न ह्यविदितशक्तयश्शब्दादर्थमवयन्तो दृश्यन्त इति ॥ ३४ ॥

स्यादेतत् — प्रकाशकाः प्रदीपादयोऽविदितसम्बन्धा अपि स्वार्थं प्रकाशयन्तो दृश्यन्ते, तद्विधर्मा च शब्दः,' अतो न प्रकाशक इति । तन्नैवम्, शक्तिवैलक्षण्यात् । विचित्रशक्तयोऽपि हि भावाः । तत्प्रदीपः प्रत्यक्षपरिकरतयाऽगृहीतसम्बन्धोऽपि प्रकाशयतु नाम । नैतावता शब्देनापि तद्धर्मेण भवितव्यम् । अतोऽयमपर्यनुयोगः । अपि च व्रीह्यादयोऽगृहीतस्वरूपा अपि कार्यमारभन्त एवेति शब्दे तद्धर्मः किं नारोप्यते । कारकहेतवो हि व्रीह्यादयः, शब्दस्तु ज्ञापकहेतुः । अतोऽपेक्षते स्वरूपग्रहणमिति चेत् । केन वेदमाज्ञापितं ज्ञापकेन स्वरूपग्रहणमपेक्षितव्यं न सम्बन्धग्रहणमिति, दर्शनबलेनेति चेत्, समानमिदं सम्बन्धग्रहणापे-



यत्साधकतमत्वेन कस्यचित् किञ्चिदुच्यते ।
तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ॥ ३६ ॥

न हि तत्कारणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ ३७ ॥

प्रत्यात्मनियतत्वाद्वा यथैव करणं भवेत् ।
बाह्यान्तरविभागेन क्वचित् स्याद् वा विवक्षया ॥ ३८ ॥

उद्दिश्यो ह्युपकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा मयैतेन दृष्टं दीपेन वान्यथा ॥ ३९ ॥

क्षायामपि, दर्शनबलादेव हि लिङ्गशब्दादयो ज्ञापकविशेषास्सम्बन्धग्रहणमपेक्षन्ते । न चक्षुरादयः । सर्वत्र हि नो दर्शनं प्रमाणम् । कारका चक्षुरादय इति नानुमन्यामहे, ज्ञानकारणस्यैव ज्ञापकत्वात्, तदेतदाह — स्वरूपेति ॥ ३५ ॥

ननु च सम्बन्धग्रहणात् प्रागर्थाभिधाने शब्दश्शक्तो न वा । यदि शक्तः, किं सम्बन्धग्रहणापेक्षया । न चेत् सम्बन्धग्रहणमेव हि तदापन्न्यायेन कारणमापद्येत, अत आह — यत्साधकतमेति । न तावत् सम्बन्धग्रहणात्पूर्वमशक्तमेव शब्दमवगच्छामः । न च शक्तस्यानुग्राहकापेक्षा स्वशक्तिं विह(रती? न्ती)ति ॥ ३६ ॥

किं पुनर्न विहन्यत आह — न हीति । यदि ह्यनुग्राहकापेक्षा स्वशक्तिं विहन्यात् सर्वमेव लौकिकं वैदिकं करणं करणतां जह्यात् । अपेक्षते हि सर्वमेव करणमितिकर्तव्यताजनितमनुग्रहमिति ॥ ३७ ॥

किञ्च — अस्तु तावदितिकर्तव्यतापेक्षा करणभावं न विहन्तीति, प्रत्युत तथापि नैव करणत्वं नास्ति, प्रतिकरणस्वरूपं तदपेक्षानियमादित्याह — प्रत्यात्मेति । नन्वेवमुभयसमवधानमेवान्तरेण कार्यानिष्पत्तेः कथं करणेतिकर्तव्यताविभागो दर्शयितव्यः, अत आह — बाह्यान्तरेति सार्धेन । यत्कार्यसिद्धौ सन्निहितं तत्करणमितरद् बाह्यमितिकर्तव्यतेति, बाह्यमपि क्वचिद् विवक्षातः कारकप्रवृत्तेः करणतया विवक्ष्यत इत्याह — क्वचित्स्यादिति ॥ ३८ ॥

नित्यवृत्तौ तु नान्येषां दृष्टिर्दीपमणेरपि ।
रूपादिदर्शने यस्मात् तस्माच्चक्षुः प्रकाशकम् ॥ ४० ॥
शरीरात्ममनोयोगात् साधारणतया बलात् ।
विज्ञानोत्पत्तिभावाच्च चक्षुः करणमिष्यते ॥ ४१ ॥
तथैवेहापि सम्बन्धज्ञानमङ्गं प्रसिद्धितः ।
गौरवात् करणत्वेन मतं चेत् केन वार्यते ॥ ४२ ॥
यथा चक्षुरितीदं तु व्यभिचारित्वमुच्यते ।
देवदत्तेऽपि चाव्यक्तां शक्तिमिच्छन्ति युक्तितः ॥ ४३ ॥

---

एतदेव दर्शयति — उक्तेश्च इति । ज्ञानोत्पत्तावन्तरङ्गमपि चक्षुर्न करणतया मन्यते, किन्तु कुतश्चित्तारतम्यविशेषाद् बाह्यमेव प्रदीपं करणतया विवक्षतीति ॥ ३९ ॥

स चायं विवक्षानिबन्धः करणभावः कादाचित्कः । नित्यवृत्तौ नित्यं तु कार्यसिद्धौ चान्तरस्य चक्षुषः करणत्वमवगम्यत इत्याह — नित्यवृत्ताविति । अन्येषां दृष्टिर्दर्शनं नास्तीत्यर्थः ॥ ४० ॥

नन्वस्तु विज्ञानकार्योत्पत्तिविशेषणात् प्रदीपापेक्षया चक्षुषः करणभावः, आत्ममनस्संयोगस्तु ज्ञानोत्पत्तावन्तरङ्गः, अतः कथं तदपेक्षया चक्षुषः करणत्वं भविष्यतीत्यत आह — शरीरेति । अयमभिप्रायः—नातिविशेष एव करणत्वे कारणम्, अपि तर्हि बाह्यप्रदीपाद्यपेक्षयातिशयः, आभ्यन्तरात्ममनस्संयोगापेक्षया त्वसाधारण्यम्, आत्ममनस्संयोगो हि रसादिज्ञानसाधारणो नाव्यभिचारितया रूपदर्शनकारणमिति शक्यतेऽवगन्तुम् । चक्षुषः पुनरसाधारणतयैव रूपज्ञाने कारणत्वमिति 'चक्षूरूपादिभेदस्तु' इत्यत्रोक्तमिति ॥ ४१ ॥

एवं च दृष्टान्ते विवक्षाधिकविशेषकृतकरणेतिकर्तव्यताविभागं दर्शयित्वा प्रकृते योजयति — तथैवेति । अनेन यदुदासमन्यायेन सम्बन्धग्रहणमेव कारणमापद्येतेत्युक्तं तदपि विवक्षाविशेषवशेनास्त्विति दर्शितमिति ॥ ४२ ॥

अपरमपि — 'यथा चक्षुर्दृष्टं न बाह्येन प्रकाशेन विना' इत्यादि परिहारभाष्यं, तस्याभिप्रायमाह — यथेति । चक्षुर्हि प्रदीपाद्युपायान्तरा-



प्रकाशेऽवस्थिते बाह्ये नान्धै रूपं प्रतीयते ।
फलानन्तर्यतश्चापि चक्षुः करणमिष्यते ॥ ४४ ॥
पुरुषाधीनविज्ञानस्तेभ्यः प्रागनिरूपितः ।
यस्संज्ञासंज्ञिसम्बन्धस्स चेष्टश्चेद् ध्रुवं कृतः ॥ ४५ ॥
भिन्नदेशाद्यधिष्ठानाद् यथा रज्जुघटादिषु ।
समं नास्त्यनयोः किञ्चित् तेनासङ्गतता स्वतः ॥ ४६ ॥

इति सम्बन्धाक्षेपवार्तिकम् ।

---

पेक्षमपि रूपप्रकाशने स्वभावतश्शक्तमित्यनैकान्तिको हेतुः । दृष्टान्तोऽपि साध्यविकल इत्याह — देवदत्तेति ॥ ४३ ॥

यदृच्छाशब्दानामपि ज्ञानसामर्थ्यं विद्यमानमेव नियोगेनाभिव्यज्यत इत्यध्यासवादे वर्णितम् । अत्र च यथा चक्षुरिति भाष्ये चक्षुषः करणभावो दर्शितः । कथं पुनस्तुल्येऽपि चक्षुःप्रदीपयोर्ज्ञानकारणत्वे चक्षुषः करणत्वमित्यत्रोपपत्तिमाह — प्रकाश इति । इदं च 'नित्यवृत्तौ' इत्यत्रोक्तमप्यधुना भाष्यसमर्थनार्थमुक्तमित्यपौनरुक्त्यमिति ॥ ४४ ॥

तदेवमुपपादितसंज्ञासंज्ञिसम्बन्धः कृतकत्वेन भाष्यकृताक्षितः — 'यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि' इति, तदेतद्वार्तिककारो दर्शयति — पुरुषेति । एवं चात्र प्रयोगः — यः संज्ञासंज्ञिसम्बन्धः स कृतकः, पुरुषापेक्षत्वात्, रज्जुघटसंयोगवदिति ॥ ४५ ॥

अपरमपि 'स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ' इत्यादि भाष्यं, तस्याभिप्रायमाह — भिन्नेति । अयमर्थः— यथा रज्जुसर्पादिषु भिन्नदेशकालाधिष्ठानेषु किञ्चिद् देशादि समं नास्ति, एवं तयोश्शब्दार्थयोः । अतस्तद्वदेव तावपि स्वभावतोऽसम्बन्धाविति । ईदृशी चात्र प्रयोगरचना — शब्दार्थौ स्वभावतोऽसङ्गतौ, असमदेशकालत्वात्, रज्ज्वादिवत् । तावेव न समदेशकालौ, भिन्नदेशाद्यधिष्ठानोपलम्भात्, तद्वदेवेति ॥ ४६ ॥

इत्युपाध्यायसुचरितमिश्रकृतौ संबन्धाक्षेप-
स्समाप्तः ॥

---

१. 'स्वरूपतोऽसम्बन्धावपि वाच्यवाचकशब्दौ' इति काशिकामातृकायां पाठः.

APPENDIX I.

मीमांसाश्लोकवार्त्तिककारिकाणां पाठभेदाः ।

Chowkamba Edition Reading.

| Chowkamba Edition Reading | T. S. S. page. | line. | Chowkamba Edition Reading | T. S. S. page. | line. |
|---|---|---|---|---|---|
| हेतुद्वये प्रयुक्ते च | २१ | ६ | गोत्वादिसाधा | ९९ | ६ |
| नाप्रयोजकः | ,, | ७ | शब्दलक्षणम् | १०५ | १ |
| अतः पृथक् | २५ | २ | न क्लिष्टमिति | ११० | ७ |
| ईदृशे | ,, | ४ | पुरुषापेक्षा देशाद्या | १११ | २ |
| विशिष्टार्थप्रतीता | २८ | ७ | तदाप्यत्र | ११३ | ३ |
| तत्रोत्तरं | ३१ | १ | अत्र प्रयुक्ता इष्यते | ११५ | ४ |
| तः स्फुटः | ,, | २ | कल्प्यते | ११९ | २ |
| देहाविशिष्टत्वे | ३३ | १ | नातिप्रपञ्चितः | ,, | ५ |
| विशिष्यते | ,, | १० | अनैकान्तात् | १२१ | १ |
| धीप्रमाणत्वं | ३६ | ६ | धर्माधर्मौ | १२२ | ५ |
| प्रतिपादनम् | ३७ | २ | विशिष्यातो | १२५ | २ |
| पूर्वपक्षो | ,, | ३ | शक्यत्वं पक्षो | १२६ | २ |
| तद्विपक्षाच्च | ४० | १ | न तावत्तत्र | १३० | ७ |
| ताद्रूप्येण परिच्छित्तिः | ४२ | १ | स त्वन्यगोचरः | १३३ | ६ |
| परिच्छेदे | ,, | ३ | पदार्थैक्यं | १३४ | ६ |
| मृषात्वे तु | ४७ | ३ | सम्बन्धः | १३९ | ६ |
| दिवाभुजो | ४९ | ५ | सामान्यानां | १४९ | १ |
| सत्साध्ये तदभावे वा | ५८ | १ | तथापरोऽपि | १५६ | ४ |
| द्विरनित्यतः | ,, | ४ | प्रलक्षणो ज्ञानात् | १६१ | १ |
| कारणं मतम् | ६० | २ | अन्यगम्येवं | १६४ | ३ |
| अत्रासाधारणो | ,, | ३ | उदाहरेत् | ,, | ८ |
| वायोरूपत्वेन | ६३ | २ | तु यत् स्वतन्त्रं | १६८ | ३ |
| त्वेवं प्रयुज्यते | ६७ | ३ | एवं सत्यपेक्षा | १७० | २ |
| समवायं यथेहायं | ६८ | ५ | अस्त्यनुमानता | १७१ | २ |
| अनहङ्कारिकत्वं | ७० | ३ | कार्यादर्शनतः | १७५ | ३ |
| उच्चार | ७२ | ३ | धर्माधर्मविशेषो | १८० | ४ |
| तयोर्यं न | ,, | ५ | नेश्वराज्ञया | १८६ | १ |
| तं च नापेक्षते | ७४ | ३ | कृतौ यत्र च | १८८ | ३ |
| सिद्धयैव | ७७ | २ | भिद्यते यदि | १९५ | ४ |
| साधने यद्यपि | ७८ | ३ | कारणादिनः | ,, | ६ |
| हि वक्ष्यते | ,, | ४ | आत्मनः परिणामो | १९८ | २ |
| अव्यपदेशस्य | ९२ | ३ | तत्सम्बन्धे सविशेषं तद्रूपं | २०३ | ५ |
| प्राग्ज्ञानम् | ९३ | ३ | अज्ञानपेक्षणात् | २०३ | ८ |
| तत्राभावस्य | ९४ | १ | अनैकान्ततो मतः | २०५ | ६ |

